SUSIDDHANTOTTAMA

# सुसिद्धान्तोत्तमः

श्रीगोस्वामिप्रियादासाचार्य्य विरचितः

तेनैव कृतया टीकया टिप्पण्या च समेतः

श्रीशिवरामपाण्डेयवैद्येन

स्वकीये-सिटी-एलबियन-यन्त्रालये-प्रयागे

श्रीसरयूप्रसादमिश्रेण

संशोध्य मुद्रितः

संवत् १९५७

कृष्णभक्तिरसास्वादरसिकानां मुदमयं ।
सम्पादितः सुसिद्धान्तोत्तम आम्नायतां मुदा ॥

विना मूल्यं वितीर्य्यंते

# सुसिद्धान्तोत्तमः ॥

श्रीराधावल्लभो जयतितराम् ॥

मूलम् (क) ॥

चन्द्रलालं गुरुं वन्दे मनसो दैवतं परम् ।
शब्दज्ञानविहीनैर्यः कारयेद् ग्रन्थमुत्तमम् ॥ १ ॥

टीका ॥

श्रीमद्भागवतीं भक्तिं मगाम्यात्मप्रसादिनीम् ।
सुसिद्धान्तोत्तमस्यास्य वक्ष्ये टीकामनुत्तमाम् ॥ १ ॥
प्रथमेऽस्मिंस्तु विश्रामे वेदवेदान्तरूपा ।
कथ्यते सुब्रमोदाय विश्वकारणनिर्णयः ॥ २ ॥
यतोऽस्मान्निर्णयादाशु भक्तिरात्मप्रसादनी ।
निस्सन्देहा भवत्यद्धा श्रीकृष्णे परमात्मनि ॥ ३ ॥

(क) मूलम् इत्यस्य स्थले कारिका इति आदर्शपुस्तके पाठः ।

प्रयोगा वैदिका ह्यस्मिन्सुशास्त्रे बहुधा कृताः ।
तदभ्यासेन संस्कारास्तस्मिंस्ते नु सुभाकराः ॥ ४ ॥
तस्मात्सद्भिर्न दातव्यं दूषणं खलु सात्त्वतैः ।
साधुत्वेन च सिद्धान्तदृष्ट्या शब्देष्वनन्धिया(क) ॥ ५ ॥

इह खलु सद्गुर्वनुग्रहतो लब्ध(ख)भक्त्यधिकारिणं भगवत्परमैहिकामुष्मिकेषु विरक्तं श्रीभगवत्प्राप्तिसाधनेषु तत्फलेषु च सन्दिहानमपि शान्तं सत्सङ्गप्रियमुपलभमानः परमकारुणिको भगवान् चन्द्रलालाख्याचार्यः प्रियादासान्तर्यामी तमेव ग्रन्थकारं कृत्वा तद्द्वारा सुसिद्धान्तोत्तमशास्त्रं विरच्य तस्य व्याख्यामपि चकार ।

तत्र ग्रन्थादौ निर्विघ्नशास्त्रसमाप्तिप्रतिबन्धकगणबाधकं सर्वमङ्गलकारकं त्रिविधानां नमस्कारात्मकाशीर्वादात्मकवस्तुनिर्देशात्मकानां मङ्गलानां मध्ये नमस्कारात्मकेन वस्तुनिर्देशात्मकं मङ्गलमाचरति । चन्द्रलालमिति । चन्द्रलालं गुरुं वन्देऽहं । चन्द्रं लालयति शिक्षयति पालयति यः स चन्द्रलालस्तमनिरुद्धमित्यर्थः । यतो मनसः परं दैवतम् । हेतुगर्भविशेषणमिदम् । मनसो दैवतं तु चन्द्रः । परं दैवतं तु स एवेश्वरः । चन्द्रमा मनसो जात इति श्रुतेः । तं कम् । तत्राह । यः शब्दज्ञानविहीनैर्व्याकरणाज्ञानविधुरैरस्मदादिभिरुत्तमं ग्रन्थं

(क) प्रथमे इत्यादिद्वित्रयश्लोकादारभ्य ध्ययस्यैतत्पञ्चमश्लोकपर्यन्तमन्यपुस्तके नास्ति ।
(ख) नुग्रहतलब्ध इति पाठान्तरम् ।

सुसिद्धान्तोत्तमाख्यं कारयेत् । तस्माच्छास्त्रकारं भगवन्तमस्म-नोऽन्तर्यामिणमनिरुद्धं ज्ञात्वा भगवद्भक्तिमद्भिः करुणापारावारैर्भक्तिप्रवर्त्तकैः सात्त्वतैरनुरागेण ग्रन्थोऽयमवलोकनीयः । यतोऽच्युतभक्तिप्रतिपादकोऽद्भुतानन्दप्रदश्च । हरिभक्तिप्रियाणाम्भागवतानाम्भक्तिशास्त्रे परमप्रीतिरस्तीति ज्ञात्वा मया प्रेरणा कृता । सा क्षन्तव्या स्वसाधुत्वेन सर्वैः कनिष्ठमध्यमोत्तमैर्भागवतैर्मां स्वपुत्रं भृत्यं वा मत्वेति । न चाहारनिद्राद्याकुलस्य गुरोर्जीवत्वं प्रसिद्धम् । तद्धर्मत्वात्कथमीश्वरत्वं तदिति वाच्यम् । यतस्तस्मिन्नीश्वरे गुरौ तत्त्वन्तु गुर्वभक्तेर्जीवाज्ञानेन कल्पितम् । यथा ध्वान्ताहतलोचनेन सुतप्तचामीकरमालायां सर्पत्वं शीतलमधुररसप्रदायां सितायां पित्तामयदोषदूषितेन कटुत्वं च । तथा तत्त्वं तस्मिन्नज्ञानकल्पितम् । यतः स्वाभेदेनाह तदीश्वरत्वम्भगवान् ।

आचार्य्यम्मां विजानीयान्नावमन्येत कर्हिचित् ।
न मर्त्यबुद्ध्यासूयेत सर्वदेवमयो गुरुरिति (१) ॥

(क) (१) आचार्यम्मामित्यादिश्लोकस्यार्थः । मद्भक्तिकामो जीव आचार्यं सद्गुरुं मां सच्चिदानन्दविग्रहं विजानीयात् विशेषेण मद्रूपत्वेन जानीयात् । न तु मम भा-

(क) इतःकाद्यारम्भमात्रादिरूपस्य यानि सूक्ष्मश्लोकाद्यात्मकग्रन्थानि, उपन्यस्यैतद्ग्रन्थसूत्राणि बोधयानि कर्त्तुमिच्छ तानि सर्वाणि स्वयमेव तत्र तत्र व्याख्यातवन्तौ । ता एव व्याख्या टीकाया अधस्तात् अत्र टिप्पणीरूपेण पृथक् मुद्रापितवन्तः ।

यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ।
मर्त्यासद्धीः श्रुतं तस्य सर्वं कुञ्जरशौचवदिति

नारदोक्तेः (१)॥

वबुद्ध्या । तदाहारादिधर्मत्वेन मनुष्यत्वबुद्ध्या तन्नासूयेत । यतः सर्वदेवमयो गुरुः । सर्वदेवानामाश्रयभूतः । अत(क)-स्तस्मिन्ताद्यर्पणेन तत्सम्मानं कुर्यात् । कर्हिचित्तस्माद्-न्यस्माद्वा प्राणापत्प्राप्तावपि तन्नावमन्येत । यत(ख)स्त-स्मिञ्जीवबुद्धौ दोषः स्यात् ॥

(१) यस्य साक्षादित्यादिश्लोकस्यार्थः । यस्य जी-वस्य गुरौ 'मर्त्यासद्धीर्मर्त्योऽयन्तद्धर्मादित्यसती धीर्बुद्धि-स्तस्य सर्वं श्रुतं वेदान्तश्रवणं गजस्नानवदसदेव भवति । श्रुतमिति साधनश्रेष्ठाभिप्रायेणोक्तम् । अन्यानि पुण्यादीनि तत्फलानि च व्यर्थानि भवन्तीति किं वक्तव्यम् । कारणा-भावे कार्याभावः प्रसिद्धः ।'किंविशिष्टे गुरौ । साक्षाद्भ-गवति । भगोऽस्यास्तीति भगवान् । भग ऐश्वर्ये ।

ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।
ज्ञानवैराग्ययोश्चैव षण्णां भग इतीर्यत(ग) इति ॥

सर्वैश्वर्यशालिनीत्यर्थः । पुनः कीदृशे । ज्ञान-दीपप्रदे मन्त्रज्ञानदीतरीत्यर्थः ।

(क) यत इति पाठान्तरम् । (ख) अत इति पा० ।
(ग) इतीङ्गना इति पा० ।

तस्माद् गुरावीश्वरत्वमेव ।

स वै सत्कर्मणां साक्षाद् द्विजातिरिह सम्भवः ।
आद्योऽङ्ग यत्राश्रमिणां यथाहं ज्ञानदो गुरुरिति

भगवदुक्तेः (१) ॥

(१) स वै सत्कर्मणामित्यादिश्लोकस्यार्थस्तु । वै निश्चयार्थे । यत्र यस्मिन्निति प्रथमं जीवस्य जनकवीर्ये संभवात् । यतो वा जीवस्येह देहोत्पत्तिः । स पिता तस्याद्यो गुरुः । देहोत्पत्त्योपनयनादिलाभादतो देववत्पूज्येऽपि तस्मिञ्जीवत्वम् । तस्य पुत्रज्ञानभक्तिसाधनबाधकगुणत्वात् । अङ्ग हे सुदामन् द्विजातेर्ब्राह्मणादेर्वैश्यान्तस्य सत्कर्मणामुपनयनादीनां यत्र संभवः । स कर्मदो द्वितीयो गुरुः । तस्माज्जनकादधिकः पूज्यः । शुभाशुभकर्मज्ञानप्रदत्वात् । तस्मिन्नपि जीवत्वमेव । कर्मकलापाग्रहत्वात् । आश्रमिणां वटुगृहस्थवानप्रस्थयतीनां ज्ञानदो मन्त्रज्ञानदस्तृतीयो गुरुस्तु यथाहं जीवनिःश्रेयसाय चिद्विग्रहेणावतीर्णस्तथा सोऽपि । यतः सोऽहमहमपि सः । यद्वा । यथा तृतीयोऽहं पूज्यस्तथा कर्मदोऽपि । अतस्तस्मिन्मद्रूपत्वमीश्वरत्वम् ।

प्रणम्य श्रीकरं कृष्णं राधिकावल्लभं परम् ।
सुसिद्धान्तोत्तमं वक्ष्ये सर्वसन्देहनुत्तये ॥२॥

एवं नदीश्वरत्वमुक्त्वा तत्सेवाफलमाह ।

नाहमिज्याप्रजातिभ्यां तपसोपशमेन च ।
तुष्येयं सर्वभूतात्मा गुरुशुश्रूषया यथेति (१) ॥ १ ॥

एवं श्रीगुरुं प्रणम्य श्रीमिष्टोत्तमप्रणत्या ग्रन्थमारभते। प्रणम्येति ॥ २ ॥

---

(१) नाहमिज्याप्रजातिभ्यामित्यादिश्लोकस्यार्थः । इज्या अग्निहोत्रादिः । प्रजातिर्ब्रह्मचर्यम् । तपः कृच्छ्रचान्द्रायणादि । उपशमः शान्तिः कामादिमलत्यागः । एतैर्गृहस्थब्रह्मचारिवानप्रस्थयतिधर्मैः सर्वभूतात्माहं तथा न तुष्येयं यथा गुरुशुश्रूषयेति ।

तेषां वट्वादीनां वृत्तिभेदेन षोडश भेदाः । तत्र ब्रह्मचर्यञ्चतुर्विधम् ।

प्राजापत्यं च सावित्र्यं ब्राह्मं चाथ बृहत्तथेत्युक्तेः ।

अस्या उक्तेरर्थः । त्रिपदीग्रहणान्तं त्रिरात्रव्रतं प्राजापत्यम् । संवत्सरव्रतान्तं सावित्रम् । वेदग्रहणान्तं ब्राह्मम् । नैष्ठिकं बृहदिति ।

शास्त्रेष्वियानेव हि सिद्धपुङ्गवै-
विचारितेष्वात्मनिमग्नया धिया ।
कृतो विमन्त्रैरपि वेदसागरे
सिद्धान्तवर्यो हि महत्सभासु च ॥३॥

तमेव सिद्धान्तोत्तममाह । शास्त्रेष्वियानिति द्वाभ्याम् । आत्मनि परमात्मनि भगवति निमग्ना या धीर्बुद्धिस्तयात्मनिमग्नया धिया सिद्धपुङ्गवैः कपिलादिभिः शास्त्रेषु इयानेव सिद्धान्तवर्यः कृतः । स कस्तत्राह । गतमत्सरादिभिः आदिपदेन मुक्तमुमुक्षुबद्धैरनुरन्या श्रीकृष्णः परिसेव्य इति । परितोभूतानुकूल्येनेत्यर्थः । कीदृशेषु शास्त्रेषु । विचारितेषु निगमागमदृष्ट्या निर्णीतेषु भागवतादिष्वित्यर्थः । हि निश्चयार्थे । विमन्त्रैरपि विशेषेण मन्त्रा विमन्त्रास्तैः(क) कर्मवादनिषेधेन ब्रह्मप्रतिपादकैर्वेदसागरेऽपीयानेव सिद्धान्तवर्यो हि कृतः । चकारात् अन्यैरपि व्यासादिभिर्निगमागमविचारेण । महतां युधिष्ठिरादीनां सभास्वपि ॥ ३ ॥

गार्हस्थ्यमपि चतुर्विधम् ।
वार्त्तासञ्चयशालीनशिलोञ्छ इति वै गृह इति
भागवतोक्तेः ।

(क) विशेषार्थं वि इति निपातस्य प्रयुक्तत्वात् एवैतद्ग्रन्थकार कश्चित् कश्चित् सुसिद्धान्तोत्तम इतिनामस्थले विसिद्धान्तोत्तम इति लिखति ।

यः सेश्वरस्यास्य च कारणं सतो
ब्रह्मादिशब्दैरनुशब्दितः परः(क)
स भक्त्यधीनो गतमत्सरादिभिः
कृष्णोऽनुरत्या परिसेव्य आत्मदः॥४॥

स कः श्रीकृष्णस्तत्राह। यः अस्य सतो विश्वस्य कारणं अभिन्नोपादाननिमित्तकारणमित्यर्थः। कीदृशस्यास्य। सेश्वरस्य ईश्वरेण सह वर्त्तमानस्य। यस्येदं सेश्वरं वश इति भागवते शुकोक्तेः।

एकायनोऽसौ द्विफलस्त्रिमूलश्चतूरसः पञ्चविधः षडात्मा।
सप्तत्वगष्टविटपो नवाक्षो दशच्छदी द्विखगो ह्यादिवृक्षः॥

वानप्रस्था अपि चत्वारः।

वैखानसा(ख) वालखिल्यौदुम्बराः फेनपा वने इत्युक्तेः।
अस्या उक्तेरर्थः। अकृष्टपच्यवृत्तयो वैखानसाः। नवान्ने लब्धे पूर्वसञ्चितान्नत्यागिनो वालखिल्याः। प्रातरुत्थाय यां दिशं प्रथमं पश्यन्ति तत आहृतैः फलादिभिर्जीवन्त औदुम्बराः। स्वयम्पतितैः फलादिभिर्जीवन्तः फेनपाः।
परिव्राजका अपि चत्वारः।

न्यासे कुटीचकः पूर्वं बह्वोदो हंसनिष्क्रियावित्युक्तेः।

(क) ग्रां[illegible] पर. इ. न पा०। (ख) वैखानसो इति पा०।

त्वमेक एवास्य सतः प्रसूतिस्त्वं संनिधानं त्वमनुग्रहश्च ।
त्वन्मायया संवृतचेतसस्त्वां पश्यन्ति नाना न विपश्चितो ये ॥
इति चतुराननोक्तेः ॥ (१) ॥

श्रुतावपि ब्रह्मचारिणश्चतुर्विधा इत्युपक्रम्य पठ्यते। परिव्राजकाश्च चतुर्विधा भवन्ति। सपुत्रगृहेषु भिक्षाचर्यां चरन्तः आत्मानं प्रार्थयन्ते कुटीचकाः। बहूदकास्तु त्रिदण्डकमण्डलुधराः शिखायज्ञोपवीतकौपीनकाषाय(क)-वेषधारिणः। ज्ञानाभ्यासनिष्ठा हंसाः। प्राप्ततत्त्वाः परमहंसाः।तेषां धर्मैर्भगवान्न तुष्यति। यया गुरुशुश्रूषया तुष्येत्तस्माद् गुरुसेवा साधनोत्तमा ज्ञेया।

(१) एकायनोऽसावित्यादेः श्लोकद्वयस्यार्थः। एवंरूपस्य सतः कार्यस्य संसारवृक्षस्य त्वमेक एव प्रसूतिः प्रकर्षेण सूतिः जन्म यस्मात्स प्रसूतिः। एवकारोऽन्यकारणव्यावृत्त्यर्थः। त्वमेवोपादाननिमित्तकारणमित्यर्थः। त्वमेव संनिधानं सम्यङ्नि(ख)धीयतेऽस्मिन्निति सन्निधानं लयस्थानमित्यर्थः। त्वमनुग्रहश्च अनुगृह्णातीत्यनुग्रहः पालकः। ननु ब्रह्मादयो विश्वोद्भवादिकर्मकारकाः प्रसिद्धाः। कथमहमेवेति चेत्तत्राह। त्वन्माययेति। तत्र मायया संवृतं पिहितं चेतो ज्ञानं येषां ते त्वां 'नानैव पश्यन्ति न विपश्चितो ये'। ये विद्वांसस्ते तथा न पश्यन्ति। ते

(क) कषाय इति पा०। (ख) सम्यङ्नि इति पा०।

तु विघ्नकारणत्वेन त्वामेव पश्यन्तीत्यर्थः । कस्य सतस्त-त्राह । योऽसावात्मादिवृक्षः । वृश्च्यत इति समष्टिव्यष्टिदेह-रूपः संसारवृक्ष एकायनः एका प्रकृतिरयनमाश्रयो ऽस्य सः । पुनः द्विफलः । द्वे सुखदुःखे फले पुण्यपापपुष्पजे यस्य सः । पुनः कीदृशः । त्रिमूलस्त्रयो गुणा मूलानि यस्य स त्रिमूलः । पुनः किंविशिष्टः । चतूरसः । धर्मार्थकाममोक्षाश्च-त्वारो रसा यस्य सः । पुनः कीदृशः । पञ्चविधः । त्वग्घ्रा-णजिह्वाश्रवणादिज्ञानभेदात्पञ्च प्रकारा यस्य सः । यथैक-स्मिन्वृक्षे वृक्षान्तराणां स्कन्धास्तथा । पुनः षडात्मा । षडूर्मयः (क)जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीति षडूर्मयः । प्राणस्य क्षुत्पिपासे द्वे शोकमोहौ स-यात्मनः । जरामृत्यू शरीरस्य षडूर्मिरहितः शिव इति स्पर्श(ख)त्वाच्छोकमोहावपि यस्य । यद्वा । आत्मानः स्वभा-वा धर्माः षडेव जायत इत्यादयो नश्यतीत्यन्ता यस्य सः । पुनः सप्तत्वक् । सप्त धातवस्त्वचो यस्य सः । पुनः कथ-म्भूतः । अष्टविटपः । पञ्च भूतानि मनो बुद्धिरहङ्कारश्चेत्य-ष्टौ विटपा उपशाखाविस्तारा यस्य सः । पुनः नवाक्षः । गुदोपस्थमुखनासिकाचक्षुःश्रवणरूपाणि नव च्छिद्राणि यस्य सः । पुनः । दशच्छदी । दश प्राणाश्छदाः पत्राणि वि-द्यन्ते यस्य स दशच्छदी । जीवाजीवधामत्वात् । पुनः

(क) जायते इत्यारभ्य शिव इत्यन्तिपर्यन्तमादर्शपुस्तकान्तरे ना० ।
(ख) भक्तःस्पर्श इति पा० ।

कीदृशः। द्विखगः। द्वौ जीवेश्वरौ खगौ यस्मिन्स द्विखगः। इत्थंभूतस्य वृक्षस्य त्वमेव कारणमित्यर्थः। द्विखग इत्यनेनैव तयोर्वृक्षाद्भिन्नत्वं जीवेश्वरयोरुक्तम्। न तु कार्यत्वम्। यत ईश्वरस्तु तस्य कारणस्याभेदस्वरूपो जीवस्तु नित्यस्तदंशः। वेदान्तेऽपि।

अथातो ब्रह्मजिज्ञासा। जन्माद्यस्य यतः।

अनयोर्वेदान्तसूत्रयोरर्थः। अथशब्द आनन्तर्यार्थे। अतःशब्दो हेत्वर्थे च (क)। (ख)अथ साधनचतुष्टय(ग)प्राप्त्यनन्तरम्। अतस्तत्प्राप्तेरेव हेतोर्ब्रह्मजिज्ञासा कर्त्तव्या। मुमुक्षुभिरिति शेषः। तस्मिन्ननुरागायेत्यर्थः। (घ)तस्य ब्रह्मणो लक्षणमाह। अस्य प्रत्यक्षाद्युपस्थितस्य विश्वस्य जन्मादि जन्मस्थितिभङ्गा यतो यस्माद्भवन्ति तद् ब्रह्म। तस्य जिज्ञासेत्यर्थः। तस्मिन्ननुरागाय जिज्ञासोपपाद्यते। तत्कुतः। वेदान्तोपसंहारवचनात्। तद्यथा। दर्शयतश्चैवं प्रत्यक्षानुमाने। अस्य सूत्रस्यार्थः। एवं पूर्वोक्तप्रकारं प्रत्यक्षानुमाने दर्शयतः। प्रत्यक्षं तु।

(क) हेतु इति पाठान्तरम्।

(ख) आदर्शपुस्तकान्तरे अत्र जायते अस्ति वर्धते परिणमते अपक्षीयते नश्यतीति षड्र्मयः। प्राणस्य क्षुत्पिपासे द्वे शोकमोहौ मनसः। जरामृत्यू शरीरस्य षडूर्मिरहितः शिव इत्यभ्यधिकं वर्त्तते।

(ग) अथ साधन इत्यस्य स्थाने हेतु इत्यं मातृमात्रं पा०।

(घ) तस्य ब्रह्मणो इत्यारभ्य जिज्ञासोपपाद्यते इतिपर्यन्तम् आद० पु० स्थ० अत्र ना०।

तं यथा यथोपासते तदेव भवतीति श्रुतेः ।

अनुमानं तु ॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।

तं तमेवैति कौन्तेय सदा तद्भावभावितः ।

तस्मात्सर्वेषु कालेषु मामनुस्मर युद्ध्य चेति

भगवदुक्तेः ।

यत(क)स्तज्ज्ञानं विना स्मरणात्मकं भजनन्न संभवति। भजनं विना न ब्रह्मरूपत्वम् । तस्मात्तस्मिन्ननुरागाय जिज्ञासा कर्त्तव्या(ख) ।

ब्रह्मकाण्डन्तु भक्तौ तदनुज्ञानाय सामान्यादिति

शाण्डिल्यसूत्रोक्तेः ।

अस्य शाण्डिल्यसूत्रस्यायम्भावः । जगत्कर्तृत्वैश्वर्यं विना भगवत्समसुखत्वेन तत्साम्यं लभते ।

भोगमात्रसाम्यलिङ्गादिति

वेदान्तसूत्रात् ।

अतो भक्त्यर्थमेव ब्रह्मजिज्ञासा कर्तव्या । ज्ञातुमिच्छा जिज्ञासा । जिज्ञासाशब्दस्य(ग) ब्रह्माहमस्मीति

(क) अत इति पा० ।

(ख) आद० पु० स्त० तस्मादित्या० कर्त्तव्या इतिपर्य० ना० ।

(ग) आद० पु० स्त० ब्रह्माहमित्यादि० रूढं मंतिपर्य० ना० ।

विचारे जिज्ञासा इत्यर्थान्तरकल्पना स्वप्नप्रियैव । (क)जन्माद्यस्य यत इति(ख) श्रुतावपि यथा(ग) ।

यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिविशन्ति(घ) तद् ब्रह्म विजिज्ञासस्वेति । अस्याः श्रुतेरर्थः । वै निश्चयार्थे । यत इमानि दृष्टिगोचराणि भूतानि पृथिव्यन्तान्याकाशादीनि जायन्ते । यत इत्यनेनापादाननिर्देशेन तन्निमित्तकारणत्वमुक्तम् । यद् यस्मिन्प्रयन्ति भूतानि गच्छन्ति । तदनन्तरं अभिविशन्ति(ङ) तादात्म्यमेव प्रतिपद्यन्ते । यदित्याधारनिर्देशेन तदुपादानकारणत्वम् । जातानि भूतानि येन जीवन्ति प्राणान्धारयन्ति । येनेति करणनिर्देशेन तत्कारणाकारणाभ्यां परमकारणत्वमुक्तम् । तद् ब्रह्म विशेषेण ज्ञातुमिच्छेति पितुर्वाक्यं श्रुत्वा स ब्राह्मणस्तपस्तप्त्वान्नं ब्रह्मेति व्यजानात् ।

अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते ।

---

(क) आ० पु० नं० अत्र तस्य ब्रह्मणो लक्षणमाह । अस्य प्रत्यक्षाद्युपस्थितस्य विश्वस्य जन्मादि जन्मस्थितिभङ्गं यतो यस्माद्भवन्ति तद् ब्रह्म। तस्य जिज्ञासेत्यर्थः इत्यधिकं वर्तते ।

(ख) आ० पु० नं० जन्माद्यस्य यत इति ना० ।

(ग) आ० पु० नं० यथा ना० ।

(घ) संविशन्ति इति पा० ।

(ङ) संविशन्ति इति पा० ।

अन्नेन जातानि जीवन्ति । अन्नं प्रयन्त्यभि( क ) विशन्तीति पुत्रवाक्यं श्रुत्वा तज्जनकेनोक्तम् । तपसा ब्रह्म विजिज्ञासस्व । स पुनः पुनस्तपस्तप्त्वा प्राणो ब्रह्मेति मनो ब्रह्मेति विज्ञानं ब्रह्मेति ज्ञात्वा ज्ञात्वा(ख) तपसा क्षीणकल्मषः साधनचतुष्टयसंपन्नश्चरमावृत्त्यानन्दो ब्रह्मेति व्यजानात् ॥

आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रत्ययन्त्यभि( ग )-(घ)विशन्तीति। आनन्दो(ङ) ब्रह्मेति ज्ञात्वा तेनोक्तम्। मयानन्दं ब्रह्म ज्ञातमिति। तद्वाक्यं श्रुत्वा तज्जनको मुदमाप । अतोऽन्नं ब्रह्मेत्यादीनि वाक्यानि गौणानि ज्ञातव्यानि । आनन्दं ब्रह्मैव जगत्कारणम् । साधनचतुष्टयं तु नित्यानित्यवस्तुविवेकः । ऐहिकामुष्मिकफलभोगवैराग्यम् । शमादिषट्संपद् । मुमुक्षा च । शमदमोपरतितितिक्षाश्रद्धासमाधानानीति शमादिषट्कास्तेषां संपद् इहामुत्र भोगवैराग्यमित्युक्तेनैव वशीकाराख्यं वैराग्यं ज्ञातव्यम् । यतस्तद्वैराग्यं(च) तु चतुर्विधम्। यतमानव्यतिरेकैकेन्द्रियवशीकाराख्य-

( क ) संविशन्ति इति पा० ।

( ख ) आ० पु० स्त० ज्ञात्वा इत्येकमेवास्ति ।

( ग ) प्रयन्त्यभि इति पा० ।

( घ ) संविशन्तीति पा० ।

( ङ ) आनन्दम् इति पा० ।

( च ) आ० पु० स्त० वैराग्यम् इति पा० ।

भेदात् । तेषां लक्षणानि यथा(क) । महता प्रयासेनापि चित्तदोषानवश्यं निराकरिष्यामीत्यध्यवसायात्मकं प्राथम्यं यतमानसंज्ञम् । ततो निरन्तरमुपायानुष्ठाने क्रियमाणे एतावन्तो दोषा इदानीं क्षीणा एतावन्तोऽवशिष्यन्त इति चिकित्सकवत्प्रतिक्षणमध्यवसायात्मकं द्वितीयं व्यतिरेकसंज्ञम् । एवं प्रतिक्षणं विषयेष्वप्रवृत्तिरन्तरवासनायां सत्यां तृतीयमेकेन्द्रियसंज्ञम् । एवमभ्यासादैहिकामुष्मिकफलभोगपरित्यागात्मकं वशीकाराख्यम् । तद्वशीकाराख्यवैराग्ययुक्तस्य ब्रह्मजिज्ञासायामधिकारः । नान्येषां विषयासक्तानां वादविवादप्रियाणां च ।

परीक्ष्य लोकान् कर्मचितान्ब्राह्मणो निर्वेदमायात् । नास्त्यकृतः कृतेन ।

तद्विज्ञानार्थं गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठमिति श्रुतेः ।

अस्याः श्रुतेरर्थः । कर्मचितान्सर्वांल्लोकान्क्षयिष्णुत्वेन परीक्ष्य ज्ञात्वा ब्राह्मणो निर्वेदं वैराग्यमायात् । किं कृत्वा । नास्ति कोऽपि पदार्थोऽकृतः । पदार्थगणस्तु कर्मकृतः । अतोऽनित्यः । कर्मकार्यत्वात् । तेन कृतेन किं सुखं मे । न किमपि । यद्वा । कृतेन कर्मणा अकृतो भक्तियोगो मोक्षो वा नास्ति । यद्वा । अकृतः कोऽपि देवो नास्ति ।

(क) आ० पु० स्त० यथा इति ना० ।

ननु वेदवेदान्तयोस्त्वानन्दं ब्रह्म जगत्कारणमुक्तं न तु श्रीकृष्ण इति चेन्न । तत्राह तद्विशेषणम् । कीदृशः कृष्णः । ब्रह्मादिशब्दैरनुशब्दितः । आदिपदेन ब्रह्मात्मभगवच्छब्दैः कथितः । कुतः । तत्सच्चिदानन्दत्वात् ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत इति श्रुतेः (१) ॥

सर्वे कृतास्तेन कृतेन देवगणेन किमिति ज्ञात्वा तत्तस्याकृतस्य कालत्रयाबाधि(क) वर्त्तमानस्य जगत्कारणस्य ब्रह्मणो विज्ञानार्थं गुरुमेवाभिगच्छेत् । कथम्भूतो ब्राह्मणः । समित्पाणिः । रिक्तहस्तस्तु नोपेयाद्राजानं देवतां(ख) गुरुमित्यादिना रिक्तहस्तगमनस्य निषेधात्समित्पाणिरित्यनेन द्रव्याभावदर्शनेन तद्वैराग्यमाविष्कृतम् । कीदृशं गुरुम् । श्रोत्रियम् । सदाचारनिष्ठं शमदमादियुक्तम् । ब्रह्मनिष्ठं च । शिष्यसेवाद्रव्यादिस्पृहाशून्यम् । अवैदिको गुरुर्न शिष्यसंदेहनिवर्त्तको भवति । ब्रह्मानिष्ठो न तदनुभवकारकः । अतो ब्रह्मनिष्ठादिकं विशेषणम् ।

(१) कृषिर्भूवाचक इत्यादेः श्लोकस्यार्थः । भूवाचकः सत्तावाचकः । भू सत्तायामित्युक्तेः । निर्वृतिवाचक आनन्द-

(क) कालत्रयाबाधित इति पा० ।

(ख) भिषजम इति पा० ।

यतः सत्त्वाद् ब्रह्मेत्युपनिषद्भिः । चित्त्वात्परमात्मेति हैरण्यगर्भैः(क) । आनन्दत्वाद् भगवानिति सात्त्वतैः शब्द्यते कथ्यते । अयम्भावः । श्रीकृष्णस्य विशेष्यस्य विशेषणानि ब्रह्मादीनि । अतः कालत्रयाबाधितवर्त्तमानः श्रीकृष्ण एव विश्वकारणम् ॥

अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ।
पश्चादहं यदेतच्च योऽवशिष्येत सोऽस्म्यहमिति ॥
गतिर्भर्त्ता प्रभुः साक्षी निवासः शरणं सुहृत् ।
प्रभवः प्रलयः स्थानं निधानं वीजमव्ययमिति

गीताभागवतयोर्भगवदुक्तेः (१)॥

वाचकः । तयोरैक्यं सत्तानन्दयोरैक्यं सदानन्दत्वम् । प्रत्याहारवदाद्यन्ताभ्यां सदानन्दाभ्यां चिद्ग्रहणात्सच्चिदानन्दः कृष्ण इत्यभिधीयते( ख ) ॥

( १ ) अहमेवासमित्यादेः श्लोकस्यार्थः ॥ अग्रे सृष्टयग्रे अहमेव केवलमासमेवेत्यनेन जगत्कारणप्रागभाववादिनाम्

( क ) हिरण्यगर्भैः इति पा० ।

(ख) कृष्णनामनि शक्तिः । कृष्टश्चासौ णश्चेति कृष्णः । जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था । पदे वर्णवत्वृत्तौ पदानामानर्थक्यमित्यर्थः । अयं भावः । समासशक्त्यैव राजविशिष्टपुरुषभानसम्भवे न राजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम् । वृषभयानकादिपदेषु वृषयानादिपदानामिव । अन्यथा राजपदेन विग्रहवाक्य इव राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वात् ऋद्धस्य राजपुरुष इत्यर्थेन ऋद्धस्य राजपुरुष इत्यस्याप्यापत्तिरिति । तदुक्तम् । समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् । बहूनां वृत्तिधर्माणां वचनैरेव साधने । स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रित इति । तथा च कृष्णपदे शक्तिः ॥ आद०पु० न० [illegible] नास्ति ।

(अनादिसान्तवादिनां)(क) जैनानां मतं निरस्तम्। अन्यत्(ख) किमपि यत्सत्कार्यं यदसत्कारणं परं प्रधानं न। तत्तदा मदात्मकत्वान्मत्तः पृथक् सत्त्वाभावात्सूक्ष्मरूपेण मयि वर्त्तत इत्यर्थः। पश्चादहमित्यनेन प्रागभावतुल्यत्ववादिनां प्रध्वंसाभावमताश्रयाणां (साद्यनन्तवादिनां)(ग)देहात्मनिष्ठानां च सिद्धान्तो निरस्तः। एतत्प्रत्यक्षाद्युपस्थितं जगदहमेवेत्यनेन जगदीश्वरयोः कार्यकारणयोरन्योन्याभाववादिनां (सादिसान्तभाववादिनां)(घ) तार्किकाणां सिद्धान्तोऽपि। अग्रेऽहमासमित्यनेन तस्मात्पृथक्कालसत्त्वस्य बोधो जातस्तन्निराकरोति। काले विलीनेऽपि योऽवशिष्येत सोऽप्यहमेवेत्यनेनात्यन्ताभाववादिनां शून्यमताश्रयाणां (अनाद्यनन्तात्यन्ताभाववादिनां)(ङ) सिद्धान्तश्च। एवं स्वस्य नित्यवर्त्तमानत्वमुक्त्वा परमकारणत्वमाह। अस्य विश्वस्याहमेव गतिः। यतः प्रभवः प्रकर्षेण भवो जन्म यस्मात्स प्रभवोऽहम्। प्रकर्षेण लयो यस्मिन्। यतो निवासः(च) स्थानं पालनं यस्मात्सोऽप्यहमतोऽव्ययं बीजं नित्यैकरसं कारणमित्यर्थः। अन्यत्स्पष्टम्। तज्जलानिति

(क) आ० पु० न० (अनादिसान्तवादिनां) इति ना०।
(ख) नान्यत इति ना०।
(ग) आ० पु० न० (साद्यनन्तवादिनां) इति ना०।
(घ) आ० पु० न० (सादिसान्तभाववादिनां) इति ना०।
(ङ) आ० पु० न० (अनाद्यनन्तात्यन्ताभाववादिनां) इति ना०।
(च) यतो वास. इति आ० पु० ना०।

न च विश्वसंहर्तृत्वं तु मृत्योर्विश्रूयते। न तु तस्येति वाच्यम्।

अत्ता चराचरग्रहणादिति-

वेदान्तसूत्रोक्तेः (१)।

श्रुतेः । अस्याः श्रुतेरर्थः । इदं जगत् ततो ब्रह्मणः सकाशाज्जायते तस्मिन्नेव लीयते तत्रैव अनिति जीवतीति तज्जलान् इति(क) ॥

(१) अत्तेत्यादिवेदान्तसूत्रस्यार्थः॥ परमेश्वर एव जगत्संहर्त्ता । कुतः। चराचरग्रहणात् । यस्य ब्रह्म च क्षत्रं च उभे(ख) भवत ओदनम्। मृत्युर्यस्योपसेचनमिति श्रुतेः।अस्याः श्रुतेरर्थः । ब्रह्म ब्राह्मणजातिः। क्षत्रं क्षत्रियजातिः। इत्येते उभे यस्य परमेश्वरस्य ओदनमोदनस्थानीये भवतः। जगत्संहर्तृत्वेन यः प्रसिद्धः स मृत्युर्यस्य(ग) उपसेचनम् ओदनमिश्र(घ)घृतशाको(ङ)दकस्थानीयो भवति इत्यादिना(च) चराचरग्रहणादित्यर्थः॥

(क) आ० पु० न० अस्या इत्यार० तज्जलान् इतीति पर्यं० ना० ।

(ख) चोभे इति पा० आ० पु० न० ।

(ग) आ० पु० न० यस्य इति ना० ।

(घ) मिश्रित इति पा० ।

(ङ) शाको इति आ० पु० न० ।

(च) आ० पु० न० स्थानीय इत्यादिना इत्येवास्ति ।

ननु ब्रह्मणि सर्वेषां लयाद्विकारप्रसङ्गः ।

अपीतौ तद्वत्प्रसङ्गादसमञ्जसमिति

सूत्रोक्तेः (१)।

इति चेन्न ।

न तु दृष्टान्तभावादिति

सूत्रोक्तेः (२) ।

अतो नामाभिधानान्तरैः कृष्ण एवोपवर्णितो वेदैः ।

यथेन्द्रियैः पृथग्द्वारैरर्थो बहुगुणाश्रयः ।

एको नानायते(क) तद्वद् भगवाञ्छास्त्रवर्त्मभिरिति

कपिलोक्तेः ॥(३)॥

(१) अपीतावित्यादेः सूत्रस्यार्थः । तल्लयाज्जडादिगुणकं जगत्तद्गुणैर्ब्रह्मापि दूषयति । यथा शाकादौ लीयमानं हिङ्ग्वादिकं स्वनिष्ठगुणैः ॥

(२) न तु दृष्टान्तभावादितिसूत्रस्यार्थः । जगत्स्वगुणैर्ब्रह्म न दूषयति । कुतः । दृष्टान्तस्य भावात् । यथा(ख) क्षारसमुद्रादिषु मिलिता नाना नद्यः स्वगुणैस्तान्न दूषयन्ति । किन्तु यावत्तत्र तिष्ठन्ति तावत्तद्गुणानेव भजन्ति तथा ॥

(३) यथेन्द्रियैरित्यादेः श्लोकस्यार्थः । यथा एकोऽप्यर्थः रसरूपादिबहुगुणाश्रय आम्रादिफलरूपः पृथग् द्वा-

(क) नानायत इति पा० ।
(ख) आ० पु० स्त० यथा इति नो० ।

तस्मात् छान्दोग्ये ब्रह्म वा इदमग्र आसीदिति। तैत्तिरीये आत्मा वा इदमग्र आसीदिति। बृहदारण्यके(क) तस्माद्वा एतस्मादात्मन आकाशः संभूत इति(ख)। आथर्वणे(ग) एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष भूतयोनिः सर्वस्येति। नारायण एवाग्र आसीन्न ब्रह्मा नेशान इत्यादिभिर्नामान्तरैः कृष्णोऽनुवर्णितः। जन्मजराभ्यां भिन्नोऽयमच्छेद्यो योऽसौ सौर्ये तिष्ठति। योऽसौ गोपेषु तिष्ठति। योऽसौ गोषु तिष्ठति। योऽसौ गाः पालयति(घ)। योऽसौ सर्वेषु देवेषु तिष्ठति। योऽसौ सर्वेषु वेदेषु तिष्ठति। योऽसौ कृष्णः सर्ववेदैर्गीयते। योऽसौ सर्वेषु भूतेष्वाविश्य भूतानि विदधातीति श्रुतेः। वेदैश्च सर्वैरहमेव वेद्य' इति श्रीभगवदुक्तेः। स कृष्णः(ङ) सेव्य इति कारिकास्थं विशेषणम्। पुनः कथम्भूतः कृष्णः। परः।

---

रैरिन्द्रियैर्नानायते नाना पदार्थ इवाचरति। चक्षुषा रूपायते। जिह्वया रसायते। घ्राणेन सुगन्धायते। एवम् एकोऽपि श्रीकृष्णः शास्त्रवर्त्मभिर्नानायते। उपनिषद्भिर्ब्रह्मायते। हैरण्यगर्भैः परमात्मायते। सात्वतैर्भगवद्यति।

---

(क) बृहदारण्ये इति पा०।

(ख) आ० पु० स्त० इतीति ना०।

(ग) आ० पु० स्त० अथर्वणे इति पा०।

(घ) आ० पु० स्त० गोपालयति इत्ययं वर्त्तते।

(ङ) आ० पु० स्त० श्रीकृष्ण इति वर्त्त०।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ।
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।
पुरुषान्न परं किञ्चित्सा काष्ठा सा परागति-
रिति श्रुतेः ।

स एव वासुदेवोऽयं साक्षात्पुरुष उच्यते ।
स्त्रीप्रायमितरत्सर्वं जगद् ब्रह्मपुरस्सरमिति
विष्णुपुराणोक्तेरपि ।

यतः सर्वैः शब्दैर्व्यासादिभिः स एव प्रतिपादितः ।
परं ब्रह्म परं धाम पवित्रं परमं महान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥
आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे इति
गीतायामर्जुनोक्तेरपि ।

पुनः किंविशिष्टः कृष्णः । भक्त्यधीनः ।

भक्तिरेवैनं नयति । भक्तिरेवैनं पश्यति । भक्तिरेवैनं दर्शयतीति श्रुतेः (१) ॥

(१) भक्तिरेवैनं नयतीत्यादिश्रुतेरर्थस्तु ॥ एनं परमात्मानं भक्तिरेव स्वाधारं भक्तं प्रति नयति । एवकाराज्ज्ञानमित्यर्थः । यत एनं भगवन्तं भक्तिरेव पश्यति । न योगः । भक्तिरेवैनं दर्शयति । न कर्मविरागादय इति ॥

भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि संभवात् ॥
न साधयति मां योगो न सांख्यं धर्म उद्धव ।
न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जितेति

श्रीभगवद्वचनात् (१) ॥

पुनः कथम्भूतः । आत्मदः आत्मानं ददातीत्यात्मदः ।

कः पण्डितस्त्वदपरं शरणं समीयाद्
भक्तप्रियादृतगिरः सुहृदः कृतज्ञात् ।

---

(१) भक्त्याहमेकयेत्यादिश्लोकद्वयार्थस्तु ॥ आत्माहमप्राह्योऽप्येकया निर्गुणया भक्त्या ग्राह्यः । कीदृश्या श्रद्धया । परया ग्राह्यत्वं तु सुतरामिति भावः । यन्नो मन्निष्ठा भक्तिः संभवात् प्रादुर्भावादपि श्वपाकान् श्वभोजिनोऽपि पुनात्यनेन प्रारब्धविनाशिन्युक्ता भक्तिः । तस्माद्यया भक्तिर्मां साधयति स्वाधीनं करोति । तथा योगो मां न साधयति । यतः स तु वृत्तिनिरोधसाधकः । वृत्तिनिरोधो नाम योग इति वचनात् । न सांख्यमपि । तत्प्रकृतिपुरुषविवेकसाधनत्वात् । न धर्मोऽपि । तत्स्वर्गफलत्वात् । न स्वाध्यायः स्वधर्मत्वात् । तपस्त्यागावपि मां न साधयतः । तावपि सगुणफलसाधकौ । यतो भक्त्यधीनोऽहम् ॥

सर्वान्ददाति सुहृदो भजतोऽनुकामा
नात्मानमप्युपचयापचयौ न यस्ये-
त्युक्तेः (१) ॥

एवं भगवद्भागवतानां मतं ज्ञात्वानुरत्या सर्वैः श्रीकृष्णः सेव्योऽयमेव निगमागमानां सिद्धान्तः। स मयाविष्कृतो वैष्णवमीनयेऽलं विस्तरेण ॥

शास्त्रीयानित्याभ्यां श्लोकाभ्यामधिकारिविषयसंबन्धप्रयोजनान्यप्युक्तानि भवन्ति । गतमत्सराः सन्तोऽस्य शास्त्रस्याधिकारिणः । श्रीभगवानेव विषयः । वाच्यवाचकभावः संबन्धः । श्रीकृष्णोपासनं प्रयोजनमिति । विश्वकारणत्वेन श्रीकृष्णस्य वर्णनेन श्रीरामादीनामपि वर्णनं ज्ञातम् । तेषां कृष्णरूपत्वेन भेदाभावात् ॥ ४ ॥

(१) कः पण्डित इत्यादिश्लोकस्यार्थः ॥ कः पण्डितः सुधीर्हिताहितवित् त्वदपरं त्वत्तोऽपरं शरणं समीयाद्गच्छेत् । कथम्भूतात्त्वत्तः । ऋतगिरः सत्यवाचः । पुनः कीदृशात् । सुहृदः उपकारानपेक्षोपकारकात् । तद्व्रजजने साक्षाद् दृष्टत्वात् । पुनः किंविशिष्टात् । कृतज्ञात् । कायिकवाचिकमानसं भक्तकृतमल्पमप्यर्पणं बहुत्वेन जानातीति कृतज्ञस्तस्मात् । यतो भवान्भजतः सुहृदो निष्कपटहृदयस्य सर्वानभितः कामांश्च ददाति । आत्मानं स्वशरीरमपि च । यतो यस्य तव वृद्धिह्रासौ न । अतो हे-

**नावेदं कल्पितं स्मार्त्तं प्रधानं विश्वकारणम् ।**
**जडत्वाज्ज्ञानहीनत्वाद्वासो वै वाससो यथा ॥५॥**

ननु केचित्तु सांख्याचार्याः प्रधानमेव जगत्कारणमाहुः । पुरुषाक्रियत्वात्तत्राह । नावेदमिति । अवेदं वेदाप्रतिपाद्यं वेदै-र्जगत्कारणत्वेनाप्रतिपादितं प्रधानं न जगत्कारणम् । कथम्भूतं कल्पितम् । सांख्याचार्यैर्विश्वकारणत्वेन कल्पितम् । पुनः कीदृशम् । स्मार्त्तं स्मृतावेव करणे प्रधाने कारणदृष्ट्या तत्करणमेव कारणत्वेनोपवर्णितम् । अतो न जगत्कारणं जडत्वात् ज्ञानहीनत्वात् । न ज्ञानाक्रियादिशून्यं जगत्कारणं भवितुमर्हति । यथा जडं वासः(क) वाससस्तत्क्रियाज्ञानवा-न्कोऽपि तद्भवितुमर्हति । नाचेतनत्वमित्यर्थः ।

ईक्षतेर्नाशब्दमिति ।

रचनानुपपत्तेरिति वेदान्तसूत्राभ्याम् (१) ॥

---

तोरुत्तमाधमौ ब्राह्मणशूद्रौ न । दासत्वेन सर्वे समा इत्यर्थः । तस्मै आत्मानं च ददामीति श्रुतौ भगवदुक्तेः ॥

(१) ईक्षतेरित्यादिवेदान्तसूत्रस्यार्थः । अशब्दं न विश्वकारणम् । अवेदत्वात् । हेतुगर्भविशेषणमिदम् । तर्हि किं कारणम् । पूर्वोक्तं ब्रह्मैव । कुतः । ईक्षतेर्हेतोः । तदीक्षितृ-त्वात्(ख) । ज्ञातृत्वादित्यर्थः । छान्दोग्ये । सदेव सोम्येद(ग)-

---

(क) आ० पु० तत जडवास इति पा० । (ख) आ० पु० तत० सर्वज्ञत्वात् इति वर्त्तं ॥ (ग) सोम्येदम इति पा० ।

ननु सर्वज्ञानां कपिलादीनां मतं नान्यथा भवितुमर्हतीति चेत् । सत्यम् । न तेषां जगत्कारणत्वेन प्रधानप्रतिपाद्यत्वे दृष्टिः । किन्त्वात्मनोऽकर्तृत्वसिद्धान्ते एव । यतस्तैर्देहात्मवादिनां हिताय तत्संमतेन गूढाभिप्रायवाचःपेशलैः कर्तृत्वादिकं प्रकृतेरुक्त्वात्मनोऽकर्तृत्वं प्रतिपादितमयमेव तेषामभिप्रायः । एवमजागलस्तनवदात्मवादिनां निःश्रेयसाय गौतमादिरूपेण भगवता परमाणूपादानकारणवादेनात्मा निमित्तकारणत्वेन प्रतिपादितः । पुनस्तन्मतनिष्ठानामपि हिताय मतावधिभूते वेदान्ते तूपादाननिमित्तहेतुत्वेन परमात्मा प्रतिपादितः । अतो न प्रधानं विश्वकारणम् । विश्वकारणत्वेन भगवदाश्रितं दण्डादिरिव कारणं भवितुमर्हति । परमकारणं तु ब्रह्मादिशब्दैः शब्दितः परमेश्वरः श्रीकृष्ण एवालं विस्तरेण ॥ ५ ॥

सदेव सोम्येदमग्र आसीदिति प्रकृत्य तदैक्षतेति कारणस्य सत ईक्षितृत्व(क)श्रवणादित्यर्थः । ननु तत्तेज ऐक्षत । ता आप ऐक्षन्त इत्युपचारप्रायसहपाठात्सतोऽपीक्षणप्रतिपादक ईक्षतिशब्दो गौणो भवितुमर्हतीति चेन्न । कुतः ।

गौणश्चेन्नात्मशब्दादिति

वेदान्तसूत्रात् ।

अस्य सूत्रस्यार्थः । तदैक्षत । सोऽकामयत । एकोऽहं

(क) ईक्षितृत्व इति आ० पु० स्थ० ।

**यतः कारणरूपत्वं न तु कार्यस्य वै क्वचित् ।**
**यथा वै गोमयादिभ्यो वृश्चिकादय आत्मवित् ॥ ६ ॥**

ननु घटकुण्डलादिदर्शनादचित्कारणस्याचैतन्यमेव कार्यं भवति । चितश्चैतन्यं च । अतः प्रधानमेव जगत्कारणम् । तदचित्त्वादिति चेत्तत्राह ।

यत इति । अचित्कार्यत्वात्तदचित् कारणं न । कुतः । यतः कार्यस्य क्वचित्कारणरूपत्वं तत्सदृशत्वमपि न । क्वाचित्कत्वमपि । तन्नियमाभावात् । हे विवादप्रियात्मावित् । यथा गोमयादिभ्यः । आदिपदेन पुरुषादीनां ग्रहणम् । वृश्चिकादय इत्यादिपदेनापि नखलोमादीनामपि । गोमयपुरुषादिभ्यः अचिच्चिदादिभ्यश्चिदचिदादयो वृश्चिकनखलोमादयो भवन्ति । चिद्रूपान्नखलोमानि जडानि । अचिद्गोमयाच्चिद्वृश्चिककीटादयश्च । अतः कार्यस्य कारणत्वं न । यतः क-

---

बहु स्याम् । अनेन जीवात्मना(क) प्रविश्य नामरूपे व्याकरवाणीति(ख) श्रुतिष्वात्मशब्ददर्शनादीक्षतिशब्दो न गौणः । यतश्चेतनो जीवः प्रधानस्याचेतनस्य कारणं न भवति । अत ईश्वराधिष्ठितं तत्तेज ऐक्षत तदधिष्ठिता अपि ऐक्षन्त इत्येव तेषां वाक्यानामर्थो ज्ञातव्यः । अतः

---

(क) जीवेनात्मनानु इति पा० । (ख) छा, उ, प, [illegible] श्रुतिस्था त्मशब्ददर्शनाद् इत्यस्य स्थाने तस्मात् इत्येतावन्मात्रमस्ति ।

°चिद् व्यभिचारदर्शनात् । क्वचिन्मिथ्यात्वदर्शनादपि । मुद्गलघटध्वंसादौ व्यभिचारः। यतः कारणं(क) मुद्गलस्तु सादिसान्तः। कार्यं(ख) घटध्वंसस्तु साद्यनन्तः। रज्जुसर्पादौ मिथ्यात्वं च। सत इदमुत्थितं सदिति चेन्ननु तर्कहतं व्यभिचरति क्व च क्व च मृषा न तथोभययुगिति भागवते वेदस्तुतिः ।

परमेश्वर एव तत्कारणम्। न जडं प्रधानम् । नन्वचेतनमपि तृणादुग्धादिकं दुग्धदध्याद्याकारेण(ग) निमित्तान्तरनिरपेक्षमेव परिणमते । तद्वत्प्रधानमचेतनमपि जगदाकारपरिणामं प्राप्नोतीति चेन्न ।

अन्यत्राभावादिति । वेदान्तसूत्रात्(घ) ।

अस्य सूत्रस्यार्थः । धेन्वादेरन्यत्र बलीवर्दादौ तृणादेः क्षीरीभावस्याभावात् । चेतनं विना न जडस्य परिणामः(ङ) । अत ईश्वरसत्तया धेनुपात्रयोस्तृणादुग्धं दुग्ध(च) दधिरूपेण परिणमेते । न तु द्रव्यान्तररूपेण ॥

(क) कारणमद्गलजल्स्तु इति पा° ।

(ख) कार्यंघटध्वंसस्त इति पा° ।

(ग) दुग्धदध्याकारेण इति पा° ।

(घ) आ° पु° स्तः अन्यत्राभावाद्वचनानुपपत्तेश्चेति वेदान्तात् इत्येव पाठो दृश्यते ।

(ङ) आ° पु° स्तः चेतनं विना इत्यादि परिणामः इति पर्यन्तं ना° ।

(च) आ° पु° स्त दुग्ध इति ना° ।

**जीवश्चैतन्यशुद्धोऽपि मुक्तो नैवास्य कारणम् ।**
**अणुत्वात्परतन्त्रत्वादंशत्वादपि कर्मकृत् ॥ ७ ॥**

दृश्यते इति वेदान्तसूत्रादपि ॥ (१) ॥

अतः अचिद्विश्वस्य चैतन्यं ब्रह्म कारणम् । ननु चेतनाज्जगदुत्पत्तिस्वीकारे असत्कार्यवादप्रसङ्गात्सत्कार्यवादबाधापत्तिरिति चेन्न । तदा तदात्मकत्वात् । तस्मिन्सूक्ष्मरूपेण वर्तमानत्वात् ॥ ६ ॥

ननु जगत्कारणत्वलक्षणस्य जीवेऽतिव्याप्तिः । चेतनत्वात् । क्रियाज्ञानादिशक्तित्वादिति चेत्तत्राह ।

जीव इति चैतन्यशुद्धोऽपि जीवः अस्य विश्वस्य कारणं नैव । नन्वविद्याग्रस्तो जीवः कारणं मा भूत् । अविद्यामुक्तस्तु तद् भवितुमर्हतीति । तत्राह । मुक्तोऽपि न तत्कारणम् । कुतः ।

२५ पृ० टी० ११प० पठित रचनानुपपत्तेरित्यादिसूत्रस्यार्थः। (क)जगत्सन्निवेशरचनागुणस्य प्रधाने त्वनुपपत्तिस्तस्या अनुपपत्तेरनुमानं प्रधानं न जगत्कारणम्(ख)। तत्तु जगद्धेतुत्वेनाप्तैः कल्पितम् ॥

(१) दृश्यते इति वेदान्तसूत्रस्यार्थः । लोके विलक्षणत्वं दृश्यते गोमयवृश्चिकादीनां कारणकार्ययोस्तत्त्वम् । तस्मात्कार्यस्य (प्रधानस्य)(ग) न कारणत्वम् । अतः पुरुषात्केश(घ)नखलोमानीति श्रुतेः ॥

(क) आ० पु० त्न० तस्मादस्य प्रकमत यत्नेन ।
(ख) आ० पु० त्न० तत्कारणम् इति पा० ।
(ग) आ० पु० त्न० प्रधानस्य इति ना० । (घ) केशा इति पा० ।

परतन्त्रत्वात् । परस्य परमेश्वरस्य तन्त्रत्वादधीनत्वादित्यर्थः।

कर्तृत्वं कारणत्वं(क) च स्वभावश्चेतना धृतिः।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षयेति श्रुतेः ॥

द्रव्यं कर्म च कालश्च स्वभावो जीव एव च।
यदनुग्रहतः सन्ति न सन्ति यदुपेक्षयेति
शुकोक्तेरपि ॥ (१) ॥

कुतस्तदंशत्वात् । जीवस्तु भगवदंश एव । न मायाविम्बोऽवच्छिन्न आभासो वा ।

ममैवांशो जीवलोके जीवभूतः सनातन
इति भगवदुक्तेः ॥

(ख)ब्रह्मणः स्वस्य भेदाभावं दर्शयन्नाह श्रीभगवान्। ममैवांशो जीवः । एवकारान्नान्यस्यांश इति। मदीयमदधीन इत्यर्थः ।

---

(१) कर्तृत्वं कारणत्वमित्यादिश्रुतेर्द्रव्यमित्यादिस्मृतेश्चायंस्तु । जीवस्य कर्तृत्वादय इमे यत्प्रसादाद्यस्य(ग) परमेश्वरस्यानुग्रहतः सन्ति । यदुपेक्षया न सन्तीत्यनेन भगवदधीनत्वं तयोक्तम् ॥

---

(क) करणत्व इति पा० ।

(ख) आ० पु० ब्रह्मणोंऽश इत्यादिभूत्युपन्यासानन्तरं ब्रह्मणः स्वस्य-स्याप्यस्ति ।

(ग) आ० पु० तत्० प्रसादादिति मं० ।

ब्रह्मणोंऽशभूतस्तथेतरो भोक्तेति श्रुतेः ॥ (१) ॥

तस्मान्न जगत्कारणं जीवः। स्वतन्त्रत्वाभावादणुत्वादपि। आकाशादीनां विभूनां योनित्वं परमाणोर्न संभवतीत्यर्थः। वेदान्तेऽपि।

नेतरोऽनुपपत्तेरिति ॥ (२) ॥

यतश्च(क) कर्मकृत्। कर्मकर्तृत्वादसमर्थः। तस्माद् भगवानेव जगद्धेतुः।

ननु मास्तु केवलं प्रधानं जगत्कारणम्। अचित्त्वात्। केवलं पुरुषोऽप्यणुत्वात्। तथापि प्रधानपुरुषौ पङ्ग्वन्धन्यायेन विश्वहेतू भवितुमर्हतोऽश्मायसवदिति चेन्न।

(१) ब्रह्मणोंऽश इत्यादि श्रुतेरर्थः। जीवात्मा ब्रह्मणोंऽशभूतः। न प्रतिबिम्बादिरूपस्तदंशत्वाद्भोक्ता इतर ईश्वरस्त्वभोक्ता ॥

(२) नेतर इत्यादिसूत्रस्यार्थः ॥ इतरो जीवो नानन्दमयः। न विश्वकारणम्। कुतः। अनुपपत्तेः। तज्जगत्कर्तृत्वादिधर्माणामनुपपत्तेः ॥

(क) आ० पु० न च इति नास्ति।

ब्रह्मेन्द्राग्न्यादयो देवाः परत्वेनानुवर्णिताः ।
वेदैर्नारायणादृष्ट्या न ते सर्वे ह्यधीश्वराः ॥८॥

अनुपपत्तेर्नेतरावितिति । वेदान्तसूत्रात् ॥ (१) ॥

प्रकृतिः पुरुषोऽव्यक्तमात्मा भूतेन्द्रियाशयाः ।
शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहादित्युक्तेरपि ॥

अयं भावः । तदनुग्रहात्तु करणरूपे कारणे भवत इत्यर्थः । अनेन परमाण्वादिवादा अपि निरस्ताः । परमाण्वादिवादाश्रये सर्वविज्ञानप्रतिज्ञाहानिः स्यात् । प्रतिज्ञा तु श्रुतौ ।

कस्मै विज्ञानेनाखिलं विज्ञातं भवतीत्यस्य प्रश्नस्य उत्तरं गोपीजनवल्लभज्ञानेन तज्ज्ञातं भवतीति । तस्माद् ब्रह्मैवोपादाननिमित्तकारणम् । अलं विस्तरेण ॥ ७ ॥

ननु (क) मा भूतां तत्कारणं । हिरण्यगर्भादयस्तु विश्वकारणानि भवितुमर्हन्ति । तेषाम् ईश्वरत्वात् । तत्त्वे प्रमाणानि ।
हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीदिति।
इन्द्रो यातोऽवसितस्य राजति । अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयमपां रेतांसि जिन्वतीति । सूर्य आत्मा जगत-

(१) अनुपपत्तेरित्यादिवेदान्तसूत्रस्यार्थः ॥ इतरौ प्रधानपुरुषौ नास्य कारणे । कुतः । अनुपपत्तेः । विश्वकर्तृत्वानुपपत्तेः तत्सामर्थ्याभावदर्शनादिति ॥

(क) आ० पु० त० ननु तौ इति पा० वर्त्त०।

स्तांस्तुपश्चेति। सोमोऽस्माकं राजेति। सर्वाणि ह भूतानि आकाशादेव समुत्पद्यन्ते आकाशमेवाभिसंविशन्तीत्यादीनि (१) बहूनि प्रमाणानि (सन्ति)(क)। हिरण्यगर्भ(ख) इत्यादिभ्यः श्रुतिभ्यः सर्वेषां ब्रह्मत्वं प्रतिपादितम्। अतस्ते विश्वकारणानि। तत्राह। ब्रह्मेन्द्रेति। ब्रह्मादिषु नारायणादृष्ट्या नारायणस्य आदृष्टिः आ समन्ताद् दृष्टिर्नारायणादृष्टिस्तया आदृष्ट्या वेदैस्ते ब्रह्मादयो देवाः परत्वेनानुवर्णिताः। न तु पृथग् दृष्ट्या।

नारायणाद् ब्रह्मा जायते। नारायणाद्रुद्रो जायते। नारायणादिन्द्रो जायते। नारायणात्प्रजापतिः प्रजायते। नारायणाद् द्वादशादित्या वसवः समुत्पद्यन्ते। नारायणात्प्रवर्धन्ते नारायणे प्रलीयन्ते। ब्रह्मा च नारायणः। शिवश्च नारायणः। शक्रश्च नारायण इत्यादिश्रुतेः॥

(१) हिरण्यगर्भ इत्यादिश्रुतेरर्थः॥ हिरण्यगर्भश्चतुराननः अग्रे सृष्ट्यादौ समवर्तत अजायत। जातः सन्भूतस्यैकः पतिरासीत्॥

इन्द्रो यात इत्यादिश्रुतेरर्थः॥ इन्द्रः यातश्चरस्य अवसितस्य अचरस्य राजेति॥

अग्निर्मूर्द्धेत्यादिश्रुतेरर्थः॥ अग्निर्दिवः मूर्द्धा ककुत्। ककुदां दिशानां पतिः। पृथिव्या अपि, अयमेवाग्निः। अपां मध्ये रेतांसि जिन्वतीति॥

(क) आ० पु० स० सन्ति इति ना०।
(ख) आ० पु० स० हिरण्यगर्भ इति ना०।

अतो नारायणजन्यत्वेन तदङ्गत्वेन च तेषां ब्रह्मादीनां परत्वं प्रतिपादितम् । तस्मात्ते ब्रह्मादयस्त्र्यधीश्वरा न भवन्ति । न विश्वकारणानि च । यतस्ते सर्वे जीवास्तदधीना अणवः । कस्मिंश्चित्कल्पे तेष्वीश्वरत्वमपि । तज्जन्यत्वे श्रुतिः ।

> यो ब्रह्माणं विदधाति पूर्वं
> यो वै वेदांश्च प्राहिणोत्(क) तस्मै ।
> तं ह देवमात्मबुद्धिप्रकाशं (ख)
> मुमुक्षुर्वै शरणमहं प्रपद्ये इति (१) ॥

एतया(ग) श्रुत्या कोऽप्यज्ञात उक्तस्तमेव श्रुतिर्व्यक्तं करोति ।

> यो ब्रह्माणं विदधाति पूर्वं
> यो विद्यां तस्मै गोपायति स्म कृष्णः ।
> तं ह देवमात्मबुद्धिप्रकाशं
> मुमुक्षुर्वै शरणमनुव्रजेदिति ॥

(१) यो ब्रह्माणमित्यादिश्रुतेरर्थः ॥ यः परमेश्वरः पूर्वं सर्गादौ ब्रह्माणं हिरण्यगर्भं विदधाति ससर्ज । तस्मै ब्रह्मणे वेदांश्च प्राहिणोत् प्रददौ । तं देवं द्योतमानं आत्मबुद्धिप्रकाशं स्वविषयां बुद्धिं प्रकाशयन्तं ह स्फुटं मुमुक्षुरहं शरणं प्रपद्ये ॥

(क) प्रहिणोति इति पा० ।

(ख) आ० पु० स० प्रकाशं (प्रकाशं) इति वर्त्त० ।

(ग) आ० पु० स० एतया इत्यस्य स्थाने च इति इति वर्त्त० ।

ब्रह्माणं ससर्जेत्युपलक्षणम्। तद्द्वारा सर्वं ससर्जेत्यर्थः।
अतो ब्रह्मापि जीवः।

अयं हि जीवस्त्रिवृदब्जयोनि-
रव्यक्त एको वयसा स आद्यः।
विश्लिष्टशक्तिर्बहुधेव भाति
वीजानि योनिं प्रतिपद्य यद्वदिति (१)॥

अतो हिरण्यगर्भे जीवत्वम्। ननु स्वयमेव ब्रह्मा स्वस्मि-
स्तत्त्वमाह।

सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः।
विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृगिति।

पुरुषरूपेण स्वयमेव विश्वं परिपातीत्यनेन विष्णा-
वीश्वरत्वं कृष्णाभेदत्वं स्वस्मिन् हरे च जीवत्वमुक्तम्। एवं
स्वजीवत्वमुक्त्वा सर्वेषां तदधीनत्वमाह।

(१) अयं हि जीव इत्यादिश्लोकस्यार्थः॥ अयम-
ब्जयोनिर्जीवः।(क)अब्जं कंजं योनिरुत्पत्तिस्थानं कारणं वा
यस्य स हिरण्यगर्भ आदौ स्वेकोऽव्यक्तः। ब्रह्मकल्प शब्द-
रूपत्वात्। कीदृशः सः। त्रिवृत्।(ख)आद्यः प्रथमजः। वयसा
कालेन पाद्मकल्पे। विश्लिष्टशक्तिः सन् बहुधेव भाति।

(क) भा० पु० स्क० अत्र कीदृशः त्रिवृत् इति इत्यधिक पाठ०।
(ख) भा० पु० स्क० अत्र कीदृशः स त्रिवृत् इति पा०।

वयं भवस्ते तत एष महर्षि-

र्वहाम सर्वे विवशा यस्य दिष्टमिति (१) ॥

अतो ब्रह्मादयो(क) जीवाः। न विश्वकारणानि। क्वचित्ते-षामीश्वरत्वम् ।

---

विश्लिष्टा आलिङ्गिता मायाशक्तिर्योगादिशक्तिर्वा येन(ख)। तया(ग) (शक्त्या) पुत्रपौत्रादिविस्तारेण बहुधेव भाति । इवकारस्तेषां पुत्रपौत्रादीनां ब्रह्मादिप्रकाराणां पृथक्पृथग्जीवत्वप्रतिपादकः । भिन्नभिन्नजीवत्वेऽपि स एव बहुधेव भाति। स त्वेक एव। यथा बीजानि योनिं क्षेत्रं प्रतिपद्य प्राप्य बीजोद्भवानां धान्यानां जीवा भिन्नभिन्ना अपि स्थूलदृष्ट्या तानि बीजान्येव बहुप्रकाराणि जातानीव भान्ति ।

(१) वयं भव इत्यादिश्लोकार्द्धस्यार्थः । हे प्रियव्रत भवः शिवः। ते तव ततस्तातः स्वायम्भुवो मनुः । एष महर्षिर्नारदः । वयमपि सर्वे । यस्य भगवतो दिष्टमादिष्टं वहाम । कथंभूताः । विवशाः विगतवशास्तदधीनाः । कुतः। तद्भयात् ।

भीषास्माद्वातः पवते भीषोदेति सूर्यः ।

भीषास्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति श्रुतेः ।

---

(क) आ० पु० स्त० इत्था इत्यधि० वर्त्त० ।

(ख) आ० पु० स्त० मायाशक्तिर्वा योगादिशक्तिर्वा इत्येवं पाठो वर्त्त० ।

(ग) आ० पु० स्त० शक्त्या इति ना० ।

भवेत् क्वचिन्महाकल्पे ब्रह्मा जीवोऽप्युपासनैः ।
क्वचित्तत्र महाविष्णुर्ब्रह्मत्वं प्रतिपद्यत

इति पाद्मोक्तेः (१) ॥

अतः कल्पभेदेन अजस्य जीवत्वमीश्वरत्वं च । तथा हरस्यापि । सूर्यादीनामपि । यज्ञावतारेन्द्राभिप्रायेणेन्द्रस्येश्वरत्वमुक्तम् । नारायणाजाभिप्रायेण ब्रह्मणस्तत्त्वम् । वामनाभिप्रायेण सूर्यस्येश्वरत्वम् । एवं(क) रुद्रादीनां ज्ञेयम् ।

विधेर्ललाटाज्जन्मास्य कदाचित्कमलापतेः ।
कालाग्निरुद्रः कल्पान्ते भवेत्संकर्षणादपीति

पाद्मोक्तेः ।

जीवत्वं(क) ब्रह्मादीनां नित्यम् ॥ ८ ॥

---

मद्भयाद्वाति वातोऽयं सूर्यस्तपति मद्भयात् ।
वर्षतीन्द्रो दहत्यग्निर्मृत्युश्चरति मद्भयात् ।
लोकानां लोकपालानां मद्भयं कल्पजीविनाम् ।
ब्रह्मणोऽपि भयम्मत्तो द्विपरार्द्धपरायुष इति

श्रीभगवदुक्तेः ॥

(१) भवेत्क्वचिदित्यादिश्लोकस्यार्थः ॥ उपासनैर्भगवदुपासनैर्जीवः क्वचिन्महाकल्पे ब्रह्मोत्पत्तिसमये ब्रह्मा भवेत् ।

स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिञ्चितामेतीति

श्रीभागवतोक्तेः ।

क्वचित् तत्रोत्पत्तिकाले तादृशजीवाभावे स्वयं महाविष्णुर्ब्रह्मत्वं चतुराननभावत्वं प्रतिपद्यते ॥

---

(क) भा० पु० म० एवमेव इति पा० वर्त्त० ।

अतः सर्वेश्वरः साक्षी भगवान्विश्वकारणम् ।
क्रियाज्ञानादिशक्तित्वात्स्वतन्त्रत्वाच्च विश्वकृत् ॥६॥

अतः सर्वेश्वरः भगवानेव विश्वकारणम् । सर्वेश्वरत्वात् (ख) । करणाधिपाधिपो न चास्य कश्चिज्जनिता न चा (ग)धिप इति ।

यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ।
तदेवर्त्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनामिति ।

तस्मात्कृष्ण एव परो देव इत्यादिश्रुतिभ्यः । पुनः क्रियाज्ञानादिशक्तित्वात् ।

परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानक्रियाबले(घ) चेति(ङ) श्रुतेः ॥

ह्लादिनीसन्धिनीसंविच्छक्तिसंश्लिष्ट ईश्वर
इति विष्णुपुराणोक्तेः ।

तासु ह्लादिनी गरीयसीति श्रुतेः । शक्तेर्विविधत्वं तु ।

श्रीर्भूः कीर्त्तिरिला लीला कान्तिर्विद्येति सप्तकम् ।
विमलाद्या नवेत्येता मुख्याः षोडश शक्तयः ॥
विमलोत्कर्षिणी ज्ञाना क्रिया योगा तथोन्नतिः ।

(क) भा० पु० स्त० जीवत्वन्तु इति पा० वर्त्त० ।

(ख) श्वेताश्वतरोपनिषदि स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः इत्येवं श्रुतिपाठो वर्त्तते ।

(ग) भा० पु० स्त० न चास्याधिपः इति पा० वर्त्त० ॥

(घ) श्रुतौ तु ज्ञानबलक्रिया च इति पा० ।

(ङ) भा० पु० स्त० ज्ञानक्रियाबलेति श्रुतेः इति पा० वर्त्त० ।

मही सत्ता तथेशानी तथैवानुग्रहा मतेति ॥

ताभिः शक्तिभिर्भगवान्सेव्यः ।

भागवतेऽपि ।

श्रिया पुष्ट्या गिरा कान्त्या कीर्त्या तुष्ट्येलयोर्जया ।
विद्ययाऽविद्यया शक्त्या माययाभिनि(क)षेवितमिति ॥

शक्त्याश्रयत्वाद् भगवान्विश्वकारणम् ।

विश्वकृदिति हेतुगर्भविशेषणमिदम् । स्वतन्त्रत्वादिति हेतुना तत्परतन्त्रत्वं निराकृतम् । सर्वेषां तदधीनत्वात् ।

ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् ।
जगद्वशे वर्त्ततेऽदः(ख) कृष्णस्य सचराचरमिति

भारतोक्तेः ।

जगत्कारणत्वेऽपि विकारशून्यः परमेश्वरः । यतः साक्षी । साक्षित्वात्कर्मालिप्तः (ग)।

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्त्तारमपि मां विद्ध्यकर्त्तारमव्ययम् ॥
न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यत

इति श्रीभगवदुक्तेः ॥ ९ ॥

(क) भा० पु० स्क० माययाभिनिं० इति पा० ।
(ख) भा० पु० स्क० वर्त्ततेदम् इति पा० वर्त्तते ।
(ग) साक्षित्वात्कर्मालिप्त० इति पा० ।

आरोपिता गुणास्तस्मिन्नित्युक्ते विश्वकारणम् ।
प्रधानं पुनरेव स्यादपि सिद्धान्तखण्डनम् ॥ १० ॥

ननु सर्वशक्त्याश्रयत्वाद् भगवानेव विश्वहेतुत्वेन भवता प्रतिपादितः । (क) सर्वज्ञत्वादिगुणास्तु मायाकल्पिताः ।

एकमेवाद्वितीयं ब्रह्मेति श्रुतेरिति (१) चेत् ।

(ख) तत्राह द्वाभ्याम् । आरोपिता इति । अत इति (ग) । तस्मिन्ब्रह्मणि परमेश्वरे सर्वज्ञत्वादयः स्वरूपभूता गुणास्तु स्वाभाविकाः । न त्वागन्तुकाः । अतः सगुणागुणयोर्ब्रह्मणोरभेदमेव प्राहुर्वेदान्तवेदशास्त्रविचारेण । तद्यथा । जन्माद्यस्य यतः । तद्ब्रह्मजिज्ञासेत्यनेन तयोर्भेदाभावत्वमुक्तम् । न च तटस्थब्रह्मणः सकाशादस्य जन्मादयः । न तु शुद्धादिति वाच्यम् । तटस्थस्वरूपकल्पना त्वसुरमोहनाय कल्पकैः कल्पिता । अन्यथा अदृश्यादिगुणको धर्मोक्तेरिति सूत्रे विरोधापत्तिः (१) ॥

(१) एकमेवेत्यादिश्रुतेरर्थः ॥ ब्रह्मैकं सजातीयभेदशून्यम् । पुनरद्वितीयं विजातीयभेदवर्जितम् । एवकारेण स्वगतभेदत्वमपि निरस्तम् । आनन्दस्वरूपत्वात् ॥

(१) अदृश्यादीत्यादिसूत्रस्यार्थः ॥ अदृश्यादिगुणकः परमात्मा भूतयोनिर्भूतानां कारणम् । कुतः ।

(क) आ० पु० स्त० तं इत्यधि० वर्त० ।

(ख) आ० पु० स्त० एकमेवाद्वितीयं ब्रह्मेति श्रुतेः ? तस्मादानन्दादयो गुणास्त्वारोपिता इति चेत् इति पा० वर्त० ।

(ग) आ० पु० स्त० अत इति इति ना० ।

अतो विश्वोद्भवाध्याये ह्यभेदः प्रतिपादितः ।
प्रधानखण्डने चापि सगुणागुणयोस्तु वै॥ ११॥

एकमेवाद्वितीयं ब्रह्मेत्यस्याः श्रुतेरर्थस्तु श्रुत्या कृतः । न तत्समश्चाभ्यधिकश्च दृश्यत इति । एवकारात् केनापि गुणेनाधिकाभावाद्ब्रह्मैकम् । समानाभावादद्वितीयम् ।

एतावतालं ननु सूचितेन गुणैरसाम्यानतिशायनस्य ।
हित्वेतरान्प्रार्थयतो विभूतिर्यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सो-
रिति श्रीभागवतोक्तेः (१)॥

धर्मोक्तेः । यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तप इत्यादिश्रुत्या तस्य स्वाभाविका गुणाः प्रतिपादिताः । अदृश्यो गुण आदिर्यस्य सोऽदृश्यादिगुणकः* ।

यत्तदद्रेश्यं(क)मग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मम् । तदव्ययं यद् भूतयोनिं परिपश्यन्ति धीरा इति श्रुत्यापि तयोरभेदः ॥

(१) एतावतालमित्यादिश्लोकस्यार्थः ॥ गुणैरानन्दादिभिः असाम्यानतिशायनस्य भगवतो माहात्म्यमेतावता सूचितेन अलं पूर्यताम् । समस्य भावः साम्यम् । तद्रहितः । अतिशायनस्तदधिकस्तद्रहितः । न कोऽपि समः । कुतोऽधिकस्तस्य । केन सूचितेन । तत्राह । यस्याङ्घ्रिरेणुं पदरजः । विभूतिर्लक्ष्मीः । भजते । किं कृत्वा इतरा-

*भिन्नसप्तमी बहुव्रीहिसमासः । (क) अतो नु यदद्रेश्य इति पा० ।

एवं श्रुतिस्मृतिसंमतात्तस्याः श्रुतेरयमेवार्थः । न तु भेद-निषेधकः । अतस्तस्यानन्दादयो धर्मा नित्याः स्वाभाविकाः। यतः परमात्मानन्दस्वरूप आनन्दगुणश्च ॥

आनन्दमयोऽभ्यासात् ।

हेयत्वावचनादिति सूत्राभ्याम्(क) (१)॥

---

न्ब्रह्मादीन्हित्वा । कथंभूतान् । प्रार्थयतः रमावलोकनाय तीव्रं तपश्चरतः । कथंभूतस्य यस्य । अनभीप्सोः । तां लक्ष्मीमनिच्छतः ॥

(१) आनन्दमय इत्यादिसूत्रयोरर्थः ॥ तस्माद्वा एतस्माद्विज्ञानमयादन्योऽन्तरात्मानन्दमय इत्यत्र (श्रुतौ)(ख) परमात्मा आनन्दमयः । कुतः । अभ्यासात् । आनन्दमयं प्रस्तुत्य को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्।एष ह्येवानन्दं याति(ग)। सैषानन्दस्य मीमांसा भवति । एतमानन्दमयमात्मानमुपसंक्रामति । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन। आनन्दो ब्रह्मेत्यादिनानन्दमयस्य बहुकृत्वोऽभिधानमभ्यासस्तस्मादभ्यासादित्यर्थः । कुतः।हेयत्वावचनात्। तस्माद्वा एतस्मादन्नमयादन्योऽन्तरात्मा प्राणमयः । तस्माद्वा एतस्मात्प्राणमयादन्योऽन्तरात्मा मनोमयः । तस्माद्वा एतस्मान्मनोमयादन्योऽन्तरात्मा विज्ञानमय इत्येवं यथान्नमयादीनां विज्ञानमया-

---

(क) आ० पु० स्त० सूत्राभ्याम् इति ना० । (ख) आ० पु० स्त०-(श्रुतौ) इति ना० । (ग) श्रुतौ तु आनन्दयाति इति पाठ० ।

न चैवं सविशेषब्रह्मस्वीकारे निर्विशेषप्रतिपादकानां वेद-वेदान्तवाक्यानां कोपोद्भवः स्यात् । वाक्यानि तु ।

अरूपवदेव हि तत्प्रधानत्वात् ।

आह च तन्मात्रमिति (१) सूत्रे (क) ॥

अस्थूलमनणु अव्यक्तं ब्रह्म न चक्षुषा गृह्यते नापि वाचेत्यादिः श्रुतिः । गीतायामपि । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते इत्यादि (ख) । एभिस्तन्निर्विशेषं ब्रह्मेति वाच्यम् ।

तदव्यक्तमाह हि । उभयव्यपदेशात्त्वहिकुण्डलवत् । अपि संराधने प्रत्यक्षानुमानाभ्यामित्यादिसूत्रेभ्यः (१)(ग) ॥

---

न्तानां हेयत्वमुक्तम् । तथा आनन्दमयस्य हेयत्वावचनात्परमात्मानन्दमय इति ॥

(१) अरूपवदित्यादिसूत्रयोरर्थः ॥ ब्रह्म अरूपवदेव । कुतः । शास्त्रेषु तत्प्रधानत्वात् । तदपि कुतः । तन्मात्रं निर्विशेषमाह श्रुतिः । अस्थूलमनणित्यादिना(घ) । गीतायामपि अनादिमत्परं ब्रह्मेत्यादिना(ङ) ॥

(१) तदव्यक्तमित्यादिसूत्राणामर्थः । ब्रह्म अव्यप-

---

(क) आ० पु० स्त० सूत्रे इति ना० ।

(ख) अस्थूलमित्याद्यारभ्य एभिः इति पर्यं० आ० पु० स्त० ना० ।

(ग) आ० पु० स्त० अस्थूलमनणु अव्यक्तं ब्रह्म न चक्षुषा गृह्यते नापि वाचेत्यादिना इति पा० वर्त० ।

(घ) आ० पु० स्त० अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते इत्यादिनापि इति पा० वर्त० ।

(ङ) आ० पु० स्त० तदव्यक्तमाह हि । अपि संराधने प्रत्यक्षानुमानाभ्याम् उभयव्यपदेशात्त्वहिकुण्डलवदित्यादिभ्यः इत्ययं क्रमेण पा० वर्त० ।

न चेदं (उभयव्यपदेशात्त्वहिकुण्डलवदिति)(क) सूत्रं ब्रह्मजीवयोरभेदान्वये नेतव्यम्। तयोः प्रकरणाभावात्। तस्मात्सविशेषनिर्विशेषयोर्भेदाभावस्यैव प्रकरणमिदम् । वेदवेदान्तयोर्यः सगुणब्रह्मणस्तल्लोकस्यापि निषेधः श्रूयते स तु हिरण्यगर्भस्य सत्त्वादिगुणयुक्तस्य तल्लोकस्य च। यतस्तयोः सिद्धान्ते (ख) सत्यं ब्रह्म हिरण्यगर्भाख्यमिति श्रुतेस्तदेव सगुणं ब्रह्म(ग)। तल्लोकः सत्यलोकाख्यस्तयोर्निषेधः कृतः(घ)। ब्रह्माण्डातीतस्य भगवल्लोकस्य भगवतोऽपि प्रसङ्गो नोक्तः। निर्गुणब्रह्मशब्देन परमेश्वरस्यैव प्रतिपादितत्वात् । यतो भगवति सगुणत्वं तु

---

क्तम्। चेतनस्वरूपत्वात्। नेत्राविषयमपि। अपिशब्दार्थस्तु एवं सत्यपि ब्रह्म अव्यक्तमपि संराधने सम्यगाराधनयोगे निर्गुणभक्तियोगे प्रत्यक्षं भवति। भक्ताः प्रत्यक्षं भगवन्तं पश्यन्ति । यतस्तस्मिन्योगे परमेश्वरमूर्त्तिः सदा तिष्ठति। मानुषी विज्ञानघनं आनन्दघनसच्चिदानन्दैकरसे भक्तियोगे तिष्ठतीति श्रुतेः।

विज्ञानघनानन्दघनेत्यादिश्रुतेरर्थः ॥ विज्ञानघना आनन्दघनानाम्नीति(ङ) पूर्वानुषङ्गः। विज्ञानघनाआन-

---

(क) उभयव्यपदेशात्त्वहिकुण्डलवत् इति इति आ० पु० स्त० ना० ।

(ख) आ० पु० स्त० सत्यं सगुणं ब्रह्म इति अत्रैवास्ति ।

(ग) आ० पु० स्त० तदेव सगुणं ब्रह्म इति अत्र ना०।

(घ) आ० पु० स्त० तयोर्निषेधः कृतः इति ना० ।

(ङ) आ० पु० स्त० विज्ञानघनानन्दघननाम्नीति पा० ।

ज्ञानानन्दादिगुणत्वात् । निर्गुणत्वं मायागुणातीतत्वात् । अतः सगुणागुणयोर्ब्रह्मणोरभेद एव वेदान्ते निरूपितः । तदेव वेद-वेदान्तयोर्मतमज्ञात्वा हिरण्यगर्भगतं सगुणत्वं भगवत्यारोप्य तद्गुणानां निषेधमादाय तस्मिञ्जगत्कारणे ब्रह्मणि जगत्कर्तृ-

त्वघना मानुषी मूर्त्तिर्नियतप्रकाशरूपा भक्तियोगे तिष्ठति। तद्भूते सच्चिदानन्दैकरसे ॥

तत्कथं निश्चीयते । तत्राह । प्रत्यक्षानुमानाभ्याम् । प्रत्यक्षं तु ।

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनूं स्वामिति
श्रुत्या प्रत्यक्षानुभवात् ॥

नायमात्मेत्यादिश्रुतेरर्थः ॥ अयमात्मा परमात्मा भगवान् प्रवचनेन वेदपाठेन न लभ्यः । पुरुषेणेत्य-ध्याहारः । न मेधया अनुभवात्मकज्ञानेन वेदान्तश्रव-णेन । पुनः कुतः । न केनापि साधनेन लभ्यते। तर्हि केन लभ्यस्तत्राह । य एष पुरुषो यं भगवन्तं तस्य परमात्मनः स्वामव्यभिचारिणीं तनुं सच्चिदानन्दां च वृणुते श्रवणा-दिभिर्भजते तं भक्तमेव परमात्मापि वृणुते । तेन लभ्य इ-त्यर्थः।यद्वा यस्य(क) तस्मै स्वां तनुं विवृणुते प्रकाशयति।

(क०) आ० पु स्त० तस्य इति पा० ।

अनुमानं तु ।

यथा यथात्मा परिमृज्यतेऽसौ
मत्पुण्यगाथाश्रवणाभिधानैः ।
तथा तथा पश्यति वस्तु सूक्ष्मं
चक्षुर्यथैवाञ्जनसंप्रयुक्तमिति(क) ॥

यथा यथात्मेत्यादिश्लोकस्यार्थः । पुरुषस्यासावात्मा मनः मत्पुण्यगाथाश्रवणाभिधानैर्यथा यथा परिमृज्यते तथा तथा मां पश्यति । यथा स्वञ्जनसंप्रयुक्तं चक्षुः सूक्ष्मं वस्तु ॥

न नामरूपे गुणजन्मकर्मभि-
र्निरूपितव्ये तव तस्य साक्षिणः ।
मनोवचोभ्यामनुमेयवर्त्मनो
देव क्रियायां प्रतियन्त्यथापि हीत्युक्तेः ॥

न नामरूपे इत्यादिश्लोकस्यार्थः । भो देव अलौकिकाचिन्त्यलीलापर श्रीकृष्ण तस्य तव नित्यसिद्धे नामरूपे सच्चिदानन्दे गुणजन्मकर्मभिर्न निरूपितव्ये विश्वोद्भवपालनलयार्थे यानि विराट्पुरुषादिरूपेण जन्मानि जगद्भवनादीनि कर्माणि तत्कर्मसाधका गुणास्तैर्गुणजन्मकर्मभिस्ते नामरूपे निरूपणार्हे न भवतः । मायागुणातीतत्वात् । कथंभूतस्य तव । मनोवचोभ्यामनुमेयवर्त्मनः । यतः साक्षिणः गुणादीनां साक्षिणः । न हि साक्षि-

(क) अनुमानं तु इत्या० संप्रयुक्तमित्यन्तं पद्यं ० आ० पु० नास्ति अनन्ता ।

त्तत्त्वं मनोवचोगोचरमित्यर्थः । भो देव ग्रीतमान ।
एवंभूतोऽपि त्वम् । तथापि क्रियायाम् उपासनालक्षणायां
त्वां प्रतियन्ति उपासकाः साक्षात्पश्यन्ति । हीति प्रसिद्धम् ।
न च तत्साक्षात्कारे दृष्टिगोचरत्वाज्जडत्वप्रसङ्ग इति वा-
च्यम् । कृपासाध्यत्वेन नेत्रविषयत्वाभावात् । तत्कृपा-
गोचरत्वम् अग्रे व्यक्तं करिष्यामि ॥

(क)तस्माद्भक्तियोगनिष्ठानां भगवान्व्यक्तः । निराकार-
निष्ठानां विमुखानां चाव्यक्तः । सिद्धान्ते तु य एव निर्वि-
शेषः परमात्मा स एव सविशेषः । उभयव्यपदेशात्त्वहिकु-
ण्डलवत् । यदात्मको भगवांस्तदात्मिका व्यक्तिरिति । स-
च्चिदानन्दविग्रह इति । आनन्दं ब्रह्म न चक्षुषा गृह्यते
नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वेत्येवमुभयव्यपदेशा-
त्सगुणनिर्गुणयोर्वेदे कथनाद् अहिकुण्डलवत् । अहेः सर्पस्य
कुण्डलं स्वाभाविको धर्मः । नागन्तुकः । दण्डाकारकुण्ड-
लाकारोऽपि स एव सर्पः यादृशस्तादृशः । तथा परमा-
त्मन आनन्दादयो गुणाः स्वाभाविकास्तस्मात्सविशेषं
यद् ब्रह्म तदेव निर्विशेषम् । यन्निर्विशेषं तदेव सविशेषमि-
त्यर्थः । मायागुणातीतं निर्गुणं ब्रह्म स्वरूपभूतैरानन्दादि-
भिर्गुणैः सह वर्तमानं सगुणमित्युक्तत्वात् । अयं भावः ।
यः सर्वं व्याप्य तिष्ठति स तु भगवान्सविशेषः साकारः ।
विश्वव्यापकं स्वरूपं निर्विशेषं निराकारम् ।

(क) भा० पु० स्क० ७ अ० अनुमानं तु इत्यत्र० समप्रयुक्तमितीति पर्यं ० वर्त० ।

त्वादयो गुणास्तु मायारोपिताः । यतो मुक्तोपसृप्यव्यपदेशा-
दित्यादीनां वाक्यानां मतारणवाक्यत्वादित्युक्ते पुनः प्रधान-
मेव जगत्कारणं स्यात् । नामान्तरैरज्ञानं वा माया च । तद्-
गुणकल्पितत्वात् । यथा भ्रमकल्पितादूज्जुसर्पाद्यज्जातं भय(क)
तद्भयकारको भ्रम एव । न रज्जुस्तस्मिन्सति ब्रह्मकारणत्व-
सिद्धान्तखण्डनं स्यादनेनेश्वरत्वाज्ञानकल्पितत्वात्परिच्छन्न(ख)-
बौद्धमतापत्तिः । तस्यां सत्यामनीश्वरवादप्रसङ्गः । तस्माद् ब्र-
ह्मण्यानन्दादयो गुणाः कल्पिता इति वादिनो बौद्धा अनीश्व-
रवादाश्रया ज्ञेयाः । न च निर्गुणब्रह्मणोऽकर्तृत्व सगुणस्य क-
र्तृत्वं प्रतिपादितं वेदैस्तयोरेकत्र विरोधादसिद्धमभयरूपत्वमिति
वाच्यम् । वैधर्म्यादसिद्धमिति चेन्न प्रत्यभिज्ञानवैशिष्ट्यात् ॥१॥
इति शाण्डिल्यसूत्रोक्तेः ॥

मया ततमिदं सर्वं जगदव्यक्तमूर्तिनेति
भगवदुक्तेः ॥

(१) वैधर्म्यादसिद्धमित्यादिशाण्डिल्यसूत्रस्यार्थः ॥
जगत्कर्तृत्वाकर्तृत्वयोरेकत्र विरोधात्सगुणनिर्गुणयोरेक-
रूपत्वमसिद्धमिति चेन्न । कुतः । प्रत्यभिज्ञानवैशिष्ट्यात् ।
ज्ञातपर्वस्य ज्ञानं प्रत्यभिज्ञानम् । विशिष्टस्य भावो वै-
शिष्ट्यम् तस्मात्प्रत्यभिज्ञानवैशिष्ट्यात् । सोऽयं देवदत्त
इतिवत् ॥

(क) प्रा० पु० न्त० सर्पात् भय इति पा० वर्त्त० ।
(ख) प्रचारस्त प्रच्छन्न इति ।

यो देवदत्तो मथुरायां समाधिस्थो दृष्टः सोऽयं काश्यां कर्मकलापयुक्तः । यथा(क) एकविशेषणविशिष्टेऽपरविशेषेणाभावेऽपि देवदत्तस्तु स एव । विशेषणद्वयाश्रयत्वात् । तथा सविशेषनिर्विशेषयोरेकत्वं सिद्धम् ।

त्वत्तोऽस्य जन्मस्थितिसंयमान्विभो
वदन्त्यनीहादगुणादविक्रियात् ।
त्वयीश्वरे ब्रह्मणि नो विरुध्यते
त्वदाश्रयत्वादुपचर्यते गुणैरिति
भागवतोक्तेः (१) ॥

(१) त्वत्तोऽस्येत्यादिश्लोकस्यार्थः ॥ हे विभो अपरिच्छिन्न । अस्य जन्मस्थितिसंयमांस्त्वत्तो वदन्ति वेदा इति शेषेणार्थः । एवं सत्यपि न विकारित्वमित्याह । कीदृशात्त्वत्तः । अनीहात् । तत् कुतः । अगुणात् अगुणस्यानीहत्वं प्रसिद्धम् । तस्मादविकारित्वमित्यर्थः । नन्वनीहत्वे कथं कर्तृत्वम् । कर्तृत्वे वा कुतोऽविकारित्वमनीहत्वं च । यतः कर्मकर्तृत्वं तु तज्ज्ञानक्रियेहादिभ्यो भवति । ज्ञानादिकं विना न कर्तृत्वम् । कर्तृत्वे तथात्वं नात उभयत्वमपि विरुध्यत इति चेत्तत्राह । त्वयीश्वरे ब्रह्मणि नो विरुध्यते । त्वयि परब्रह्मणि कृष्णे सगुणागुणाक्राश्रये नो विरुध्यते । ईश्वराक्रात्कर्तृत्वम् । ब्रह्माक्रादविकारित्वम् ॥

(क) अत इति पाठः ।

ममोभयाश्रयत्वं कथम् । तत्तु को वेद ।

कोऽद्धा वेद क इह प्रावोचत्

कुत आयाता कुत इयं विसृष्टिः ।

अर्वाग्देवा अस्य विसर्जने

नाद्धा वेद यत आबभूवेति (१) (क) ॥

अनेजदेकं मनसो जवीयो नैतद् देवा आप्नुवन्पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठ(ख)तीति (२) ॥

यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति (१) ॥

(१) कोऽद्धेत्यादिश्रुतरर्थः ॥ अद्धा साक्षात्परमात्मानं भगवन्तं को वेद । क इह प्रावोचत् प्रब्रूयात्(ग) । इयं वि(घ)सृष्टिरपि(ङ) कस्माज्जाता । कुत आयातेत्यपि को वेद । अस्य विश्वस्य विसर्जनेऽर्वाग्देवाः पश्चाज्जाता अतस्तेऽपि न विदुः । अतः को वेद यत इदं विश्वमाबभूव ॥

(२) अनेजदित्यादिश्रुतेरर्थः ॥ यत इदं जातं तत् परं ब्रह्म त्वेकमनेजत् अचलम् । मनसो जवीयो (च) वेगवत्तरम् । तस्माद् देवा न आप्नुवन् । पूर्वम् अर्षत् । यतः अन्यान् धावत इन्द्रियगणान् अतिक्रम्य तिष्ठति तद् ब्रह्म ॥

(१)यतो वाच इत्यादिश्रुतेरर्थः ॥ वाचोऽपि मनसा सह प्रकर्षेण कृत्स्नत्वेन अप्राप्य निवर्त्तन्ते वाच इति पश्यन्तीमध्यमावैखर्याः । परा तु तद्रूपैव ॥

(क) आ० पु० स्त० इति पा० । (ख) अ० तो तु तिष्ठत् इति पा० ।
(ग) आ० पु० स्त० प्रब्रूयात् इति पा० । (घ) आ० पु० स्त० वि इति पा० ।
(ङ) आ० पु० स्त० कुतः इत्यधि० वर्त्त० । (च) आ० पु० स्त० मनसो इत्यधि० वर्त्त० ।

यस्यामतं मतं तस्य मतं मतम् पुनर्मतंयस्य न वेद सः(क)।
अविज्ञातं विजानतां विज्ञातमविजानतामिति'(२) ॥

यदि मन्यसे सुवेदेति दह्र(ख)मेवापि नूनं(ग) वेत्थ ब्रह्मणो रूपम् यदस्य(घ) वेदे(ङ)ष्वित्यादिश्रुतिभ्यः (३) ॥

अतः सविशेषं परं तत्त्वं वा निर्विशेषं(च) वेत्यविज्ञातत्वेन विवदतां भ्रमनुत्तये तयोरभेद एव वेदान्ते प्रधानकारणवादखण्डनाध्याये व्यासेन मुनिना प्रतिपादितः । स यथा ।

---

(२) यस्यामतमित्यादिश्रुतेरर्थः। यस्माद्वाचो निवर्त्तन्ते(छ) अतः यस्य ब्रह्मविदः अमतम् अविज्ञातम् अविदितं ब्रह्मेति मतं तस्य मतं (ब्रह्म) (ज)सम्यग्ज्ञातमिति । यस्य पुनर्मतं मया ब्रह्म ज्ञातमिति यो वदति स न वेदैव। अत एव विजानतां जानीम इति वदतामविज्ञातमिति। अविजानतां न जानीम इति वदतां विज्ञातमिति ॥

(३) यदि मन्यसे इत्यादिश्रुतेरर्थः ॥ यस्माद्यस्यामतन्तस्य मतमित्यादि(झ) तस्माद् यदि कदाचिद् अस्य ब्रह्मणो यद्रूपमहं वेद इति मन्यसे तर्हि दह्रं दभ्रं स्वल्पमपि ब्रह्मणो वेदेषु यद्रूपं गीतं तदपि दभ्रमेव वेत्थेति मन्येऽहम् ॥

---

(क) आ० पु० स्त० यस्यामतं मत तस्य मत यस्य न वेद स इति पा०। अ तो तु यस्यामत मतम मतं मतं यस्य न वेद स इति पा०।
(ख) दभ्रमिति पा०। (ग) अ तो अन स्तु इत्यधि वर्ण०।
(घ) अ तो अन स्त इत्यधि वर्ण०। (ङ) अ तो वेदेष्विति पा०।
(च) आ० पु० स्त० वा इ न पा०।
(छ) आ० पु० स्त० अप्राप्य मनसा सह इति पा०।
(ज) आ० पु० स्त० ब्रह्म इति पा०।
(झ) आ० पु० स्त० यस्मादस्यामतं तस्य मतमित्यादि इति पा०।

जन्माद्यस्य यतः ।(क) शास्त्रयोनित्वात् । तत्तु समन्वयात् । धर्मोपपत्तेः । ईक्षतेर्नाशब्दम् । कामाच्च नानुमानापेक्षेति ( १ ) ॥

एवं ज्ञानाक्रियादिगुणाश्रयत्वेन तज्जगत्कारणं प्रतिपादितम् । तदेव ज्ञेयम् । तदनुरागाय ब्रह्मजिज्ञासा कर्त्तव्येति व्यासेन मुनिनोक्तं वेदान्ते वेदचक्षुषा । तस्मात्सगुणनिर्गुणशब्दाभ्यामेक एव भगवान्सच्चिदानन्दविग्रहः प्रतिपादितोऽलं वि-

( १ ) जन्माद्यस्येत्यादिव्याससूत्राणामर्थः । अस्य विश्वस्य यतो जन्मादि भवति(ख) तद् ब्रह्म । कुतः। शास्त्रयोनित्वात् । अस्य महतो भूतस्य यन्निश्वसितं तदृग्वेदो यजुर्वेद इत्यादिश्रुतेः(ग) । भूतस्य नित्यसिद्धस्य महतो नारायणस्येत्यर्थः । वेदजनकत्वमपि कुतस्तत्राह । सर्वेषां वेदशाखानां तस्मिन्नेव ब्रह्मणि समन्वयस्तात्पर्यार्थः । सर्वे वेदा यत्पदमामनन्तीति श्रुतेः ।

वासुदेवपरा वेदा वासुदेवपरा मखा

इति श्रीभागवतोक्तेः ॥

तस्मात्तदेव कारणम् । कारणत्वधर्माणां ज्ञानादीनामुपपत्तेः तद्धर्मानुपपत्तेरशब्दत्वादशब्दं वेदाप्रतिपाद्यं प्रधानम जगत्कारणम् । तर्हि तत् किं पूर्वोक्तं ब्रह्मैव । कुत

( क ) भा० पु० स्त० अत्र तद् ब्रह्म जगत्कारणम् कुतः इत्यधि० वर्त्त०।
( ख ) जन्मादिर्भवति इति पा० । ( ग ) श्रुतो तु अस्य महतो भूतस्य निश्वसितमेतदृग्वेदो यजुर्वेद इति पा ।

यदेव सगुणं ब्रह्म तदेव निर्गुणं विभु ।
भेदो न दृश्यते कुत्र चागमे निगमेष्वपि॥१२॥

स्तरेण । न च गायत्र्या उपनिषज्जनन्या तु तेज एव परत्वेन प्रतिपादितम् । न तु भगवानिति वाच्यम् । योऽसौ कृष्ण आदित्ये तिष्ठतीति श्रुतेः ।

अन्तस्तद्धर्मोपदेशादिति
वेदान्तसूत्रात् (१) ॥

नारायणं महाज्ञेयं विश्वात्मानं परायणम् ।
नारायणः परो ज्योतिरात्मा नारायणः परः ॥
नारायणः परं ब्रह्म तत्त्वं नारायणः पर-
मित्यादिश्रुतिभ्यश्च । अलं विस्तरेण ॥ १० ॥ ११ ॥

ननु सगुणनिर्गुणयोर्भेदाभावत्वसमर्थनेन किमागतम् । तत्राह । यदेति । यत्सर्वज्ञसर्ववित्सर्वेशानसर्वाश्रयसर्वकारण-

हेतुतेर्हेतोः। ईक्षि(क)तृत्वात् । ज्ञानगुणत्वात् । एकोऽहं बहु स्यामिति कामादपि नानुमानस्य प्रधानस्यापेक्षा ॥

(१) अन्तरित्यादिवेदान्तसूत्रस्यार्थः ॥ अन्तः आदित्य-मण्डलान्तः स्थितः पुरुषो नारायण एव । य एषोऽन्तरादित्ये हिरण्मयः पुरुषो हिरण्यश्मश्रुर्हिरण्यकेश इत्यादिना नारायण एव प्रतिपादितः ॥

(क) ईक्षत इति पा० ।

तस्माच्छ्रीभगवान्भक्त्या सेवनीयो मुमुक्षुभिः ।
मुक्तैरन्यैश्च सर्वैश्च स्वस्वकर्मफलेप्सुभिः॥१३॥

यतो मुक्तादयो यं वै भजन्त्यच्युतमात्मदम् ।
को न सेवेत तं साधुर्ब्रह्मविच्चासुरं विना॥१४॥

सर्व(क)फलप्रदसर्वशक्त्याश्रयसर्वविभूतिपतिसर्वेश्वरादिशब्दैः प्रतिपादितम् सगुणं ब्रह्म तदेव अगोत्रावर्णाचक्षुःश्रोत्राव्यक्ताचिन्त्यादृश्यागोचरागुणानिराकारास्थूलानण्वादिशब्दैः प्रतिपादितं निर्गुणं ब्रह्म ।तयोः सगुणागुणयोर्भेद आगमे निगमेऽप्यपि(ख) न दृश्यते।अतो भेदवादिनस्त्ववैदिकाः शास्त्रचक्षुर्विहीना अज्ञवन्दिता ज्ञेयाः ॥ १२ ॥

यतो निगमागमचक्षुषा निर्विशेषसविशेषभेदाभावेन जगत्कारणत्वेन परमेश्वर एव वेदवेदान्ताभ्यां प्रतिपादितस्तस्माच्छ्रीभगवान् भक्त्या मुमुक्षुभिः सेवनीयः। मुक्तैश्चान्यैः सर्वैर्बद्धविषयासक्तैरपि स्वस्वकर्मफलेप्सुभिः ॥ १३ ॥

न च मुक्तानां न तद्भजने प्रयोजनमस्तीति वाच्यम् । ते तु परमप्रयोजनत्वाद् भजन्तीति ज्ञात्वा को न सेवेत भगवन्तमित्याह । यत इति । यतो मुक्तादयो यमच्युतं भजन्ति तमात्मदं को ब्रह्मवित् साधुर्न सेवेत ।

(क) भा० पु० म० सर्वकर्म इति पाठः ।
(ख) भा० पु० म० अपि इति पा० ।

यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति श्रुतेः (१)॥

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिरिति
भागवतोक्तेः ॥

तं हरिं महासुरं विना को न सेवेत । तेऽसुरास्तु साकारब्रह्मनिष्ठानामत्यन्तं भयमूचिरे इत्यादिभिर्वाक्यैर्भगवत्सच्चिदानन्दविग्रहखण्डनेन तदनादरं कृत्वा तं न भजन्ति ।

तद्वा इदं भुवनमङ्गल मङ्गलाय
ध्याने स्म नो दर्शितं त उपासकानाम् ।
तस्मै नमो भगवतेऽनुविधेम तुभ्यं
योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैरिति
तृतीये ब्रह्मोक्तेः (२) ॥

(१) यं सर्वे देवा इत्यादिश्रुतेरर्थः ॥ यं परमेश्वरं सर्वे देवा अजभवादयो नमन्ति । मुमुक्षवः प्रह्लाद(क)ध्रुवभृग्वादयोऽपि । ब्रह्मवादिनः सनकसनातनादयो मुक्ता अपि सेवन्ते ॥

(२)तद्वा इदमित्यादिश्लोकस्यार्थः॥ हे भुवनमङ्गल नोऽस्माकमुपासकानां मङ्गलाय संसृतिनिवृत्त्या भक्तियोगाय तदिदं रूपं ते त्वया ध्याने दर्शितम् । अतस्तस्मै तुभ्यं नमोऽनुविधेम अनुवृत्त्या करवाम। कस्मै मह्यमित्यत आह ।

(क) भा० पु० म० प्रह्लाद इति पा० ।

श्रुतावपि ।

असूर्या(क) नाम ते लोका अन्धेन तमसावृताः ।
तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जना इति(१) ॥

द्वौ भूतसर्गौ लोकेऽस्मिन्दैव आसुर एव च ।
विष्णुभक्तिपरो दैव आसुरस्तद्विपर्यय

इत्याग्निपुराणोक्तेः ।

सृष्टिस्तु द्विविधा प्रोक्ता दैवासुरविभेदतः ।
हरिभक्तियुता देवास्तद्विना त्वासुराः स्मृता इति

नारदीयोक्तेः ।

---

यस्त्वं नरकभाग्भिर्नादृतः अनादृतः । कथंभूतैः असत्प्रसक्तैरनीश्वरकुतर्कनिष्ठैर्मायावादिभिश्च ॥

( २ ) असूर्या इत्यादिश्रुतेरर्थः । ते नरकलोका असूर्याः सूर्यविवर्जिताः । अतः अन्धेन तमसा वृता घोराः । तान् लोकान्प्रेत्य ते अभिगच्छन्ति वारं वारं गच्छन्ति । ते के तत्राह । ये जना आत्महनः । भगवद्विमुखा एवात्महनस्त एवासुराः ।

क उत्तमश्लोकगुणानुवादा-
त्पुमान्विरज्येत विना पशुघ्रादिति

विष्णुरातोक्तेः ॥

---

( क ) असूर्या इति पा० ।

अतो भगवद्भक्ता एव सुरासुरब्राह्मणक्षत्रियबुधादयोऽसुराः तद्भक्ता एव सुरोत्तमाः । तस्मादसुरं विना तं भगवन्तं को न सेवेत । सर्वे भजन्तीत्यर्थः । असुरास्तु वैरबुद्ध्या न भजन्ति ।

कलौ न राजञ्जगतां परं गुरुं
त्रैलोक्यनाथानतपादपङ्कजम् ।
प्रायेण मर्त्या भगवन्तमच्युतं
यक्ष्यन्ति पाखण्ड(क)विभिन्नचेतसः ॥
यन्नामधेयं म्रियमाण आतुरः
पतन्स्खलन्वा विवशो गृणन्पुमान् ।
विमुक्तकर्मार्गल उत्तमां गतिं
प्राप्नोति यक्ष्यन्ति न तं कलौ जना

इति श्रीभागवतोक्तेः (१) ॥१४॥

---

(१)कलौ न राजन्नित्यादिश्लोकद्वयस्यार्थः । कलौ कलियुगे तु मर्त्या मरणधर्मा अपि भगवन्तमच्युतम्मृत्युविनाशकं(ख) सर्वैश्वर्यप्रदमपि न यक्ष्यन्ति नार्चयिष्यन्ति । कथंभूता मर्त्याः । पाखण्डविभिन्नचेतसः तद्भजने स्वज्ञानामेवाधिकारोऽस्ति । न नो मुक्तानां ज्ञानिनाम् । यतो वयमेव ब्रह्मभूताः सजातीयविजातीयस्वगतभेदशून्या इति वदद्भिः पाखण्डाश्रयैः । कलौ चण्डीविनायकादित्यादिभिः धा-

---

(क) भा० पु० स्त० पाषण्ड इति पा० एवमुत्तरत्रापि ।
(ख) भा० पु० स्त० मृत्युविनाशनं सर्वैश्वर्यप्रदम् इति पा० ।

(क)

श्चैस्तद्बोधकैः पाखण्डजनैश्च विभिन्नं चित्तं येषां ते । क-थम्भूतम्भगवन्तम्। जगतां पतिं पालकं जनकम् (पितरम्)(ख) इत्यर्थः । पुनः किंविशिष्टम् । गुरुं हितोपदेष्टारम् । अत-स्त्रैलोक्यनाथैर्ब्रह्मादिभिरानतं आ समन्तान्नतम्पादपङ्कजं यस्य तमप्यसुरा गुरुजनकद्रोहिणः केवलं हरिभजनादेवा-त्मानमज्ञानावृतं मन्यन्ते। न तु विषयभोगात्तस्माद्धयान्न भ-जन्ति । यतः कलौ त एव ब्रह्मविदो ये भगवद्भक्ता आ-चारभ्रष्टाः श्वतुल्या ब्रह्माहमस्मीति वादिनस्ते मन्दभाग्या इत्याह ।

(क) तस्मात्त्वं सर्वभावेन सच्चिदानन्दविग्रहम् ।
भजस्व राधिकानाथम्भगवन्तमधोक्षजम् ॥
तस्मात्त्वमपि हे वत्स ज्ञानस्वरूपामिति ।
ज्ञात्वैवं परया भक्त्या देहेन मनसा गिरा ।
भजस्व परमोत्कृष्टम्भजनीयपदाम्बुजम् ॥
यथा सर्वात्मभावेन तुष्यते भगवानज ।
न तथा तपसा भोगैर्मखैर्भूनावमानिन. ॥

ज्ञात्वैवमिति । देहेन परिचर्यादिना । मनसा तस्य नामधामलीलारूपगु-णानां ध्यानं निरन्तरम्। गिरा तु भो भगवन्परमेश्वर पुरुषोत्तम सर्वेश्वर सर्व-शान सर्वज्ञ परमसुन्दर सर्वजननयनानन्दकर समस्तकल्याणगुणगणाकर परममङ्गल नारायण वासुदेव श्रीपते रामचन्द्र जानकीनाथ त्रिविक्रम श्री-राधावल्लभ मामुद्धराधमाधमपरमापराधिनं हे करुणासमुद्र मयि कृपां कु-रु इति।भा०पु० स्त० प्रथमविश्रामसमाप्तौ एतावानशीऽधिको वर्त्तते। भूना-वमानिनः इत्यस्योपरि = इत्येतच्चिन्हं कृत्वा पुस्तकान्ते अहमुच्चावचमात्म-मर्त्य भथ मांस तितिक्षया किमलभ्यं निरपेक्ष बवारकर्मभि न किञ्चित्सा-ध० इत्यशुद्धमेव वहिर्कञ्चिल्लिखितमस्ति ॥

(ख) भा० पु० स्त० (पितरम्) इति पा० ।

प्रियादासकृतोऽयं वै विश्वकारणनिर्णयः ।
स एवागमवर्येषु द्रष्टव्यः शास्त्रचक्षुषां ॥ १५ ॥

इति श्रीविसिद्धान्तोत्तमे प्रियादासाचार्य-
विरचिते प्रथमो विश्रामः ॥१॥

योऽयं विश्वकारणनिर्णयः प्रियादासाचार्येण कृतः स एवागमवर्येषु द्रष्टव्यः । सन्देहाभाव एव कर्त्तव्यो वैदिकैः सात्त्वतैः ॥ १५ ॥

इति श्रीविसिद्धान्तोत्तमे प्रियादासाचार्यविरचिते अनुत्तमायां
टीकायां प्रियादासाचार्यकृतायां प्रथमो विश्रामः ॥१॥

---

यन्नामेति ।

यत् यस्य भगवतो नामधेयं गृणन्सन् पुमान्विमुक्तकर्मार्गलः सन्नुत्तमां गतिं प्राप्नोति तं भगवन्तं कलौ जना न यजन्ति प्रायेणेति । देवोत्तमांशा भजन्ति यत्य-श्तीत्यलं(क) विस्तरेण ॥

---

(क) [illegible] पृ० स्क० पा० ।

श्रीहरये नमः ॥

श्रीराधावल्लभो जयति ॥

भक्तिस्तु द्विविधा प्रोक्ता सगुणा निर्गुणा च वै ।
वैधी स्वाभाविकी या याऽवरा सा सा वरा मता॥ १॥

श्रीहरये नमः ।

द्वितीयेऽस्मिन्स्तु(क)विश्रामे कृष्णभक्ती परापरे(ख) ।
वर्ण्येते(ग) तद्गुणाङ्गानि नामरूपाणि तत्त्वतः ॥

एवं प्रथमविश्रामे विश्वकारणं निरूप्येदानीं तत्र भक्त्यधीनः श्रीकृष्णो भक्त्या सेव्य इत्युपक्रमोपसंहारवाक्याभ्यां भक्तिमाहात्म्यमाश्रुत्य त(घ)त्तत्त्वजिज्ञासूनां मोदाय भक्तितत्त्वं निरूप्यते ॥

भक्तिरिति । तु शब्दः प्रकरणान्तरार्थे(ङ) । भक्तिशास्त्रज्ञैर्हरिभक्तैः भक्तिस्तु द्विविधा द्विप्रकारा प्रोक्ता । वै निश्चयार्थे । एका तु सगुणा । द्वितीया निर्गुणा च । तत्रापि या वैधी सगुणा सा अवरा । या स्वाभाविकी सा वरा । तथा निर्गुणापि वैधीस्वाभाविकीभेदेनावरा वरा च । 'विध्युद्भवा वैधी ।

(क) स्मिन्स्तु इति पा० । (ख) भक्त्यपरापरे इति भा० पु० स्त० पाठा० ।
(ग) वर्ण्यते इत्या० पु० स्त० पा० । (घ) भा० पु० स्त० तत् इति पा० ।
(ङ) भा० पु० स्त० प्रकरणानन्तरं इति पा० ।

यथा द्वितीये—

तस्माद् भारत सर्वात्मा भगवान्हरिरीश्वरः।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयमिति (१)।

एवं तन्माहात्म्यं श्रुत्वा अभयकामनया भगवति भक्तिर्जाता सा वैध्यवरा सकामत्वात्(क)।

स्वभावोद्भवा स्वाभाविकी यथा तृतीये-

यः पञ्चहायनो मात्रा मातराशाय याचितः।
तन्नैच्छद्रचयन्यस्य सपर्यां बाललीलयेति(ख) (२) ॥

(१) तस्माद्भारतेत्यादिश्लोकस्यार्थः ॥ यतोऽन्ये देवा न सर्वत्र सर्वदा श्रोतव्याः कीर्त्तितव्याश्च। यथाऽशुभकालेषु (ग) पुत्रमरणादिषु गणेशादयोऽधिकाशुभप्रदत्वाद्। वैराग्ये कामादयोऽपि मनःक्षोभक(घ)गुणत्वात्। संन्यासे त्विन्द्रादयोऽपि। सर्वात्मा तु सर्वत्र सर्वदा अभयमिच्छता जीवेन श्रोतव्यः स्मर्त्तव्यः कीर्त्तितव्यः। चकारावनुक्तसमुच्चयार्थे। स एव ध्येयः पूज्यः सेव्यो वन्द्यः। सर्वात्मत्वात्। सर्वत्र सर्वदा सुलभः प्रीतिविषयः सुखदः। तत्कुतः। यतो हरिः। स्वभक्तानां पापदुःखानि हरतीति हरिः। ननु तत्कथं प्रारब्धदुःखहरत्वमिति शङ्कायां विशेषणम्। कथंभूतः। ईश्वरः कर्त्तुमकर्त्तुमन्यथाकर्त्तुं समर्थः। यतो भगवान् ॥

(२) यः पञ्चहायन इत्यादिश्लोकस्यार्थः ॥ य(ङ) उद्धवः

(क) एवमित्या० सकामत्वादितिपर्यं० भक्तादर्शपु० स्त० ना।

(ख) एवमित्या० सकामत्वादितिपर्यं० भक्तादर्शपु० स्त० वर्त्तते।

(ग) भा० पु० स्त कान्ते इति पा०। (घ) सत्त्वांभक इत्या० पु० स्त० पा०।

(ङ) भा० पु० स्त० च इति पा०।

ते नवाङ्गे उभे तानि श्रवणं कीर्त्तनं हरेः ।
स्मरणं सेवनं दास्यमर्च्चनं वन्दनं तथा ॥ २ ॥
सख्यमात्मार्पणं चैव नवाङ्गानि विदुर्बुधाः ।
तुलस्यश्वत्थमानादीन्यन्यान्यपि बहूनि च ॥३॥

अतः तस्य शास्त्र(क)श्रवणसत्सङ्गाभावेऽपि योत्पन्ना भगवति भक्तिः सा स्वाभाविकी वरा ॥ १ ॥

ते पूर्वोक्ते उभे सगुणागुणे नवाङ्गे । तान्यङ्गानि तु हरेः श्रवणादीनि नवाङ्गानि बुधा विदुः ।

श्रवणं कीर्त्तनं विष्णोः स्मरणं पादसेवनम् ।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनमिति

श्रीभागवतोक्तेः ॥

अन्यान्यप्युपाङ्गानि बहूनि सन्ति । कानि । तत्राह । तुलस्यश्वत्थमानादीनि । आदिपदेन तुलस्यश्वत्थधात्र्यादीनां

---

पञ्चवार्षिको भोजनप्रियोऽपि । बाला वै भोजनप्रिया इति वचनात् । मधुरभोजनार्थे जननीजनकत्यागदर्शनात् । तथाभूतोऽप्यु(ख)द्धवः मात्रा प्रातर्भोजनाय याचितः बुभुक्षितोऽपि(ग) तद्भोजनं नैच्छत् । किं कुर्वन् । यस्य भगवतः श्रीकृष्णस्य पूजां बाललीलया रचयन्सन् ॥

---

(क) आ० पु० स्त० शास्त्रस्य इति पा० । (ख) आ० पु० स्त० । अ.प इति ना० ।
(ग) आ० पु० स्त० क्षुधितोऽपि इति पा० ।

**सत्त्वादिगुणभेदेन सकाम(क)स्वान्तवृत्तिभिः ।**
**सगुणा बहुधा चोक्ता भक्तिर्भक्तविदां(ख) वरैः ॥४॥**

पूजनजलसेकादिभिर्मानम् । जलपानस्नानदर्शनतीरनिवासार्चनादिभिर्गङ्गायमुनासरस्वा(ग)दीनां सेवनम् । गुर्वनुगमनं सर्वार्पणम् । भगवत्प्रियतीर्थक्षेत्रयात्रार्थपर्यटनम् । तदर्थं(घ) द्रव्यव्ययः । अतिथिसेवनम् । एकादशीजन्माष्टमीरामनवम्याद्युपवासजागरणादीनि । ब्राह्मणवैष्णवभगवच्छास्त्रसेवनादीनि बहूनि च ॥२।३॥

एवं सामान्येन सगुणागुणे भक्ती कथिते । इदानीं विशेषेण तयोः स्व(ङ)रूपमाह । तावदाद्याया भेदमाह । सत्त्वादीति । सत्त्वादीनां(च) सत्त्वरजस्तमसां गुणानां भेदेन सकामपुरुषस्य याः सकामा गुणात्मिकाः स्वान्तवृत्तयस्ताभिश्चित्तवृत्तिभिः सगुणा । भक्तिर्बहुविधा प्रोक्ता भक्तविदां वरैः ।

भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते ।
स्वभावगुणभेदेन पुंसां भावो विभिद्यते

इति श्रीकापिलोक्तेः(१) ॥४॥

(१) भक्तियोगो बहुविध इत्यादिश्लोकस्यार्थः ॥ हे भामिनि(छ) मातः । तमोरजःसात्त्विकानां मार्गैर्वासनाभेदैर्भ-

(क) आ० पु० स्त० सकामा इति पा० । (ख) भक्तिमतां इति पा० ।
(ग) सरस्वत्या इत्या० पु० स्त० पा० । (घ) तदर्थं इति आ० पु० स्त० पा० ।
(ङ) आ० पु० स्त० स्व इति ना० । (च) आ० पु० स्त० सत्त्वादि इत्येनं पा० वर्जितं । (छ) आ० पु० स्त० भामिनि इति ना० ।

सात्त्विकी राजसी चेति तामसीति त्रिधा स्मृता ।
त्रिविधा त्रिविधा चापि चैकैका पुरुषाश्रया ॥५॥

तदेव बहुत्वमाह (क) । सात्त्विकीति ।

यदा आशिष आशास्य मां भजेत स्वकर्मभिः(ख) ।
तं रजःप्रकृतिं विद्याद्धिंसामाशास्य तामसम् ॥
यदा भजति माम्भक्त्या निरपेक्षः स्वकर्मभिः ।
तं सत्त्वप्रकृतिं विद्यात्पुरुषं स्त्रियमेव वेति(ग)
श्रीभगवदुक्तेः (१) (घ) ॥

क्तियोगो बहुविधो भाव्यते । (ङ)कुतः । पुंसां स्वभावगुण-भेदेन भावोऽपि भक्तियोगोऽपि तामसराजससात्त्विकाख्यो भवतीत्यर्थः ॥

(१) यदा आशिष इत्यादिश्लोकयोरर्थः ॥ यदा य आशिषो मङ्गलानि स्त्रीपुत्रधनैश्वर्यस्वर्गादीन्याशास्य संप्रार्थ्य स्वकर्मभिर्वर्णाश्रमकर्मभिर्मां भजेत तं रजःप्रकृतिं रजोगुणस्वभावं विद्यात् । यो हिंसां सर्वप्राणिवधमाशास्य शिवभक्तानां वृका(च)दीनामिव स्वकर्मभिर्मां भजेत तं केवलं तामसं रजस्सत्त्वास्पर्शम्(छ) । यदा यो निरपेक्षः

(क) आ, पु, मत, द्वाभ्याम् इत्यधि, वर्त्त । (ख) आ, पु, मत स्वकर्मभिः इत्यस्य स्थले स उत्तम इति पा । (ग) आ, पु॰ मत, चेति पा॰ । (घ, आ॰ पु॰ मत॰ भवेद् एवं भक्त्याधारेस्वाऽज्ञेया इतिपर्यं॰ प्रक्षिप्त वर्त्त॰। (ङ) आ, पु, मत, तत् इत्यधि, वर्त्त, । (च, आ॰ पु॰ मत॰ वृकासुरा इति पा॰ । (छ) रजः सत्त्वास्पर्शम् इत्यस्य स्थलेऽत्र रज सत्त्वास्पृष्टम् इति पा॰ आ, पु, मत॰ वर्त्तते ।

अभिसंधाय यो हिंसां दम्भं मात्सर्यमेव वा ।
संरम्भी भिन्नदृग्भावं मयि कुर्यात्स तामसः ॥
विषयानभिसन्धाय यश ऐश्वर्यमेव वा ।
अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥
कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ।
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विक इति
तृतीये श्रीकापिलोक्तेः (१) ॥

फलानुसन्धानशून्यस्सन् स्वकर्मभिर्भक्त्या मां भजति तं पुरुषं (क)स्त्रियं वा कमपि वर्णस्थं वर्णबाह्यं वा सत्त्वस्वभावं विद्यात् । निरपेक्षोऽपि स्वधर्मनिष्ठत्वात्सत्त्वस्वभावः । पितृलोकफलश्रवणात् ।

(१) अभिसंधाय यो हिंसामित्यादिश्लोकानामर्थः । यो जीवः शत्रोर्हिंसां वधमभिसंधाय संकल्प्य मयि भावं भक्तिं कुर्यात् ।(ख)कीदृशः । संरम्भी क्रोधी । पुनः किंविशिष्टः(ग)। भिन्नदृग्भूतभेददर्शी । स तामसकनिष्ठः केवलतमोगुणात्पुरुषाच्छ्रेष्ठः । सर्वजीवबाधा(घ)भावात् । यस्तु संरम्भी भिन्नदृग्दम्भमात्मनोध्वजित्वमभिसन्धाय मयि भावं कुर्यात्स तामसमध्यमस्तस्मात्तामसकनिष्ठाद्वरो हिंसाया अभावात्(ङ)। यो वा मात्सर्यं परवैभव(च)सहनाशीलत्वं वे-

(क) आ० पु० स्त्र० तां स्त्रियमिति वर्णः । (ख) आ० पु० स्त्र० स कीदृशः इति पा० । (ग) आ० पु० स्त्र० पुनः कीदृशः इति पा० । (घ) आ० पु० स्त्र० बधाभावात् इति पा० । (ङ) आ० पु० स्त्र० हिंसाभावात् इति पा० । (च) विभव इति पा० ।

एवं भक्त्याधारभूतानां साधकानां गुणावृत्तिभेदेन भक्त्यङ्गान्यपि तामसादीनि ज्ञातव्यानि। एवं त्रिधा स्मृता या(क) तामसी राजसी सात्त्विकी च एकैकापि(ख) पुरुषाश्रया (तामसोत्तमतामसमध्यमतामसाधमराजसोत्तमराजसमध्यमराजसाधमसात्त्विकोत्तमसात्त्विकमध्यमसात्त्विकाधमपुरुषनिष्ठा)(ग) भक्तिस्त्रिविधा त्रिविधा(घ) ज्ञेया(ङ)॥ एवं श्रवणकीर्त्तनादयो नवापि प्रत्येकं नवनवभेदास्तेभ्यो भेदेभ्यः कर्ममिश्रायाः सगुणाया भक्तेरेकाशीतिभेदास्तान्येका(च)शीत्यङ्गानि ज्ञेयानि। अन्ये त्वेवं मन्यन्ते। सात्त्विकराजसतामसानां कनिष्ठमध्यमोत्तमानां प्रत्येकेन कनिष्ठोत्तमकनिष्ठमध्यमकनिष्ठमाकृनभेदेन त्रिधा। एवं प्रकारेण सात्त्विकादयो नवधा नवधा भवन्ति। तेन त्रिनवेन सप्तविंशतिप्रकाराः। तत्र मानसकायिकवाचिक(छ)भेदेनैकाशीतिप्रकाराणि भक्त्यङ्गानि ॥ ५ ॥

भयभ्रंशत्व(ज)मभिसंधाय मयि भावं कुर्यात्स तामसोत्तमस्तस्मान्मध्यमाद्वरो दम्भाभावात् । एवं तमोरजःसत्त्वाश्रयाणां स्त्रीपुरुषाणां यथोत्तरं श्रेष्ठयम् । यः पृथग्भावः नृपनृपेन्द्रसुरसुरेन्द्राणां विषयाञ्छब्दादीनभिसंधाय यत्र स्व-

(क) भा० पु० न्त० सा इति पा० । (ख) भा० पु० न्त० सात्त्विकश्चेका चैकापि इति पा० । (ग) कोष्ठकान्तर्निःसृतोंऽशः भा० पु० न्त० ना० । (घ) भा० पु० न्त० त्रिविधा इत्येकमेवास्ति । (ङ) एवमित्या० ज्ञेया इति पर्यं० भा० पु० न्त० ना० । (च) भा० पु० न्त० शान्यवैका इति पा० । (छ) कायिकवाचिकमानस इत्या० पु० न्त० पा० ।
(ज) वैभवभ्रंशम् इत्या० पु० न्त० पा० ।

एवं बहुविधा ज्ञेया सकामा सगुणाऽवरा ।
तदाधारानुकामेन तद्रूपा हि तदाश्रिता ॥ ६ ॥

एवं सगुणा सकामा बहुविधा । यतः अवरा । कुतः । तत्राह । तस्या भक्तेराधारस्य जीवस्यानुकामेन तस्याश्रिता भक्तिस्तद्रूपा(क)। सात्त्विकपुरुषाश्रिता सात्त्विकी । रजोगुणाश्रिता राजसी । तमोगुणाश्रिता तामसीत्यर्थः । सात्त्विक्यपि निन्द्यापि राजसतामसाभ्यः श्रेष्ठा । तेष्वप्युत्तमोत्तमाङ्गानि उत्तमानि । यतो विचारे जाते तु कदाचित् तान्यप्याशु ध्रुवादीनामिव निर्गुणानि भवन्ति। अलं विस्तरेण । विस्तरस्तु भक्तिप्रभायां द्रष्टव्यः ॥ ६ ॥

जनेषु नृपेषु देवेषु(ख) यशोऽभिसन्धाय यो वा नृपाद्यैश्वर्यं संकल्प्यार्चादौ मामर्चयेत् तेऽपि क्रमशो राजसकनिष्ठराजसमध्यमराजसोत्तमाः । अर्चादावित्यत्र अष्टार्चास्वित्यर्थः । यः पृथग्भावः अशुभकर्मादिनिर्हारमुद्दिश्य यच्च कर्म कृत्वा परस्मिन्समर्पणबुद्ध्या(ग) यो वाऽस्मदादिभिः (घ) परमेश्वरो यष्टव्य इति (ङ)मत्वा मां यजेत् तेऽपि क्रमशः सात्त्विककनिष्ठसात्त्विकमध्यमसात्त्विकोत्तमाश्च(च) ॥

(क) भा० पु० स्क० [illegible] तद्रूपा [illegible] पा० ।
(ख) भा० पु० स्क० [illegible] इत्य [illegible] ।
(ग) भा० पु० स्क० परस्मिन्[illegible] पा० ।
(घ) भा० पु० स्क० परमेश्वरादिभि [illegible] ।
(ङ) भा० पु० स्क० [illegible] इत्यधि० [illegible] ।
(च) भा० पु० स्क० [illegible] ।

निष्कामैर्निन्दिता सापि वरान्य(क)साधनात्खलु।
यतो भागवती सर्वकामदा सुरवन्दिता ॥७॥

एवं तस्या बहुत्वमुक्त्वा हेयत्वमुपादेयत्वं चाह द्वाभ्याम् । निष्कामैरिति । तथापीति(ख) ॥

नूनं विमुष्ट(ग)मतयस्तव मायया ते
ये त्वां भवाप्ययविमोक्षणमन्यहेतोः ।
अर्चन्ति कल्पकतरुं कुणपोपभोग्य-
मिच्छन्ति यत्स्पर्शजं नरकेऽपि नृणाम् (१) ॥

(१)नूनं विमुष्टेत्यादिश्लोकस्यार्थः। ते जनास्तव मायया वञ्चितचित्ताः । नूनन्निश्चितमिदन्तु शास्त्रैः । ते के । तत्राह । ये त्वामन्यहेतोः कामाद्यर्थमर्चन्ति । कीदृशं त्वाम् । भवाप्ययविमोक्षणं । भवाप्ययौ जन्ममरणे । तद्विमोक्षे हेतुं कारणम् । पुनः कल्पकतरुम् । ननु विषययाचकास्तु मन्दा अबुधाः । सर्वज्ञोऽपि भगवान्कथं तेभ्यस्तत्सुखं ददाति । तत्राह । भगवांस्तु कल्प(घ)तरुः इच्छतफलदातृत्वगुणत्वाद्ददाति। अतस्त एव मन्दाः। यतः कल्प(ङ)तरुरूपं भगवन्तमर्चयित्वा तस्मात्स्पर्शजं विषयसंबन्धजन्यं सुखमिच्छन्ति। तत्सुखन्तु नृणां नरकेऽपि भवति ॥

(क) वरान्या इत्या० पु० स्त पा० ।
(ख) भा० पु० स्त० तथापीति इति ना० । (ग) भा० पु० स्त विमुष्ट इति पा० ।
(घ) भा० पु० स्त कल्पक इति पा० । (ङ) भा० पु० स्त कल्पक इति पा० ।

तथापि कृष्णपादाब्जस्पर्शकामैर्मुमुक्षुभिः ।
हेयाप्यन्यैस्तु सेव्या वै नानाकामफले(क)प्सुभिः ८

एवं निष्कामैर्भक्तैः सा पूर्वोक्ता सगुणा भक्तिर्निन्दिताप्यन्यसाधनाद्वरा । खलुशब्दो निश्चयार्थे(ख) । यतो भागवती भगवत्संबन्धिनी भक्तिः सर्वकामदा ।

स विधास्यति ते कामान्हरिर्दीनानुकम्पनः ।
अमोघा भगवद्भक्तिर्नेतरेति मतिर्ममेति

श्री(ग)भागवते कश्यपोक्तेः (१) ॥

यस्माद्(घ)भागवती भक्तिः(ङ) सर्वसाधनश्रेष्ठा अतः सुरवन्दिता ॥ ७ ॥

तथापि सुरवन्दिता सर्वकामदापि सकामा भक्तिर्मुमुक्षुभिर्हेया । कथंभूतैः । श्रीकृष्णपादाब्जस्पर्शकामैः । अन्यैस्तु सा

(१) स विधास्यतीत्यादिश्लोकस्यार्थः ॥ कश्यपनिश्चयेन भगवद्भक्तिरेव सफला । नेतरान्यदेवभक्तिरित्यर्थः । सा तु निष्फला विपरीता च । यथा स्वच्छन्दकृता दक्षिणाग्निभक्तिः । सुदक्षिणकृता शैवी च । वृषलपतिकृता भद्रकाली च(च) ।

(क) कामवरै इत्या पु॰ पा॰ ।
(ख) आ॰ पु॰ स्त॰ निश्चयार्थम् इति पा॰ । (ग) आ॰ पु॰ स्त॰ श्री इति ना॰ ।
(घ) आ॰ पु॰ स्त॰ तस्मात् इति पा॰ । (ङ) आ॰ पु॰ स्त॰ इत्यर्थः इत्यधिकं ॥
(च) आ॰ पु॰ स्त॰ वृषलपतिकृता भद्रकाली च इति पा॰ ।

**निष्कामैरगुणा सेव्या कृष्णपादाब्जदा परा ।**
**स्वतन्त्रा षड्गुणा नित्या चानुरागात्मिका वरा॥६॥**

सगुणा सेव्या । कीदृशैरन्यैः। नाना कामवरेप्सुभिः । यतस्तेषां कामपूरिका भगवद्भक्तिरेव ॥ ८ ॥

ननु निष्कामैर्भक्तैः(क) का सेव्येति शङ्कायामाह । निष्कामैरिति । निष्कामैर्भक्तैस्तु अगुणा सेव्या । न विद्यन्ते सत्त्वादयो मायागुणा यस्यां सा अगुणा।कीदृशी अगुणा। कृष्णपादाब्जदा ।

त्वयाहूतोऽपि(ख) भगवान्याति नीचगृहेष्वपीति
श्री(ग)भागवतमाहात्म्ये नारदोक्तेः ।

तदगुणत्वमाह द्वाभ्यां श्रीकापिलः ॥

मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ।
मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥

लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम् ।
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तम इति (१)॥

(१) मद्गुणश्रुतिमात्रेणेत्यादिश्लोकद्वयस्यार्थः॥ सर्वगुहाशये पुरुषोत्तमरूपे मयि मद्गुणश्रुतिमात्रेणैव मनोगतिर्मनसो वृत्तिः परमानुरक्तिरूपा या भक्तिस्तदेव निर्गुणस्य भक्तियोगस्य लक्षणं स्वरूपमुदाहृतम् । कीदृशी

(क । भा । १ । स्त० भगवद्भक्तैः इति पा० । (ख ) भा० प्र स्त । अपीश्वरस्य स्वान्ते हि इति वर्त ।। (ग ) भा प स्त अ इ स ना ।

भक्त्याधारभूतानां निष्काममतामाह(क) द्वाभ्यां श्रीकपिलः ।

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।
दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः ॥
स एव भक्तियोगाख्य आत्यन्तिक उदाहृतः ।
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यत इति (१) ॥

मनोगतिः । अहैतुकी फलानुसन्धानरहिता । अतोऽविच्छिन्ना(ख) अखण्डिता विघ्नैरप्रतिहता। विघ्नास्तु सुखदुःखाद्यन्तैरताडिता। पुनः किंविशिष्टा। अव्यवहिता निरन्तरा। तत्र यथानुरूपनिदर्शनम्। यथा गङ्गाम्भसोऽम्बुधौ, गङ्गायाः प्रवाहोदकस्याव्यवच्छिन्ना( ग ) विघ्नविनाशिनी गतिः सिन्धावेव । नान्यत्र कुत्रापि । तथा मनोगतिरभिन्नापि भिन्नसुखानुभवं करोति । भिन्नाप्यभिन्नानुभवं च । मद्गुणश्रुतिमात्रेणेत्यनेन स्वाभाविकी स्वतन्त्रा मनोगतिर्ज्ञेया । न तु साधनसाध्या । वैधी वा । अहैतुकीत्युक्तम् । तदेव तस्य भक्तियोगस्य(घ) निष्कामत्वं तस्य तद्योग एव फलत्वं च । मुक्तिस्त्ववान्तरफलमिति ॥

(१) सालोक्येत्यादिश्लोकद्वयस्यार्थः ॥ मया सहैकस्मिंल्लोके वासं सालोक्यम् । समानैश्वर्यं सार्ष्टिम् ।

(क) आ० पु० न्त० निष्काममवाह इति पा० ।
(ख) आ० पु० न्त० अवच्छिन्ना इति पा० ।
(ग) आ० पु० न्त० अवच्छिन्ना इति पा० ।
(घ) आ० पु० न्त० भक्तियोगस्य तस्य इति क्रियमेण पाठः ।

एवम्भक्तेरगुणत्वं प्रतिपादितम् श्रीकपिलेन भगवता ॥ पुनः कीदृशी । अनुरागात्मिका ।

---

निकटवर्तित्वं सामीप्यम् । समानरूपतां सारूप्यम्(क) । सायुज्यमपि दीयमानम् अपि मत्सेवनं विना न गृह्णन्ति । कुतस्तत्कारणमित्यर्थः । सेवाप्राप्तौ सत्यां सर्वं गृह्णन्तीति भावः।स प्रसिद्धो निर्गुणो भक्तियोग आत्यन्तिक उदाहृतः। येन भक्तियोगेन त्रिगुणमतित्रज्य त्रिगुणांस्तमोरजःसत्वगुणानतिक्रम्य मद्भावाय मद्रूपाय समानैश्वर्यायोपपद्यते । अयं भावः । जगत्कर्तृत्वाद्यैश्वर्यं विना चतुर्भुजत्वरूपादियोग्यो भवति । तदुक्तं वेदान्ते ।

जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वात् ॥

भोगमात्रसाम्यलिङ्गाच्च ॥

जगद्व्यापारेत्यादिसूत्रयोरर्थः ॥ जगद्व्यापारवर्जं भोगमात्रेणैव सुखमात्रेण भगवत्साम्यं लभते उपासक इति शेषेणार्थः । न तु जगत्कर्तृत्वादिना तत्समत्वम् । कुतः । तन्मात्रेण साम्यलिङ्गात् । समस्य भावः साम्यम् । तल्लिङ्गादेक एव परमेश्वरः । अन्यथानेकेश्वरत्वप्रसङ्गात् लोकवेदमर्यादाहानिः स्यात् ।

सायुज्यं सलोकतां जयतीति श्रुत्या तत्समानसुखमेव प्रतिपादितम्।तेन सह युनक्तीति सयुक् । सयुजो भावः सायुज्यम् त्वेकत्वमित्यर्थः ॥

---

(क) आ॰ पु॰ स्त॰ समानरूपता साकपता सारूप्यम् इति पा॰ ।

सा परानुरक्तिरीश्वर इति

भक्तिशास्त्रोक्तेः ।

ईश्वरे भगवति या परानुरक्तिः सा परा भक्तिरिति भक्ते र्लक्षणम् । अनुरक्तिरासक्तिर्वृत्तिरनुरतिरनुरागः प्रीतिः प्रेमा प्रपत्तिः स्नेह इति पर्यायभेदाः ॥

देवानां गुणलिङ्गानामानुश्रविक(क)कर्मणाम ।
सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ।
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ।
जरयत्याशु या कोशं निगीर्णमनलो यथेति

श्रीभागवते कपिलोक्तेः (१)॥

(१) देवानां गुणलिङ्गानामित्यादिश्लोकद्वयस्यार्थः ॥ एकमनसः पुरुषस्य देवानां सत्त्वे या स्वाभाविकी वृत्तिः सा परा भक्तिरित्यर्थः । एकमनसः स्त्रीपुत्रशिष्यस्वर्गधनादिष्वनासक्तं मनो यस्य तस्यावष्टमनसो देवानामिन्द्रियाधिष्ठातॄणां सूर्यादीनाम् । यद्वा देवानाम्(ख) इन्द्रियाणां द्योतनात्मकानाम् । सत्तो भावः सत्त्वम् । तस्मिन्सत्त्वे परब्रह्मणि भगवति या स्वाभाविकी वृत्तिः सा परा भक्तिः । न तु वैधीत्यर्थः ।

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत इति

श्रीभगवदुक्तेः ॥

(क) भा० पु० स्त० आविक इति पा० । (ख) आ० पु० स्त० देवानाम इति ना० ।

कथंभूतानां देवानाम्। गुणलिङ्गानां गुणा रूपादयो विषया लिङ्गानि ज्ञापकानि येषाम्। पुनः आनुश्रविक(क)कर्मणाम्। गुरोरुच्चारणादनुश्रूयत इत्यनुश्रवो वेदस्तद्विहितमानुश्रविकम्(ख)। तदेव कर्म येषां तेषां शुद्धानामित्यर्थः। वृत्तिस्तु मनसो वृत्ति(ग)र्भगवन्नामरूपलीलाधामगुणेषु न कदाप्यन्यत्र। बुद्धेर्वृत्तिस्तत्सगुणागुणयोः स्वरूपयोर्भेदाभावे निश्चयात्मिकैव। अहङ्कारस्य द्वे वृत्ती। अहन्ता ममता च। ते अहं प्रभोर्भगवतो जनः सेवकः। शुद्धसत्त्वात्मकविग्रहः रक्षो मे भगवान्सपरिकरः कृपापारावारः सर्वेश्वर इत्येवं पार्षदरूपे स्वविग्रहे अहन्ता। श्रीभगवद्विग्रहे ममता। किं च ब्रह्माहमस्मीत्याद्या। सत्यं ज्ञानमनन्तं ब्रह्मेति द्वितीया। एवं ज्ञानविषयत्वे ते कदाचिन्महत्कृच्छ्रेण मुक्तिं दत्तः। देहगेहादिविषयत्वे संसारत्वं(घ)च। भगवद्विषयत्वे तु ताभ्यां मुक्तिबन्धप्रदाभ्यां श्रेष्ठ पुरुषार्थचूडामणिरूपे भवतः। चित्तवृत्तिस्तु तद्रूपादिचिन्तने। नेत्रयोर्वृत्तिस्तद्रूपावलोकने। श्रवणवृत्तिस्तु(ङ) तद्गुणश्रवणे। करयोस्तु हरेः परिचर्यायाम्। वाग्वृत्तिस्तद्गुणनामकथने। पादवृत्तिस्तत्क्षेत्रानुपर्यटने (च)। एवं सर्वेन्द्रियाणां भगवति(छ) स्वाभाविकी

(क) आ० पु० न्त० आविक इति पा०। (ख) आ० पु० न्त० आविक इति पा०। (ग) आ० पु० न्त० मनोवृत्तिः इति पा०। (घ) आ० पु० न्त० संसारम् इति पा०। (ङ) आ० पु० न्त० तु इति ना०। (च) आ० पु० न्त० नुसर्पणं इति पा०। (छ) आ० पु० न्त० भगवति सर्वेन्द्रियाणाम् इति विपर्ययेण पाठः।

वृत्तिः सा परा भक्तिर्मोक्षादपि गरीयसी गुरुतरा। पञ्चमपुरुषार्थत्वात्। कीदृशी। अनिमित्ता हेतुशून्या। स्वतन्त्रेत्यर्थः। पुनः कथंभूता। भागवती भगवत्संबन्धिनी एव(क)। न तु शैवी ब्राह्मी ऐन्द्री वा। कुतः। यतः या आशु स्वस्याः कनिष्ठगुणरूपेण प्राकट्यादेव कोशम् अविद्यारूपं लिङ्गदेहं जरयति। या ज्ञानस्य परा काष्ठा अविद्यानिवृत्तिरूपा। तां निवृत्तिं भक्तिः स्वाविर्भावमात्रेणैव करोति। तदप्यनायासेनैव। तत्र यथारूपं निदर्शनम्। निगीर्णं यथाऽनलः। अनलो: जाठराग्निर्भुक्तं भक्तादिकम्। तस्य भक्तादेः परिपाकमनिच्छत इच्छतश्चापि प्राणिनः जरयित्वा मलं कृत्वा तस्यान्नादेः सारांशेन तुष्टिं पुष्टिं जनयति।

अशितमन्नं त्रेविधं(ख) विधीयते। तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति। यो मध्यमः स मांसम्। योऽणिष्ठस्तन्मन इति श्रुतेः। तथा भक्तिरप्यनायासेन स्वाधारस्य लिङ्गभङ्गमनिच्छत इच्छतश्चापि लिङ्गशरीरस्यासारांशं त्रिगुणरूपं जरयित्वा सारांशेन विशुद्धसत्वेन हरिपार्षदरूपं दिव्यदेहं करोति। तदपि नाश्चर्यम्। यतो भक्त्याश्रितोऽपि विश्वं पुनाति।

वाग्गद्गदा द्रवते यस्य चित्तं
हसत्यभीक्ष्णं रुदति क्वचिच्च।

---

(क) भा० पु० स्क० मोक्षादपि गरीयसीत्यधि० वर्त०।

(ख) अ नो मेधा इति पाठ।

अतो रागात्मिका अगुणा भक्तिर्भगवद्रूपैव। पुनः किंविशिष्टा अगुणा। स्वतन्त्रा।

न क्रिया कृत्यनपेक्षणाज्ज्ञानवदिति

शाण्डिल्यविद्योक्तेः (१)॥

---

विलज्ज उद्गायति नृत्यते च

मद्भक्तियुक्तो भुवनं पुनातीति

श्रीभगवदुक्तेः॥

वाग्गद्गदेत्यादिश्लोकस्यार्थः॥ स मद्भक्तियुक्तो भुवनं ब्रह्माण्डं पुनाति। पुनः किं वक्तव्यं देहगेहस्वजनादिकं पुनातीति। भक्तिमाहात्म्यं तु वाचः अगोचरमिति भावः। सदा यस्य चित्तं द्रवते तेन यस्य वाग्गद्गदा। अपराजितं स्वतन्त्रं मां भक्ताधीनमवलोक्य सजातीयानामुत्कर्षादानन्देनाभीक्ष्णं वारं वारं हसति। स्फूर्त्तौ सदा सान्निध्येऽपि मयि प्रेमवैचित्र्यात्क्वचिद्वियोगस्फुरणेन रुदति रोदनं करोति। पुनः क्षणान्तरेऽन्तःकरणे मां दृष्ट्वा नृत्यते। विलज्जः सन्नुद्गायति। चकारः समुच्चयार्थे। मत्संयोगवियोगत्रियोगावियोगानां यानि लिङ्गानि तैः सह वर्त्तमान इत्यर्थः॥

(१) न क्रियेत्यादिशाण्डिल्यविद्यासूत्रस्यार्थः॥ भक्तिः क्रियात्मिका साधनसाध्या न भवति। कुतः। कृ-

यन्न सांख्येन योगेन दानव्रततपोऽध्वरैः ।
व्याख्यास्वाध्यायसंन्यासैः प्राप्नुयाद्यत्नवानपीति
भगवदुक्तेरपि (२) ॥

सांख्येन तु प्रकृतिपुरुषविवेकः साध्यः। न तु भक्तियोगः। योगेनाष्टाङ्गेन वृत्तिनिरोधः। संन्यासेन सत्यलोकः। स्वरूपज्ञानं वा। दानादिभिः स्वर्गसुखं प्राप्नुयात्। न भक्तियोगमित्यर्थः।

---

त्यनपेक्षणात् ।कृतिः क्रिया (प्रयत्नः)(क) तस्या अनपेक्षणात् प्रयत्नानपेक्षोत्पद्यमानत्वादित्यर्थः। ज्ञानवत् । ज्ञानशब्देनात्र परमात्मैव । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । यथा भगवान्न साधनसाध्यः स्वेच्छयैवोत्पद्यमानत्वात् । यथा नृसिंहरूपेण स्तम्भे । तथा तद्रूपा भक्तिरपि । तद्रूपत्वे श्रुतिः । सच्चिदानन्दैकरसो भक्तियोग इति ।

परमानन्दचिद्रूपा(ख) सुन्दरी कृष्णवल्लभेति
पाद्मोक्तेरपि ॥

(२) यन्न सांख्येनेत्यादिश्लोकस्यार्थः ॥ यद् यं भावयोगं यत्नवानपि जीवः सांख्यादिभिर्न प्राप्नुयात् । (यथोक्तम् । पूजया लभते भक्तिर्जपात्तुष्यति सुस्फुटम् । समाधियोगाद्बहिः सा भक्तिः केन लभ्यत इति )(ग) ॥

---

(क) आ० पु० स्त० 'प्रयत्नः' इति नाo । (ख) आ० पु० स्त० 'चिन्मूर्ति' इति पाo । (ग) कोष्ठकान्तर्गतोक्तिः आ० पु० स्त० नाo ।

न यद्यं मामित्यर्थो वक्तव्यः। भावस्यैव प्रसङ्गात्। सांख्यादीनां वार्त्ता आस्ताम्। किन्तु भक्तियोगस्तु भगवताप्यदेयो भवति।

राजन्गुरुः पतिरलं(क) भवतां यदूनां
दैवं प्रियः कुलपतिः क्व च किंकरो वः।
अस्त्येवमङ्ग भजतां भगवान्मुकुन्दो
मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग-
मिति शुकोक्तेः (१)॥

अतो भगवददेयत्वाद् भक्तिः स्वतन्त्रा। नित्या। यद्यत्साधनसाध्यं तत्तदनित्यम्। साधनसाध्याभावेन सा नित्या।

(१) राजन्नित्यादिश्लोकस्यार्थः। हे राजन्वः कुरून्यदूंश्चिनान्येषां स्वपदारविन्दं भजतां पुंसां भगवान्मुकुन्दो मुक्तिं ददाति। मुकुन्दत्वात्(ख)। कर्हिचिदपि (ग) भक्तियोगम्(घ) तु नैव(ङ)। तस्याः स्वतन्त्रत्वभङ्गभयात्। तद्वश(च)कारित्वादपि। भवतां यदूनां तु भक्तियोगाद्गुणवान्पतिः पालको गुरुरन्ति(छ)हितोपदेष्टा। अतो दैवं कुलपूज्यः। तस्मादलमत्यर्थं प्रियः कुलपालकोऽपि। न केवलमेतादृशः। किं तु क्व च किङ्करोऽपि नियोगकारी॥

(क) आ० पु० स्त० राजन्पतिर्गुरुरलम् इति पा०। (ख) आ० पु० स्त० अत्र मुकुन्दत्वात् इति ना०। (ग) क र्हिचित्स्म नैव इति पा०। (घ) आ० पु० स्त० अत्र मुकुन्दत्वात् इति वर्त्ते। (ङ) आ० पु० स्त० नैव इति ना०। (च) आ० पु० स्त० वशी इति पा०। (छ) आ० पु० स्त० गुरुरन्तेन इति पा०।

भक्तियोगेन मनसि सम्यक् प्रणिहितेऽमले ।
अपश्यत्पुरुषं पूर्णं मायां च तद्(क)पाश्रयाम् ॥
यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ।
परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते ॥
अनर्थोपशमं साक्षाद् भक्तियोगमधोक्षजे ।
लोकस्याजानतो विद्वांश्चक्रे सात्त्वतसंहिता-
मिति भागवतोक्तेः (१) ॥

अतो भक्तियोगो नित्योऽनर्थनाशकः । न ज्ञानवैराग्ये । ते तु तदन्तर्भूते एव । तत्राहष्टन्वात । व्यासेन परिपक्वावस्थायां

(१) भक्तियोगेन मनसीत्यादीनां श्लोकानामर्थः ॥ श्रीव्यासः साधनान्तरैर्मनःशुद्ध्यभावादलब्धभगवत्साक्षात्कारत्वेनानुतापाग्निदग्धो नारदोपदेशतो लब्धेन भक्तियोगेनामले निश्चले मनसि परब्रह्माख्यं पूर्णं पुरुषमपश्यत् । तदपाश्रयां दूरे स्थितां मायां च । जीवमप्यपश्यत् । तं कम् । कां च मायाम् । तत्राह । यया मोहितो यो(ख) जीवो गुणातीतोऽप्यात्मानं त्रिगुणात्मकं मनुते । तत्कृतं मायाकृतमनर्थं चाभिपद्यते । चकारादानन्दाभावमभिपद्यत इत्यर्थः । अधोक्षजे भक्तियोगमप्यपश्यत् । न ज्ञानवैराग्ये । अधोक्षजे भक्तियोगमपश्यदित्यनेन तद्भेदाभावत्वमुक्तं भवति । कथंभूतम् । अनर्थोपशमं मायाकृतानां जीवानर्थानां

(क) आ० पु० स्त० तद् इति पा० । (ख) आ० पु० स्त० वो इति पा० ।

यद्यद्‌ दृष्टं तत्तन्नित्यम् । अतो माया जीव ईश्वरो भक्तिः इति भावचतुष्टयं नित्यम् । जीवानर्थस्त्वनित्यः । अनर्थोपशमं भक्तियोगमपश्यदित्युक्तेः ॥ एवं शास्त्रसिद्धान्ते भक्तिर्नित्या । पुनः कथंभूता अगुणा । षड्गुणा ।

क्लेशघ्नी शुभदा मोक्षलघुताकृत्सुदुर्लभा ।
सान्द्रानन्दविशेषात्मा श्रीकृष्णाकर्षिणीमते-
त्युक्तेः (१) ॥

पुनः कथम्भूता अगुणा । परा कर्मयोगज्ञानेभ्यः परा ।

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥

सुखदुःखादीनामुपशमः विनाशो यस्मात्तम् । (क)जीवमपश्य देष्ये क्वनान्तं पदं गात्यभिप्रायकम् । जीवानपश्यदित्यर्थः । एवमजानतः भक्तियोग एव जीवानर्थविनाशक इत्यजानतो लोकस्य कर्मयोगज्ञानारण्ये भ्रमतः संबन्धनीं तस्य हितोत्तमाय सात्वतसंहितां(ख) भागवताख्यां चक्रे। यतो विद्वान् भगवद्भक्तिं विना न कदापि जीवानर्थविनाशः स्यादिति तत्त्वज्ञ इत्यर्थः ॥

(१) क्लेशघ्नीत्यादिश्लोकस्यार्थः ॥ भक्तिः क्लेशघ्नी । क्लेशास्तु पञ्चैव ।

(क) आ० पु० नत० भमो इत्या० अपश्यदित्युक्तं इति पर्य० [illegible] वर्त्तते । न० त्० टीकायाम । (ख) आ० पु० न्त संहितायाम् इति पा० ।

यतः संधार्यमाणायां योगिनो भक्तिलक्षणः ।
आशु संपद्यते योग आश्रयं भद्र(क)मीक्षतः(ख) ॥

अविद्यास्मितारागद्वेषाभिनिवेशा

इति योगशास्त्रोक्तेः ।

अविद्या तु कृष्णानुपासनाकर्मात्मिका विक्षेपावरणशक्तिः पञ्चपर्वा(ग) । अस्मिता अभिमानस्य सूक्ष्मावस्था ब्रह्माहमस्मीतिरूपा। करणानुकूलविषयाभिलाषो रागः । अनुकूलार्थाभावेन विपरीतार्थविधायकासहनशीलत्वलक्षणो द्वेषः । स्वीकृतार्थपरित्यागासहनशीलत्वं अभिनिवेश इति पञ्चैव क्लेशाः पापात्मान एव । पापन्तु प्रारब्धाप्रारब्धकूटबीजमयम् । तान्क्लेशान्हन्तीति क्लेशघ्नी । पुनः कीदृशी। शुभदा शुभानि(घ) दुर्विषयवितृष्णानुकूल्यकृपाक्षमासत्यसारल्यमाधुर्यधैर्यसाम्याकाम्यपरोपकारित्वसर्वप्रियत्वमानदत्वामानित्वादीनि ददाति इति शुभदा । पुनः किंविशिष्टा । मोक्षलघुताकृत् । स्वानन्दवैभवेन मोक्षं लघुं करोति या सा मोक्षलघुताकृत्। पुनः सुदुर्लभा स्वस्वतन्त्रा साधनैरसाध्या । पुनः सान्द्रानन्दविशेषात्मा घनपरमानन्दरूपा। पुनः कथंभूता । श्रीकृष्णाकर्षिणी सानन्दचुम्बकीभूत्वा चित्काष्णायसीभूतं श्रीकृष्णम् आकर्षयतीति श्रीकृष्णाकर्षिणीति षड् गुणाः । ते गुणाः क्रमशः कनिष्ठमध्यमोत्तमाः ॥

(क) भा० पु० स्क० । भद्र इति पा० । (ख) भा० पु० स्क० मीक्षतं इतिपा० ।
(ग) भा० पु० स्क० पञ्चपर्वा इति भा०। (घ) भा० पु० स्का० इत्यधि० वर्णं० ।

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसीत्यादिभ्यः (१) ॥
पुनः कीदृशी अगुणा । वरा ।

तदेव कर्मिज्ञानियोगिभ्य आधिक्यशब्दात् ।
प्रश्ननिरूपणाभ्यामाधिक्यसिद्धेरिति

शाण्डिल्यविद्योक्तेः (१) ॥

---

(१) तावदित्यादिसार्द्धद्वयश्लोकस्यार्थः ॥ कर्माणि नित्यनैमित्तिककाम्यप्रायश्चित्तानि तु तावदेव कुर्वीत । यावता यावद्यावता कालेन वा(क) न निर्विद्येत । वशीकाराख्यं वैराग्यं न प्राप्नुयात् । वा निश्चयार्थे । मत्कथाश्रवणादौ।आदिपदेन(ख) नवधाभक्तिषु श्रद्धा यावन्न जायते तावत्कर्माणि कुर्वीत। अतः कर्मणः सकाशाद्भक्तिश्रद्धैव परा । भक्तेः परत्वं तु सुतराम् । अष्टाङ्गयोगादपि तत्परत्वमाह शुकः । यतः यस्यां सम्यगष्टाङ्गानुकूल्येन धार्यमाणायां धारणायां सत्याम् योगिनो योगशीलस्याशु भक्तिलक्षणो योगः संपद्यते। कीदृशस्य। ध्याने भद्रमाश्रयं भगवन्तं पश्यतः । न तु निर्विकल्पसमाधिप्रियस्य। अतो भक्तिः परा।तद्योगफलत्वात्। ज्ञानादपि परेत्याह श्रीकपिलः। अनिमित्तेति॥

(१) तदेवत्यादिशाण्डिल्यविद्यासूत्रयोरर्थः ॥ तदेव भक्तिः सर्वेभ्यः साधनेभ्यो वरा श्रेष्ठा । कुतः।

---

(क) आ० पु० नत० वा इति ना०। (ख) आ० पु० न्त० शब्देन इति पा०।

निष्कामैरगुणा सेव्येत्यादिकारिकाया अर्थः संक्षेपेण कृतः(क)। तत्र भक्तिः षड्गुणा प्रोक्ता। तेषु गुणेषु क्लेशघ्नत्वलक्षणः प्रथमो गुणः। शुभप्रदत्वलक्षणो द्वितीयः। मोक्षलघुताकृल्लक्षणस्तृतीयः। सुदुर्लभत्वलक्षणश्चतुर्थः। सान्द्रानन्दविशेषात्मलक्षणः पञ्चमः। श्रीकृष्णाकर्षकश्चरमः। तद्वती षड्गुणा भक्तिः। तद्(ख)गुणत्वे प्रमाणानि। तावत् क्लेशहरत्वे प्रमाणमाह(ग)। ते क्लेशास्तु प्रारब्धाप्रारब्धकूटबीजमयाः। तत्प्रारब्धादिकं कर्मचतुष्टयं पापमयमिति पूर्वोक्तम्। तत्पापहरत्वमाह(घ) श्रीभगवान्।

---

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।
श्रद्धावान्भजते यो मां स मे युक्ततमो मत

इत्याधिक्यशब्दात्।

योगिनामपीत्यादिश्लोकस्यार्थः॥ योगिनांमध्ये सर्वेषां मुमुक्षुमुक्तानां मध्येऽपि यो मद्गतेन मनसा मद्विग्रहरूपाकारेण मनसा श्रद्धावान्सन्भक्तिशास्त्रोक्तसिद्धान्तवान्मां भजते स मे युक्ततमो मत इति॥

अतः सा वरा प्रश्ननिरूपणाभ्याम्। प्रश्नस्तु।

एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमा

इति प्रश्नः।

---

(क) निष्कामैरित्यादि कृत इति पर्यन्तस्य [illegible] धं-मुक्तस्था इत्या[illegible] पुस्तके पाठः। (ख) [illegible] पुस्तके षड् इति पाठः। (ग) [illegible] पुस्तके क्लेशहरत्वे प्रमाणमाह इति पाठः। (घ) ते क्लेशा इत्यादि तत्पापहरत्वमाह इति पर्यन्तः [illegible] पुस्तके नास्ति।

यथाग्निः सुसमिद्धार्चिः करोत्येधांसि भस्मसात् ।
तथा मद्विषया भक्तिरुद्धवैनांसि कृत्स्नश इति (१) ॥

---

मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेति ॥
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि स

इत्यादिना उक्तप्रकारेण(क) उत्तरमाह श्रीभगवान्(ख) ।

मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥
क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते-

इत्युत्तरम् । ताभ्यां प्रश्नोत्तराभ्यां भक्तेराधिक्यमतो भक्तिर्वरा इति(ग) ॥

एवं सततयुक्ता ये इत्यादिश्लोकस्यार्थः ॥ त्वामक्षरं सच्चिदानन्दविग्रहं ये भक्ताः परितोभूतानुकूल्येन उपासते ये अव्यक्तं निराकारमक्षरं त्वां पर्युपासते तेषां मध्ये के योगविदां मध्ये श्रेष्ठतमा इति(घ) (ङ) ॥

(१) यथाग्निरित्यादिश्लोकस्यार्थः । हे उद्धव यथा देदीप्यमानज्वालमाली महानग्निरेधांसि शुष्का-

---

(क) आ० पु० स्त० मत्कर्मकृदित्यादि० उक्तप्रकारेण इति पर्यं० एवं सततमित्यादिश्लोकार्थोऽस्मिन् एव पठितं वर्त्त० । (ख) आ० पु० स्त० अथ उत्तरमाह श्रीभगवान् इति ना० । (ग) आ० पु० स्त० अत्र विस्तरेण इत्यधि० वर्त्त० । (घ) आ० पु० स्त० प्रश्नः इत्यधि० वर्त्त० । (ङ) आ० पु० स्त० अथ उत्तरमाह श्रीभगवान् इति वर्त्त० ।

एवं पापहरत्वमुक्त्वा बीजहरत्वमाह सनत्कुमारः ।

यत्पादपङ्कजपलाशविलासभक्त्या
कर्माशयं ग्रथितमुद्ग्रथयन्ति सन्तः ।
तद्वन्नरिक्तमतयो यतयोऽपि रुद्ध-
स्रोतोगणास्तमरणं भज वासुदेवमिति (२) ॥

एवं बीजामारब्धहरत्वमुक्त्वा कूटहरत्वमाह मैत्रेयवाक्येन ।

द्धकाष्ठानि भस्मसात्करोति तथा मद्विषया भक्तिरेनांसि पापानि शुष्कार्द्रसांसर्गिकोपपापातिपापमहापापादीनि(क) कृत्स्नशो भस्मसात्करोति ॥

(२) यत्पादपङ्कजेत्यादिश्लोकस्यार्थः । यद्यस्य वासुदेवस्य पादपङ्कजयोः पलाशान्यङ्गुलयस्तेषां विलासस्तन्नखकान्तिस्तस्या भक्त्या स्मृत्या सन्तस्तद्भक्ताः कर्माशयं कर्मबीजात्मकाविद्यारूपमुद्ग्रथयन्ति दूरीकुर्वन्ति नाशयन्तीत्यर्थः । कीदृशं कर्माशयम् । ग्रथितं कर्मतन्तुभिरिव ग्रथितम् । कर्माशयं नाशयन्तीत्यनेन क्रियमाणाप्रारब्धहरत्वमप्युक्तं भवति । तद्वद्यतयः संन्यासिनो ज्ञाननिष्ठा नोद्ग्रथयन्ति न कर्माशयं नाशयन्तीत्यर्थः । किमाश्रमजालेन । देववञ्चका यतयो न हि रिक्तमतयः । रिक्ता निर्विषया मतिर्येषां ते । पुनः कथंभूताः ॥ रुद्धस्रोतोगणाः प्रत्याहृतः स्रोतोगण इन्द्रियवर्गो यैस्ते जितेन्द्रिया अपि हरिभक्तिं विना कर्माधीना एव । तस्माद्धे पृथो त्वन्तु तं वासुदेवं भज । यतोऽरणं रक्षकम् ॥

(क) भा० पु० स्क० पापानि इति पा०।

अशेषसंक्लेशशमं विधत्ते
गुणानुवादश्रवणं मुरारेः ।
कुतः पुनस्तच्चरणारविन्द-
परागसेवारतिरात्मलब्धेति(क) (१) ॥

एवं कृष्णहरत्वमुक्त्वा मारब्धहरत्वमाह देवहूतिवाक्येन ।

यन्नामधेयश्रवणानुकीर्त्तना-
द्यत्प्रह्वणाद्यत्स्मरणादपि क्वचित् ।
श्वादोऽपि सद्यः सवनाय कल्पते
कुतः पुनस्ते भगवन्नु दर्शनादिति ॥ (२) ॥

---

(१) अशेषसंक्लेशेत्यादिश्लोकस्यार्थः ॥ मुरारेः भगवतः श्रीकृष्णस्य गुणानुवादश्रवणमेव अशेषसंक्लेशानां शुभाशुभमिश्र(ख)संचितकर्मणां शमं शान्तिं विनाशं विधत्ते पुनः तस्य हरेश्चरणारविन्दपरागसेवायां या रतिः सा तेषां शमं विधत्ते इति किं वक्तव्यम् । कीदृशी । आत्मलब्धा आत्मनि मनसि लब्धा मानसी सेवारतिरित्यर्थः ॥

(२) यन्नामधेयेत्यादिश्लोकस्यार्थः । हे भगवन् अचिन्त्यैश्वर्यगुण यद्यस्य तव(ग) नामधेयस्य अनु(घ)श्रवणादनुकीर्त्तनाद् यस्य प्रह्वणात्स्मरणादपि । तदपि क्व-

---

(क) आ० पु० स्त० इति इति नास्ति। (ख) आ० पु० स्त० मिश्रित इति पाठः। (ग) आ० पु० स्त० तव इति नास्ति। (घ) आ० पु० स्त० अनु इति नास्ति।

एवं तस्याः क्लेशहरत्वमुक्तम् । शुभदत्वमाह प्रह्लादः ।

यस्यास्ति भक्तिर्भगवत्यकिञ्चना
सर्वैर्गुणैस्तत्र समासते सुराः ।
हरावभक्तस्य कुतो महद्गुणा
मनोरथेनासति धावतो बहिरिति ॥ (१) ॥

चित्त तु सदैव । भक्तनवाङ्गानां मध्ये एकस्मादपि अङ्गात् श्वादोऽपि सद्यः सवनाय मखाय कल्पते योग्यो भवति । अयं भावः । चाण्डालत्वकारणं(क) प्रारब्धं तिरस्कृत्य द्विजत्वाय कल्पते । तदप्याशु । न तु जन्मान्तरे ।,

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥
क्षिप्रं भवति धर्मात्मेति श्री(ख)भगवदुक्तेः ।

तद्वाक्यं न शङ्कालेशोऽपि । पुनः भो भगवन् ! तेऽनुदर्शनात् तद्योग्यो भवतीति किं वक्तव्यम् । तस्मात्तद्वाक्याद्भक्तेः प्रारब्धहरत्वमपि निःसन्देहम् । यं मां स्मृत्वा अश्रोत्रियः श्रोत्रियो भवतीति श्रुतौ श्रीभगवद्वचनात् ।

(१) यस्यास्तीत्यस्यार्थः ॥ यस्य प्राणभृतः भगवत्यकिंचना निष्कामा भक्तिरस्ति । तस्मिन् जने सुरा ब्रह्मादयः करणेशाः स्वस्वदिव्यगुणैर्ज्ञानादिभिः सह तत्परिचर्यायै बुद्ध्यादिष्वासते । तत्र स्थिताः सन्तस्तस्यान्तःकरणे

(क) भा॰ पु॰ स्क॰ कारकम् इति पा । (ख) भा॰ पु॰ स्क॰ श्री इति ना ।

एवं तच्छुभमदत्वमुक्त्वा मोक्षलघुताकृत्त्वमाह शुकः ॥

यस्यामेव हि(क)कवय आत्मानमविरतं विविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयन्तस्तयैव परया निर्वृत्या ह्यपवर्ग(ख)मात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्था इति (१) ॥

एवं भक्तेर्मोक्षलघुकृत्त्वमुक्तम् । सुदुर्लभत्वं सान्द्रानन्दत्वं च तु पुरैव यन्न सांख्येन योगेनेत्यादि भक्तिः सिद्धेर्गरीयसीत्यादि द्वाभ्यां श्लोकाभ्यामुक्तम् । इदानीं कृष्णाकर्षणत्वमाह नारदः ।

---

कालोचित(ग)गुणानां स्फुरणं कुर्वन्तीत्यभिप्रायकं सम्यक्पदमिति वाक्याद्भक्तिः शुभदा । हरौ अभक्तस्य भक्त्यभावान्महद्गुणाः कुतः । कीदृशस्य । मनःस्पन्दनेन असति वस्तुनि स्त्रीपुत्रादौ बहिर्धावतः । अयं भावः । तस्मिन्नभक्ते तु क्रोधादिभिः महासुरास्तिष्ठन्ति ॥

(१) यस्यामेवेत्यादिगद्यस्यार्थः ॥ यस्यां भक्तावेव न तु ज्ञानादिषु आत्मानं मनः अनुसवनं स्नापयन्तो भागवतास्तदा स्नानसंबन्धिन्या परया निर्वृत्या अपवर्गं मोक्षं नो एवाद्रियन्ते । हि निश्चयार्थे । एवकारः कस्यर्थे । किं मोक्षाभावे नाद्रियन्ते । न हि । भगवता स्वयमेव दीयमानम् । तर्हि किं तत्पुरुषार्थविशेषाभावात् । नेत्याह ।

---

(क) भा० पु० स्क० हि इति ना० । (ख) भा० पु० स्क० पवर्गेष इति पा० ।
(ग) भा० पु० स्क० तत्तत्कालोचित इति पा० ।

परमपुरुषार्थमपि । अयं भावः । भगवद्दत्तं गृह्णन्त्यपि । तस्यादरं न कुर्वन्ति । अनादरे हेतुः । भगवदीयत्वेनैव तद्दासत्वेनैव परितः समाप्ताः सम्यक् प्राप्ताः सर्वे पुरुषार्था यैस्ते । कथंभूतमात्मानम् । विविधवृजिनेभ्यः शुभाशुभमिश्रितकर्मभ्यः प्राप्तो यः संसारस्तस्मिन्ये त्रिविधतापास्तैरुपतप्यमानमप्यविरतं वैराग्यशून्यं यथा प्रदीपादौ शलभादयः मनो(क)नृपनृपेन्द्रगन्धर्वदेवदेवेन्द्रमहर्ष्यात्मानां नृपादीनामुत्तरोत्तरशतगुणाधिक्येषु स एको महानन्द इत्यादिना श्रुत्युक्तेष्वानन्देष्वरुचये अनुसवनं स्नापयन्त इत्युक्तम् । भगवानपि तदेवाह ।

मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतमिति ।

सेवानन्दापेक्षयाल्पानन्दत्वात्सालोक्यादिचतुष्टयं नेच्छन्तीत्यर्थः । ननु परमपुरुषार्थं मोक्षमनादृत्य किं कुर्वन्ति । तत्राह त्रिभिः ।

पश्यन्ति ते मे रुचिरावतंसप्रसन्नवक्त्रारुणलोचनानि ।
रूपाणि दिव्यानि वरप्रदानि साकं वाचं स्पृहणीयां वदन्ति ।

अथो विभूतिं मम मायाविनस्ता-
मैश्वर्यमष्टाङ्गमनुप्रवृत्तम् ।
श्रियं भागवतीं वा स्पृहयन्ति भद्रां
परस्य मे तेऽश्नुवते नु लोके ।

(क) भा० पु० स्त० मनुष्य इति पा० ।

न कर्हिचिन्मत्पराः शान्तरूपे
नङ्क्ष्यन्ति नो मे निमिषो लेढि हेतिः ।
येषामहं प्रिय आत्मा सुतश्च
सखा गुरुः सुहृदो दैवमिष्टमिति ।

पश्यन्तीत्यादिश्लोकत्रयस्यार्थः ॥ ये मुक्तावपि निःस्पृहास्ते मम रूपाणि(क) वासुदेवसंकर्षणप्रद्युम्नानिरुद्धाख्यान्यस्मिन्नेव लोके पश्यन्ति । मत्स्यादीनि स्वस्वव्यूहयुक्तानि वा । कीदृशानि । दिव्यानि मायातीतानि । पुनः किंविशिष्टानि । रुचिराणि अवतंसानि कर्णभूषणानि प्रसन्नानि वक्त्राणि अरुणानि लोचनानि च येषु । पुनः कथंभूतानि । वरप्रदानि । किं दूराद् जना यथा(ख) नक्षत्राणि पश्यन्ति तथा । नेत्याह । तैः मद्रूपैः साकं सह स्पृहणीयां मनोज्ञां वाचं वदन्ति । अथ मद्रूपसाक्षात्कारानन्तरं मदिच्छया मायाविनो मम(ग)(घ)विभूतिं सत्यलोकादिगतां भोगसंपत्तिम् । भक्तिमनु स्वत एव प्रवृत्तमणिमाद्यष्टयोगैश्वर्यं भद्रां(ङ) भागवतीं श्रियं च वैकुण्ठस्थां संपत्तिं स्पृहयन्ति तथापि नु(च) लोके वैकुण्ठलोकेऽश्नुवते प्राप्नुवन्त्येव । नन्वेवं तर्हि लोकत्वाविशेषात्स्वर्गादिवद्लोकभोग्यानां कदाचिद्वि-

(क) आ० पु० न्त० पश्यन्तत्यधि० वर्त्त० । (ख) आ० पु० न्त० किं जना यथा दूराद् इत्येवं पा० । (ग) आ० पु० न्त० मे इति पा० । (घ) आ० पु० न्त० भद्रां इत्यधि० वर्त्त० । (ङ) आ० पु० न्त० भद्राम् इति ना०' । (च) आ० पु० न्त० नु इति पा० ।

नाशेन(क) पुनः संसारप्राप्तावतिक्लेश एव स्यात् । तत्राह । विशुद्धसत्त्वात्मके मायागुणातीते वैकुण्ठे मत्परा भक्ताः कदाचिदपि न नङ्क्ष्यन्ति भोगहीना न भवन्ति । यतो मे निमिषो हेतिर्मदीयं कालचक्रं तान्भक्तांस्तेषां भोगांश्च नो लेढि न ग्रसति । तत्र तद्विक्रमाभावात् । न यत्र माया न च कालविक्रम इति ।

दर्शयामास लोकं स्वं गोपानां तमसः परम् ।

सत्यं ज्ञानमनन्तं यद् ब्रह्म ज्योतिः सनातनमि-

त्यादिभ्यः । सत्यमित्यादीनि लोकविशेषणानि । स्वमताग्रहेण न त्वात्मविशेषणानि मन्तव्यानि । सम्बन्धाभावात् ।

तां वां वस्तून्युश्मसि गमध्यै

गावो यत्र भूरिशृङ्गा अयासः ।

तदुरुगाय वृष्णः परमं पद-

मवभाति भूरीति श्रुतेः ।

तथा वर्त्तमानकाले भविष्यत्यपि येषामहमेव प्रिय आनन्दप्रदः । आत्मा जीवनहेतुरपि । सुत इव स्नेहविषयः । सखेव विश्वासास्पदम् । गुरुरिव हितोपदेष्टा । सुहृदिवोपकारकारकोऽप्यहमेव । दैवमिष्टमेवं सर्वभावेन मां भजन्ति ये तानपि मदीयं कालचक्रं न ग्रसतीति भावः ॥

(क) आ० पु० स्त · पत्र पुनः इति पा० ।

**सापि साधनरूपा हि फलरूपेति वै द्विधा।**
**आद्या चतुर्विधा ज्ञेया चोत्तरोत्तरवन्दिता॥१०॥**

अपहृतसकलैषणामलात्मन्यविरतमेधितभावनोपहूतः।
निजजनवशगत्वमात्मनो यन्न सरति छिद्रवदक्षरः सतां हि(१)॥
भक्त्या गृहीतचरणः भया च तेषां
नापैपि नाथ हृदयाम्बुरुहात्स्वपुंसामिति
तृतीये ब्रह्मोक्तेरपि (२)॥

एवं भक्तिः षड्गुणा ॥ ९ ॥

तस्या अगुणायाश्चापि द्विविधत्वमाह द्वाभ्याम्। सापीति। कर्ममिश्रेति (क)॥ सा पूर्वोक्ता अगुणा निष्कामापि द्विधा

(१) अपहृतेत्यादिश्लोकस्यार्थः॥ अपहृताः सकलाः पुत्रदार(ख)धनस्वर्गैषणा यस्माद्वैराग्याश्रयादात्मनस्तस्मिन्नात्मनि हृदि अविरतमेधितभावनोपहूतः अविरतं निरन्तरं यथा स्यात्तथा एधिता वृद्धिभावं प्राप्ता पुष्टा या भावना भक्तिस्तयोपहूतो भगवांस्तस्मात्सतां हृदयान्न सरति न गच्छति छिद्रवदाकाशवत्। यथाकाशो हृदः कदापि कुत्रापि न सरति। तथा भगवानपि। यतः अक्षरः। कथंभूतः। आत्मनो निजजनवशगत्वमयन् गच्छन्॥

(२) भक्त्या गृहीतेत्यादिश्लोकार्थः॥ ब्रह्माप्याह

(क) तस्या इत्या० मिश्रेति पर्य० भा० पु० स्त० मा०।
(ख) भा० पु० स्त० गृह इत्यधि० वर्त०।

**कर्ममिश्रा हि वैराग्यमिश्रा ज्ञानयुता तथा ।**
**भक्तिः शुद्धेति मन्तव्या भक्तिविद्भिश्चतुर्विधा॥११॥**

द्विप्रकारा । षड्गुणोदयाभावादेका साधनभूता । तद्भावात् द्वितीया फलरूपा । तयोराद्या साधनभूता तु चतुर्विधा ज्ञेया । कर्ममिश्रा भक्तिः प्रथमा ।

यदा भजति मां भक्त्या निरपेक्षः स्वकर्मभिरित्युक्तेः ।

द्वितीया वैराग्यमिश्रा । वशीकाराख्यवैराग्यमिश्रेत्यर्थः । तदपि द्विविधम् । परं चापरं च(क) । परं तु शुद्धफलभूताङ्गम् ।

न नाकपृष्ठं न च पारमेष्ठ्यं
न सार्वभौमं न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
समञ्जसत्वा(ख) विरहय्य काङ्क्षे इत्युक्तेः(१)॥

---

भगवन्तम्प्रति । हे नाथ तेषां स्वपुंसां भागवतानां हृदयाम्बुरुहाद् हृत्कमलात्स्वं नापैक्षियतो भक्त्या गृहीतचरणः ।

(१) न नाकपृष्ठमित्यादिश्लोकस्यार्थः ॥ हे समञ्जस परमसर्वसौभाग्यनिधे त्वा त्वां विरहय्य(ग) पृथक्कृत्य रसाधिपत्यादीनि पारमेष्ठ्यान्तानि पदानि न काङ्क्षे नाकाङ्क्ष्यहम् ।

---

(क) भा० पु० स्क० अपरम्परञ्च इति पा० । (ख) भा० पु० स्क० स्वाम् इति पा० । (ग) भा० पु० स्क० श्री इत्यधि० वर्त्म ।

अपरं वैराग्यं साधनभूतभक्त्यङ्गम् ।

न कामयेऽन्यं तव पादसेवना-
दकिञ्चनप्रार्थ्यतमाद्वरं विभो ।
आराध्य कस्त्वा ह्यपवर्गदं हरे
वृणीत आर्यो वरमात्मबन्धन-
मित्युक्तेः ॥ (१) ॥

तृतीयाज्ञानमिश्र(क)भक्तिः ।

श्रुतमेतन्मया पूर्वं ज्ञानविज्ञानसंयुतम् ।
धर्मं भागवतं शुद्धं नारदाद्देवदर्शनादिति
मह्ला(ख)दोक्तेः ॥

---

योगसिद्धीः(ग) अणिमाद्यैश्वर्यं वा । अपुनर्भवं मोक्षमपि न काङ्क्षते इति ॥

(१) न कामये इत्यादिश्लोकस्यार्थः ॥ हे विभो अकिञ्चनप्रार्थ्यतमात्तव सेवनसकाशादन्यमात्मबन्धनं वरं न कामये । यतोऽपवर्गदं त्वा त्वामाराध्य क आर्य आत्मबन्धनं वरं वृणीत । अतोऽहं मोक्षवरं कामये । नैर्व्ययमर्थः कुतः ।

निरञ्जनं निर्गुणमद्वयं परं
त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहमिति
तस्य मुचुकुन्दस्यैवोक्तेः ।

तस्मादपवर्गकामत्वादपरं वैराग्यम् ॥

---

(क) ज्ञानमिश्रा इति पा० । (ख) आ० पु० स्त० मह्ला इति पा० ।
(ग) आ० पु० स्त० योगसिद्धीः इति पा० ।

या परा फलरूपा तु चैका चैकाविधा स्मृता ।
निष्ठारातिपराभावप्रेमाङ्गा मुनिदुर्लभा ॥१२॥

तुर्या शुद्धभक्तिः ज्ञानाद्यमिश्रा ।

तस्मान्मद् भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेति
श्रीभगवदुक्तेः ॥

शुद्धभक्तिस्तु ज्ञानकर्मादिसंयुता असंयुता च प्रेमवैचि-त्र्येण नियमाभावात् । उत्तरोत्तरवन्दितेत्युक्तेस्तासां मध्ये शुद्धा श्रेष्ठेत्यर्थः ॥ १० ॥ ११ ॥

या फलरूपा परा सा(क) त्वेका एकप्रकारैव स्मृता भक्ति-शास्त्रज्ञैरिति शेषपूरणार्थः । चकारान्मापि कैश्चिदाचार्यैः कर्मादिमिश्रा शुद्धा चेति द्विप्रकारा प्रोक्तापि भक्तिशास्त्रसिद्धान्ते तु सैकप्रकारैव ।

द्वेषप्रतिपक्षभावाद्रसशब्दाच्च राग इति
भक्तिशास्त्रोक्तेः (१) ॥

अतः प्राकृतमृगानुरागाद्भरतस्य कर्मयोगज्ञानविप्लवो दृष्टः श्रुतश्च । पुनः परमेश्वररागात्तेषां विप्लवस्य का वार्त्ता

(१) द्वेषप्रतिपक्षेत्यादिशाण्डिल्यसूत्रस्यार्थः । द्वेषविरु-द्धत्वाद्रसशब्देन श्रुतौ प्रतिपादितत्वाच्च (ख)राग एव भक्तिः ।

(क) आ० पु० त्व० सा इति पा० । (ख) आ० पु० त्व० च इति ना० ।

वक्तव्या । ते तु भगवद्रागं दृष्ट्वा स्वयमेव गच्छन्ति स्वाङ्गभङ्ग-
भयात् ।

गन्धैर्माल्यैः सुरभिभिर्बलिभिर्धूपदीपकैः ।
उच्चावचैश्चोपहारैः प्रवालफलतन्दुलैरित्युक्तेः ॥

न खलु गोपिकानन्दनो भवा-
नखिलदेहिनामन्तरात्मदृक् ।
विखनसार्थितो विश्वगुप्तये
सख उदेयिवान्सात्वतां कुले इती-

श्वरत्वेन मतिपाद्य किन्तु योषितः कस्त्वयं जन्मिशीत्या-
दिभ्यः॥ एवं स्वाहाविधौ स्वधेति । स्वधाविधौ स्वाहेत्युच्चा-
रणात्कर्म स्वयमेवापसरति । तथा ज्ञानयोगादपि । तस्मात्सैक-
प्रकारा । कीदृशी फलरूपा । मुनीनामपि दुर्लभा ।

देवानां शुद्धसत्त्वानामृषीणाममलात्मनाम् ।
भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते इति
नृपोक्तेः (१) ॥

(१) देवानामित्यादिश्लोकस्यार्थः ॥ मुनिदुर्लभ-
त्वान्मुकुन्दचरणे प्राये॥ देवानां भक्तिर्नोपजायते । किं
सात्त्विकविषयप्रियाणां । नेत्याह । शुद्धसत्त्वानां विषय-
विरक्तानां ब्रह्मादीनां मुनीनामपि नोपजायते । किमन्तः-
करण(घ)शुद्ध्यभावात् । नेत्याह । निर्मलान्तः(ङ)करणा-
नामपि ॥

(क) भा० पु० स्त० अन्तस्करण इति पा० । (ख) भा० पु० न्ते अन्त-
स्करणानाम् इति पा० ।

भगवत्युत्तमश्लोके भवतीभिरनुत्तमा ।
भक्तिः प्रवर्त्तिता दिष्ट्या मुनीनामपि दुर्लभे-
त्युद्धवोक्तेरपि (१) ॥

तस्माच्छुद्धभक्त्याधारपुरुषोऽपि दुर्लभः ।
मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने
इति श्रीभागवते विष्णुरातोक्तेः ॥

पुनः फलरूपा कीदृशी । निष्ठारतिपराभावप्रेमाङ्गा(क) निष्ठारतिपराभावप्रेमाख्यान्यङ्गानि यस्याः सा निष्ठारतिपराभावप्रेमाङ्गा । श्रवणादिषु नैश्चल्यं लयाद्यभावरूपं निष्ठालक्षणम् । तदेव भक्तिप्रथमाङ्गम् ।

(१) भगवत्युत्तमेत्यादिश्लोकस्यार्थः ॥ भो व्रजदेव्यः इदं तु भद्रं जातं नो भाग्येनैवम्भूता मुनिदुर्लभा शुद्धा प्रेमलक्षणा भक्तिस्त्वधुनैव भवतीभिरुत्तमश्लोके भगवति प्रवर्त्तिता । भवतीनामधीनत्वात् ।

तदेत्यनुत्तमा यस्य तस्यास्ते वद्यगेव सा इति
भक्तिप्रभोक्तेः ॥

यतोऽजजाग्रज(सनकादि)(ख)दत्तश्रुतिदेवानां भक्तिस्तु ज्ञानयोगकर्ममिश्रा । शुद्धा त्वधुनैव प्रवर्त्तिता ॥

(क) भा॰ पु॰ स्क॰ । निष्ठारतिपराभावं माङ्गा इति पा॰ ।

(ख) भा॰ पु॰ स्क॰ अजजाग्रज (सनकादि) इत्यस्य स्थले अजसनका- द्यः इति पाठः ।

नष्टप्रायेष्व(क)भद्रेषु नित्यं भागवतसेवया ।
भगवत्युत्तमश्लोके भक्तिर्भवति नैष्ठिकीति (१) ॥
तदा रजस्तमोभावाः कामलोभादयश्च ये ।
चेत एतैरनाविद्धं स्थितं सत्त्वे प्रसीदतीत्युक्तेः (२) ॥
इति निष्ठाङ्गम् ।

परा रतिरेव रतिपरा । छन्दोऽवरोधेन वैपरीत्यपदम् ।
ध्याने स्वरूपेऽरूपगोचरत्वं रतेर्लक्षणम् ।

तस्मिंस्तदा लब्धरुचेर्महामुने
प्रियश्रवस्यस्खलिता रति(ख)र्मम ।
ययाहमेतत्सदसत्स्वमायया
पश्ये मयि ब्रह्मणि कल्पितं परे
इति नारदोक्तेः ॥ (३) ॥

(१) नष्टप्रायेष्वित्यादिश्लोकस्यार्थः ॥ नष्टप्रायेष्वभद्रेष्वनर्थान्तरायेषु सत्सु उत्तमश्लोके भगवति नैष्ठिकी निश्चला भक्तिर्भवति । सर्वाभद्रनाशस्य तदुत्तरकालत्वात्प्रायग्रहणम् ॥

(२) तदा रज इत्यादिश्लोकस्यार्थः ॥ तदा नैष्ठिकीभक्तिप्राप्तौ । रजश्च तमश्च तत्प्रभावा ये च भावाः कामादयस्तैरेतैरनाविद्धम् अनभिभूतं चेतः सत्त्वे भगवद्गुणादिषु स्थितं प्रसीदति प्रसन्नं भवति ॥

(३) तस्मिन्नित्यादिश्लोकस्यार्थः ॥ तस्मिन्स्थले

(क) भा० पु० स्क० नष्टप्रायेषु इति पा० ।
(ख) भा० पु० स्क० मति इति पा० ।

अत्र(क) तदनुभवाद्रत्यङ्गमिदम् ॥ भगवच्चेष्टाकारत्वं देहेन्द्रियाणां भावलक्षणम् ॥

यदा ग्रहग्रस्त इव क्वचिद्धस-
त्याक्रन्दते ध्यायति वन्दते जनम् ।
मुहुः श्वसन्वक्ति हरे जगत्पते
नारायणेत्यात्मगतिर्गतत्रपः ॥

तदा पुमान्मुक्तसमस्तबन्धन-
स्तद्भावभावानुकृताशयाकृतिः ।

तस्मिन्नाश्रमे भिक्षुकगृहे यदा मे रुचिर्जाता तदा लब्धरुचेर्मम प्रियश्रवसि भगवत्यस्खलिता अप्रतिहता अकुण्ठिता तीव्र(ख)रतिरभवत् । मतिरिति पाठे पर्यायभेदः । प्रियं श्रवः कीर्तिर्नामादीनां श्रवणं वा यस्य(ग) तस्मिन्नित्यर्थः । यया रत्याहमेतत् सत्(घ) स्थूलं कार्यशरीरम् । असत्(ङ) सूक्ष्मं कारणं लिङ्गशरीरम् । स्वाविद्यया हरिविमुखतया मयि कल्पितमपश्यं तत्सर्वमेव पश्यामि । कथंभूते मयि । परे देहद्वयातीते । पुनर्ब्रह्मणि व्यापकज्ञानगुणे । शुद्धजीवस्वरूपे इति ॥

(क) आ० पु० स्त० अत्र इति ना० ।

(ख) आ० पु० स्त० तीव्रा इति पा० । (ग) आ० पु० स्त० कीर्तिर्वेदस्य नामादीनां श्रवणं वा इति पा० । (घ) आ० पु० स्त० सदसत् इति पा० ।
(ङ) आ० पु० स्त० असत् इति पा० ।

निर्दग्धबीजानुशयो महीयसा
भक्तिप्रयोगेन समेत्यधोक्षजम्

इति प्रह्लादोक्तेः (१) ॥

(१) यदा ग्रहग्रस्तेत्यादिश्लोकयोरर्थः ॥ तदा पुमान्भावयुक्तोऽधोक्षजं भगवन्तं समेति सम्यगत्रैव सुखेनैवेति प्राप्नोति । तदा कदा तत्राह । यदा ग्रहग्रस्त इव । न तु ग्रहग्रस्तः । कृष्णचन्द्रग्रहाधीनः । क्वचित्सदा स्वतन्त्रमपराजितं भगवन्तं भक्ताधीनं दृष्ट्वा ज्ञात्वा वा आश्रुत्य स्वामामुत्कर्षानन्देन हसति । क्वचित्स्वात्मनो गोचरमाकलय्य भोः त्रिलोकसुन्दर परमदरतमोदिवाकर स्वभक्ताचसंसारासारकर राधिकारमण राजीवचरण(क) मधुमथन सच्चिद्घन सर्वमनोमोहन जानकीजीवन दीनबन्धो दयासिन्धो चराचरहेतो परमधर्मसेतो परमानन्दकेतो राधिकावल्लभ साधनश्रमदुर्लभ प्रणतजनसुलभ सर्वेश्वर मयि कृपां कुरु महापराधिनि । त्वां सुधापारावारमनादृत्य विषयपल्वलोदके मग्नं मीनं मामुद्धर । हे प्रणतहितकुशल मध्यधमे दयां कुरु॰ इत्याक्रन्दते । सितासितनीलपीतरक्तद्रव्यगुणेषु चराचरेषु भगवतः स्मितचन्द्रिकारदनकेशालङ्कारांम्बरनेत्राधर(ख)करपदतलनखानि ध्याय-

(क) आ॰ पु॰ स्त राजीवचरण इति पा॰ । (ख) आ॰ पु॰ स्त॰ चार इति पा॰ ।

एवं भावाङ्गं तृतीयम् । तुर्यं प्रेमाङ्गं भक्तेः । कदाचिद् भगवत्संयोगेऽपि तद्वियोगस्फुरणम् । कदाचिद्वियोगे संयोगस्फुरणम् । कदाचिद्ध्येयध्यानध्यातॄणां स्फुरणम् । कदाचिन्न केषामपि । कदाचिदात्मपरमात्मज्ञानम् । न कदाचिदेवं वैचित्र्यं प्रेमलक्षणम् । यथोत्तरार्द्धे हंसगीते जलक्रीडायां श्रीकृष्णसंयोगेऽपि तत्पत्नीनां वियोगस्फुरणम् ।

ति । तेन ध्यानेनायं भगवानयं श्रीवल्लभः नीलनीरदसुन्दरः प्रणतवत्सल इति मत्वा सर्वं जनं वन्दते । तथापि तत्र तत्र भगवत्साक्षात्कारसुखानुभवाभावात्तद्विरहाग्निना दग्धः परमभावाश्रयो भक्तमणिर्मुहुः श्वसन् हे हरे जगत्पते नारायणेति वक्ति । कीदृशः । आत्मगतिः आत्मा भगवानेव गतिर्यस्य सः । पुनः गतत्रपः । ईदृशो यदा भवति तदाधोक्षजं समेति । कथंभूतः । मुक्तसमस्तबन्धनः मुक्तानि समस्तमायाबन्धनानि प्रारब्धाप्रारब्धकूटबीजपापरूपाणि यस्य सः । पुनः किंविशिष्टः । महीयसा भक्तिप्रयोगेन निर्दग्धा नितरां दग्धा बीजानुशयः कर्मबीजानुशयः अविद्यारूपो लिङ्गदेहो यस्य सः । अतस्तद्भावभावानुकृताशयाकृतिः तस्य भगवतो भावश्चेष्टादि तस्य भावो भावनं तेन भावेन ध्यानेन तदनुकृते आशया(क) कृती मनःशरीरे यस्य सः । अयम्भावः । श्रीहरेर्जन्मकर्मगुणलीलाकृपाकृतिस्मितविलासानां भावनया तत्तदाकारे चेष्टारूपे मनःशरीरे भवतः ।

(क) आ पु । स० आशयाशयाकृती मनः ।

यथा ।

कुररि विलपसि त्वं वीतनिद्रा न शेषे
स्वपिति जगति रात्र्यामीश्वरो गुप्तबोधः ।
वयमिव सखि कश्चिद् गाढनिर्विद्धचेना
नलिननयनहासोदारलीलेक्षितेने-
त्युक्तेः ॥

राधासुधानिधावपि ।

अङ्कस्थितेऽपि दयिते किमपि प्रलापं
हा मोहनेति मधुरं विदधात्यकस्मात् ।
श्यामानुरागमदविह्वलमोहनाङ्गी
श्यामामणिर्जयति कापि निकुञ्जसीम्नीति ।

संयोगे वियोगस्फुरणम् । वेणुगीते वियोगे संयोगस्फुरणम् ।

तद्यथा ।

इति वेणुरवं राजन्सर्वभूतमनोहरम् ।
श्रुत्वा व्रजस्त्रियः सर्वा वर्णयन्त्योऽभिरेभिरे इति

आहूय दूरगान्यद्वत्कृष्णास्तमनुकुर्वतीम् ।
वेणुं क्वणन्तीं क्रीडन्तीमन्या शंसन्ति साध्विति ॥
कस्यांचित्स्वभुजं न्यस्य चलन्त्याहापरां नृप ।
कृष्णोऽहं पश्यत गतिं ललितामिति तन्मना
इति(क) शुकोक्तेः ।

(क) श्री० पु० क्रम० तन्मुनेति इति पा० ।

अस्यार्थस्तु श्रीधरेणोक्तः। यथा। पदे पदे परमानन्दमूर्त्तिं(क) कृष्णं परिरब्धवत्यः। न खलु गोपिकानन्दनो भवानखिलदेहिनामन्तरात्मदृगितीश्वरज्ञानम्। कुहक नो मनः क्षोभयन्ति हीति तदज्ञानम्। प्रियतन्देशैर्व्यपेताविरहज्वरा। ज्ञात्वात्मानमधोक्षजमिति स्वात्मज्ञानम्।

हे नाथ हे रमानाथ व्रजनाथार्त्तिनाशन।
मग्नमुद्धर गोविन्द गोकुलं वृजिनार्णवा-

दित्यज्ञानम्।

बालिमपि बलिमत्वावेष्टयद्ध्वाङ्क्षवद्य इति

भूतकालज्ञानम्।

विजयसखसखीनां गीयतां तत्प्रसङ्ग इति

भविष्यकालज्ञानम्।

तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थ इति

वर्त्तमानकालज्ञानमिति(ख) तद्व्याख्येयम् ॥ १२ ॥

---

मामापुरितीन्द्रोक्तञ्च। अहं ब्रह्मास्मीति श्रुतः। अहं मनुरभवमित्यादिवामदेवोक्तेरपि। इत्यादिभ्यः श्रुतिभ्यः। न च वासवादिभिस्त्वमसीति तत्त्वमसीतिवाक्याज्जीवेश्वरयोरभेदान्वयेन स्वस्मिन्नभावनयोपदेशः कृतः। शास्त्रदृष्ट्या तूपदेशो वामदेववदिति सूत्रोक्तेः। कथं भा-

---

(क) भा० पु० स्क० श्री इत्यादि० वर्जं०। (ख) भा० पु० स्क० वर्तमानकालज्ञानमन्याद् भविष्यत्कालज्ञानमन्यपाठो वर्जं।

वारूढदशायां तथां निरूपणमिति वाच्यम् । सूत्रस्यान्य-
भावार्थत्वात् ।

ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृगिति
शुकोक्तिः ।

यथाहं ज्ञानदो गुरुरिति भगवदुक्तिरित्याद्या शास्त्र-
दृष्ट्या तेन तेनापि गुरुरूपेणान्तर्यामिणा भगवता तस्मिं-
स्तस्मिन्गुरौ शिष्यस्येश्वरबुद्धिं कारयता तस्य तस्य मुख-
चन्द्रेणेश्वरोऽहमिति कथयन्नतोपदेशः(क) कृत इति(ख) दृष्ट्या
भावारूढो वामदेवोऽहं मनुरभवमित्युक्तवान् । अन्यथा
त्व(ग)सुरत्वं स्यात् ।

ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी-
त्यसुरप्रकरणे गीतोक्तेः ।

यर्हि तत्त्वमसीत्यस्य(घ) वाक्यस्य जीवेश्वरयोरभेदा-
न्वय एव श्रुतितात्पर्यार्थस्तर्हि शुको मुक्तो वा वामदेव इति
श्रुतेरज्ञानाभावे ज्ञानस्वरूपे ईश्वरे मामापुरिति वदतीन्दु
देवदेवे कः संदेहो यतः शास्त्रदृष्ट्या तूपदेशो वामदेववत्-
दित्युक्तं व्यासेन अतस्तद्वाक्याज्जाता येश्वरप्रतीतिस्तस्मिं-
स्तन्निषेधार्थं मुक्तदशायामपी(ङ)श्वराभावत्वद्दृढीकरणार्थं
तत्सूत्रम् । अन्यथा ।

भोगमात्रसाम्यलिङ्गाच्च । मुक्तोपसृप्यव्यपदेशादिति-

(क) भा० पु० स्त० कथयन्नुपदेशः इति पा० । (ख) भा० पु० स्त० शास्त्र इत्यधि० वर्तं० । (ग) भा० पु० स्त० स्वा इति पा० । (घ) भा० पु० स्त० अस्य इति पा० । (ङ) भा० पु० स्त० अपीति पा० ।

तत्कामेनापि जीवेन नवधा भक्तिरुत्तमा ।
कर्त्तव्या श्रीहरावेव कायेन मनसा गिरा ॥ १३ ॥

तत्कामेन पूर्वोक्तभक्तिकामेन जीवेन हरावेव कायेन श्रवणार्चनवन्दनदास्यसख्यरूपा पञ्चप्रकारा भक्तिः कर्त्तव्या ।

मूलयोर्विरोधः । तस्माद्भावारूढानां तानि वाक्यानि ज्ञातव्यानि ।

गतिस्मितप्रेक्षणभाषणादिषु
प्रियाः प्रियस्य प्रतिरूढमूर्त्तयः ।
असावहं त्वित्यबलास्तदात्मिका
न्यवेदिषुः कृष्णविहारविभ्रमा

इत्युक्तेः ।

एवं भावारूढत्वेन यो भगवत्साक्षात्कारस्तदेव ब्रह्मनिर्वाणसुखम् ।

अधोक्षजालम्बमिहाशुभात्मनः
शरीरिणां संसृतिचक्रशातनम् ।
तद् ब्रह्मनिर्वाणसुखं विदुर्बुधा-
स्ततो भजध्वं हृदये हृदीश्वरमित्युक्तेः ।

अधोक्षजालम्बमित्यादिश्लोकस्यार्थः ॥ अधोक्षजस्य भगवत आलम्बं मनसः स्पर्शं सामीप्यमेव शरीरिणामात्मनः संसृतिचक्रशातनं संसारभ्रमनिवर्त्तकं नाशकमि-

गिरा कीर्त्तनार्पणरूपा। मनसा स्मरणसेवनात्म(क)समर्पणरूपा त्रिधा । एवं नवप्रकारा । उत्तमेत्युक्तेरन्याप्यनुत्तमा ज्ञेया । एवकाराम्नान्यस्मिन्देवे ।

व्योम्नोऽब्दं भूतशाबल्यं भुवः पङ्कमपां मलम् ।
शरज्जहाराश्रमिणां कृष्णे भक्तिर्यथाशुभमिति
शुकोक्तेः (१) ॥

तदेव तस्या उत्तमत्वमङ्गत्वं चाहाष्टभिः श्रीभगवान् ।

भक्तियोगः पुरैवोक्तः प्रीयमाणाय तेऽनघ ।
पुनश्च कथयिष्यामि मद्भक्तेः कारणं परम् ॥
श्रद्धामृतकथायां मे शश्वन्मदनुकीर्त्तनम् ।
परिनिष्ठा च पूजायां स्तुतिभिः स्तवनं मम(ख) ।
आदरः परिचर्यायां सर्वाङ्गैरभिवादनम् ।
मद्भक्तपूजाभ्यधिका सर्वभूतेषु मन्मतिः ।

त्यर्थः । कुतः । यतः अधोक्षजालम्बमेव ब्रह्म(ग)निर्वाण-सुखं बुधाः पण्डिता बन्धमोक्षविदो विदुर्नापण्डिताः पण्डिताभिमानिनः । ते तु शास्त्रज्ञानविधुरा इदं सगुणसाक्षात्कारसुखं सगुणमनित्यं निर्गुणसाक्षात्कारसुखं तद्रूपं नित्यमेव वदन्ति मन्दाः ॥

(१)व्योम्न इत्यादिश्लोकस्यार्थः ॥ आकाशस्य मेघम् । भूतानां संपर्कमेकत्र वासम् । भुवः पङ्कम् । अपां मलम् ।

(क) आ० पु० स्त० स्मक इति पा० । (ख) आ० पु० स्त० ममेति इति पा० । (ग) आ० पु० स्त० ब्रह्म इति पा० ।

मदर्थेऽङ्गचेष्टा च वचसा मद्गुणेरणम् ।
मय्यर्पणं च मनसः सर्वकामविवर्जनम् ।
मदर्थेऽर्थपरित्यागो भोगस्य च सुखस्य च ।
इष्टं दत्तं(क) हुतं जप्तं मदर्थं(ख) यद् व्रतं तपः ।
मज्जन्मकर्मकथनं मम पर्वानुमोदनम् ।
गीतताण्डववादित्रगोष्ठीभिर्मद्गृहोत्सवः ।
यात्राबलिविधानं च सर्ववार्षिकपर्वसु ।
वैदिकी तान्त्रिकी दीक्षा मदीयव्रतधारणम् ।
एवं धर्मैर्मनुष्याणामुद्धवात्मनिवेदिनाम् ।
मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते

इति ॥ (१) ॥

---

शरज्जहार । ब्रह्मचारिगृहस्थवानप्रस्थयतीनाम् अशुभं वेदपाठादिकं समारदुःखं [illegible] भक्तिः कारणं तेषां या भक्तिः सेत्यर्थः ॥

(१) भक्तियोग इत्यादिश्लोकाष्टकस्यार्थः(ग)॥ एवं धर्मैर्मनुष्याणां मयि भक्तिः सञ्जायते इत्युत्तरेणान्वयः(घ)। कारणमित्येकवचनं जात्यभिप्रायकम् । मद्भक्तः कारणानि

---

(क) आ० पु० स्त० ध्यातम् इति पा०। (ख) आ० पु० स्त० मदर्थम् इति पा०। (ग) आ० पु० स्त० ग्रन्थकृत्सम्बन्धक्रमानुसारेणैव टीकाटिप्पण्यौ लिखिते वर्तेते। आदर्शपुस्तके तु योजनाक्रमेण यथास्थानं पृथक्पृथक्तया नापीदृशी शैली उपलभ्यते। (घ) आ० पु० स्त० एवमित्यादि अन्वयः इत्यन्तं टीकायां श्लोकपाठारम्भ एव लिखितमस्ति।

श्रद्धा गुरुवैष्णवभक्तिशास्त्रोक्तायां मम(क) कथायां विश्वास इतितेन(ख) तन्मननमिति श्रवणाङ्गमिदम्(ग)।मम नामरूपगुणादीनामनुकीर्त्तनं वारं वारं कीर्त्तनम् इति कीर्त्तनाङ्गमिदम्। परितो निष्ठा नैश्चल्यं पूजायां लयाद्यभावलक्षणं परिनिष्ठा अर्चाङ्गमिदम्।स्तुतिभिः मम स्तवनम्।इदमपि कीर्त्तनाङ्गम्(घ)।मम परिचर्य्यायां(ङ) मार्जनोपलेपादि(च)रूपायां स्वयमेव परिचारकलक्षण आदरः(छ) इदं भक्तिकारणं(ज) दास्याङ्गम्(झ)।सर्वाङ्गैर

साधनानीत्यर्थः। परमिति उपकारणा(ञ)कथनेन परं कथयिष्यामीति भावः। तान्येवाह। श्रद्धेति(ट)। मृतसंजीविन्यां मम कथासुधायां श्रद्धा। मदनुकीर्त्तनमिति। स्वकीर्त्तनादीनां स्वस्याभेदाभिप्रायेण मदनुकीर्त्तनमित्युक्तम्। सर्वाङ्गैरष्टाङ्गैः। यद्वा। देहवचनमनोभिर्वन्दनम् इत्यर्थः(ठ)। अभितो वारं वारं वा अधिका अभ्यधिका(ड)। भक्तिकारणत्वात्।

---

(क) आ० पु० स्त० मम इति ना०। (ख) आ० पु० स्त० तेन इति ना०। (ग) श्रद्धा इत्यादि इदमन्तिपर्य्यं० आ० पु० स्त० टिप्पण्यामेव वर्त्तते। श्रद्धा इति चैकवारमेव। (घ) मम नामस्याद्या० इदमपि कीर्त्तनाङ्गमित्यपर्य्यं० आ० पु० स्त० टिप्प० वर्त्तं०। मम इति परिनिष्ठा इति मम इति च ना०। कीर्त्तनमित्यस्य स्थने कीर्त्तनमित्यर्थं इति पा०। (ङ) आ० पु० स्त० मन्मन्दिर इत्यधि०। (च) आ० पु० स्त० पञ्चपाग्यामित्यादि इति पा०। (छ) आ० पु० स्त० तत्परम् इत्यधि० वर्त्त०। (ज) आ० पु० स्त० भक्तिकारणमिव मति पा०। (झ) मम परिचर्य्यायामित्या० दास्याङ्गमिति पर्य्यं० आ० पु० स्त० टि० वर्त्तं०। (ञ) आ० पु० स्त० उपकारणा इति पा०। (ट) आ० पु० स्त० अङ्गैरिति ना०। (ठ) आ० पु० स्त० इत्यर्थं इति ना०। (ड) आ० पु० स्त० अभ्यधिका इति ना०।

भिवादनम्(क) अष्टाङ्गमन्त्रोच्चारणमन्त्रैर्ध्यानैर्वन्दनम्(ख)। वन्दनाङ्गमिदम्। मत्तोऽपि मद्भक्तपूजाभ्यधिका(ग)। पुनस्ते मनोवचोभ्यामनुमोदनमननुमोदनं च कुर्वन्ति। तस्माद्वेतोरपि इदमपि पूजनाङ्गम्(घ)। सर्वभूतेषु मन्मतिः(ङ) ईश्वरबुद्ध्या तेषां हिताचरणम्(च)। इदं स्मरणाङ्गम्। मदर्थेष्वेव मम

सर्वभूतेषु(छ) सर्वेषु उत्तममध्यमकनिष्ठेषु भूतेषु मन्मतिरीश्वरबुद्धिः(ज)। करपदादीनां स्वस्वव्यापाररूपा चेष्टा मदर्थेष्वेव(झ) न त्वन्यविषयार्थे। वचसाप्यन्यभाषणाभावेन मद्गुणेरणम्। अन्योच्चारणा(ञ)भावेऽपि न कदाप्यन्यगुणेरणम्। मद्बुद्ध्या त्वन्यगुणेरणमपि ममैवेति भावः। यद्वा। मन्नामोच्चारणपूर्वकं यत्तन्मद्गुणेरणमित्यर्थः। मय्य(ट)र्पणम् कामाः स्त्रीपुत्रधनदेहस्वर्गशत्रुक्षयमित्रागमादयस्तेषां गत्सेवोत्पत्यर्थनकामेन विशेषेण वर्जनम्। मदर्थेऽपि कामास्पृहत्व सर्वकामविवर्जनमित्यर्थः। मम साक्षात्कारार्थे मज्जन्मकर्मपर्वो(ठ)त्सवेषु

(क) आ० पु० स्क० सर्वाङ्गैरभिवादनमिति ना०। (ख) आ० पु० स्क० वन्दनमित्यर्थं इति पा०। (ग) अर्हणा० अभ्यधिका इति पर्य० आ० पु० स्क० टि० वर्त्त०। (घ) पूजनमित्या० पूजनाङ्गमितिपर्यं० आ० पु० स्क० टि० वर्त्त०। (ङ) आ० पु० स्क० सर्वभूतेषु मन्मतिरिति ना०। (च) आ० पु० स्क० इत्यर्थः इत्यधि० वर्त्त०। (छ) आ० पु० स्क० सर्वभूतेषु इति ना०। (ज) आ० पु० स्क० ईश्वरबुद्धिः इति ना०। (झ) आ० पु० स्क० मदर्थेष्वेव इत्येकवारमेवास्ति टि० (ञ) आ० पु० स्क० उच्चारणा इति पा०। (ट) आ० पु० स्क० सर्व इति पा०। (ठ) सर्वा इत्यादि० पु० स्क० पा०।

कैङ्कर्यार्थेषु(क) एव अङ्गचेष्टा(ख)। (ग)सेवाङ्गमिदम्। वचसा मम गुणेरणम्(घ) इदमपि कीर्त्तनाङ्गम्। मयि मनसोऽर्पणमिति अर्पणाङ्गमिदम्(ङ)। गीतादिभिर्मद्गृहोत्सवः। इदं सख्याङ्गम्(च) ॥ अतो भक्त्यङ्गैरेव हृदि प्राकट्यं न साधनान्तरैः॥ नारदोऽपि प्रबुद्धवाक्येन भक्त्यङ्गं भागवतधर्ममुपधर्मैर्युक्तमाह तन्माहात्म्यपूर्वकम्।

प्रयत्नाभावेऽपि प्राप्तस्यार्थस्य परितः त्यागः। संग्रहे त्वनर्थोदय(छ)दर्शनात्। अयं भावः। मदुत्सवार्थेऽपि द्रव्यसाधनं जुगुप्सितमपि विषयसंग्रहेच्छाभावेन तदर्थमेव कुर्वन्तो मध्यमभागवताः। ये(ज) केवलं द्रव्याय मत्सेवार्चनादिकं कुर्वन्ति ते त्वविद्यामुष्टमतयः। अतः प्रयत्नाभावेऽपि प्राप्तस्यार्थस्य परित्यागः। मद्वियोगे स्रक्चन्दनादेर्भोगस्य। पुत्रलालनादेः सुखस्य च। चकारद्वयादैहिकामुष्मिकफलभोगस्य सर्वस्य त्यागः। यदिष्टादि तपोऽन्तन्तन्मदर्थमेव। मज्जन्म कर्मगुणादीनां कथनम्। द्वादश यात्रासु वार्षिकत्स्वंसु विविधप्रकारं तत्तदनुरूपं पृथक् पृथग् घनपयस्आदिपक्वान्नबलिविधानम्। वेदोक्ता वैदिकी। नारदपञ्चरात्रोक्ता

(क) ईश्वरेत्या० कैङ्कर्यार्थेषु इति पर्य० आ० पु० स्त० टि० वर्त्त०।
(ख) आ० पु० स्त० एव अङ्गचेष्टा इति ना०। (ग) आ० पु० स्त० इति इत्यधि० वर्त्त०। (घ) आ० पु० स्त० वचसा मम गुणेरणमिति ना०।
(ङ) सेवाङ्गमित्या० अर्पणाङ्गमितिपर्य० आ० पु० स्त० टि० वर्त्त०।
(च) गीतेत्या० सख्याङ्गमितिपर्य० आ० पु० स्त० टि० वर्त्त०।
(छ) आ० पु० स्त० द्भव इति पा०। (ज) आ० पु० स्त० वे इति पा०।

श्रुतोऽनुपठितो ध्यात आदृतो वानुमोदितः ।
सद्यः पुनाति सद्धर्मो देवविश्वद्रुहोऽपि हीति ॥(१)॥

तमेव भागवतधर्ममाह प्रबुद्धः ।

सर्वतो मनसोऽसङ्गमादौ सङ्गं च साधुषु ।
दयां मैत्रीं प्रश्रयं च भूतेष्वद्धा यथोचितम् ॥
शौचं तपस्तितिक्षां च मौनं स्वाध्यायमार्जवम् ।
ब्रह्मचर्यमहिंसां च समत्वं द्वन्द्वसंज्ञयोः ।

---

तान्त्रिकी पञ्चसंस्काराङ्का वैष्णवी दीक्षा । मदीयव्रतधारकम्(क)।एवमुक्तप्रकारैर्धर्मैर्भक्त्यङ्गैः श्रवणादिभिर्नवभिर्मयि भक्तिः संजायते सम्यक्त्वमिष्टादिभिः अङ्गैः सह जायते । जातायां भक्तावस्य भक्तियुक्तस्य(ख) कोऽन्योऽर्थोऽवशिष्यते । न कोऽपीत्यर्थः ॥

(१) श्रुतोऽनुपठित इत्यादिश्लोकस्यार्थः । कालत्रयाबाधितो भागवतो धर्मोऽन्यमुखाच्छ्रुतोऽपि स्वयम् पठितो ध्यातो वा आस्तिक्येन गृहीतः । अन्यैः कृतोऽनुमोदितो वा । देवविश्वद्रुहोऽपि पुनाति देवेभ्यो विश्वस्मै(ग) च (घ) द्रुह्यन्ति(ङ) तानपि अनुष्ठितः पुनातीति किं वक्तव्यम् । देव वसुदेवेति संबोधनं वा । भामे सत्यभामे इतिवत् ॥

---

(क) द्वादशाक्षरादिसंस्कारतोभ्यो व्रतधारणमित्यर्थः आ० पु० स्त० ना० । (ख) आ० पु० स्त० भक्तियुक्तस्य इति ना० । (ग) आ० पु० स्त० विश्वम् इति पा० । (घ) आ० पु० स्त० च इति ना० । (ङ) आ० पु० स्त० द्रुह्यन्ति इति पा० ।

सर्वत्रात्मेश्वरान्वीक्षां कैवल्यमनिकेतताम् ।
विविक्तचीरवसनं सन्तोषं येन केनचित् ।
श्रद्धां भागवते शास्त्रेऽनिन्दामन्यत्र चापि हि ।
मनोवाक्कायदण्डं च सत्यं शमदमावपीति ॥ (१) ॥

(१) सर्वत इत्यादिश्लोकचतुष्टयस्यार्थः ॥ आदौ तु साधुषु भागवतेषु सङ्गं भागवतधर्मस्य प्रथमाङ्गमाहुर्मुनय इत्यनुषङ्गः । भक्त्यङ्कुरोत्पत्तिकारणत्वात् । सर्वतो मनसः असङ्गम् । अङ्कूर(क)वृद्धिहेतुत्वात् । भूतेषु श्रद्धा माताम त्वन्यद्वारा यथोचितम् । दयां मैत्रीं प्रश्रयं च । तत्र दीनेषु दयाम् । समेषु मैत्रीम् । महत्सु प्रश्रयं चेत्युपाकृमिदम् । सर्वभूतेषु मन्मतिरिति भक्त्यङ्गेषु भगवदुक्तेः । शौचं तु द्विविधम् । बाह्यमाभ्यन्तरं च । बाह्यं तु यथोक्तं जलमृत्तिकादिभिः । आभ्यन्तरम् अमानादम्भाभ्याम् । तपः गीतोक्तं सात्त्विकम् । यथा ।

देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ।
ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥
अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत् ।
स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥
मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।
भावसंशुद्धिरित्येतत्तपो मानसमुच्यते
इति त्रिविधं तपः ।

(क) अ० पु० अ० अङ्कुर इति पा० ।

इति सत्सङ्गादिभिरिमान्तैर्भागवतधर्मैः पूर्वोक्तैर्भगवत्क-
थितैरेव तस्या भक्तेः प्राकट्यं भवेदित्युक्त्वेदानीं यानि नवा-
ङ्गानि बद्धविषयिमुमुक्षुमुक्तानां कामपूरकाणि तानि संक्षेपेण
विव्रियन्ते तावत् । श्रवणाङ्गमाहात्म्यमाह प्रथमे सूतः ।

---

तितिक्षां जनापकारसहनशीलत्वम् । मौनम् अ-
न्यव्यवहारोच्चारणाभावेन भगवन्नामगुणलीलारूपादीना-
मुच्चारणम् । स्वाध्यायं स्वाधिकारानुरूपं स्वशास्त्रोक्त-
वेदादिपाठादिकम् । आर्जवं स्वच्छताम् । ब्रह्मचर्यं यस्य
यादृगुचितं नैष्ठिकस्याष्टविधमैथुनत्यागादिकम् गृहस्थस्य
ऋतुदानादिकम् । अहिंसां भूतेष्वद्रोहत्वम् । द्वन्द्वसंज्ञयोः
समत्वं रागद्वेषाभावत्वम् । सर्वत्रात्मेश्वरान्वीक्षां चरा-
चरेषु सच्चिदानन्दरूपेण परमेश्वरान्वीक्षां नियन्तृरूपेणे-
श्वरान्वीक्षाम् । यद्वा । तत्सत्ताकनियम्यरूपेण जीवा-
न्वीक्षणम् । स्वसत्ताकनियन्तृरूपेणेश्वरावलोकनम् । केव-
लस्य भावः कैवल्यमेकान्तशीलत्वम् । अनिकेततां गृहा-
द्यभिमानशून्यत्वम् । विविक्तचीरवसनं(क) विजनपतितानां
शुद्धवस्त्रखण्डानां परिधानं वस्त्राभावेऽप्यन्यस्मात्तद्याच्ञा-
पूर्वकग्रहणाभावात् । येन केनचित्सन्तोषम् इन्द्रियलौल्या-
भावात् । परीक्षिच्छुकसंवादे भागवते शास्त्रं श्रद्धाम् ।
अन्यत्र देवतान्तरपरत्वे भक्त्यनादरकारके चानिन्दाम् ।

---

(क) भा० पु० स्क० विविक्तचीरवसनम् इति नः

या याः कथा भगवतः कथनीयोरुकर्मणः ।
गुणकर्माश्रयाः पुम्भिः संसेव्यास्ता बुभूषुभिरिति॥(१)॥
बुभूषुभिर्हरिपार्षददेहधारणं भवितुमिच्छद्भिः । ननु तद्दुष्टमनिबन्धकानामघानां सत्त्वे कथं तत्त्वम्।तत्राह विष्णुरातः ।
शृण्वतां स्वकथाः(क) कृष्णः पुण्यश्रवणकीर्त्तनः ।
हृद्यन्तःस्थो ह्यभद्राणि विधुनोति सुहृत्सतामिति ।

तात्पर्यार्थविवेकात्। मनोवाक्कायदण्ड च प्राणायाममौनकर्मानीहादिभिः क्रमशस्तेषां मनआदीनां दण्डम् । सत्यं यथार्थभाषणम् । शमदमौ शमः अन्तःकरणनिग्रहः भगवद्ध्यानादिभिः । दुःखानित्यबुद्ध्या विषयत्यागेन बहिरिन्द्रियनिग्रहो दमः ॥

(१) या याः कथा इत्यादिश्लोकस्यार्थः ॥ कथनीयानि बहूनि कर्माणि यस्य तस्य भगवतस्तास्ताः कथाः पुंभिर्जीवैः संसेव्याः सम्यग्मनसा सेवनीयाः। काः काः। गुणकर्माश्रयाः ज्ञानानन्दभक्तवात्सल्यादयो गुणाः । विष्णोरुद्भवपालनलयभक्तरक्षणादीनि यानि कर्माणि तेषामाश्रयभूता गुणकर्मविषयास्ता एव सेव्याः। नान्या अगुणकर्माश्रयाः(ख) । तत्पापहरत्वशुभप्रदत्वगुणाभावात् । कीदृशैः पुम्भिः । बुभूषुभिः(ग) ॥

(क)भा० पु० स्क० स्वकथामिति पा०।(ख) ज्ञाना०मन्त्रेण्या० अगुणाकर्माश्रया: इतिपर्व० पा० पु० स्क० पा०। (ग) भा० पु० स्क० बुभूषुभि: हरिपार्षददेहधारणं भवितुमिच्छद्भि: इति टिप्पण्यामेव वर्त्तते न तु टीकायाम् ।

ननु हृदन्तःस्थः अभद्राणि विधुनोतीत्युक्तं तत्त्वनुमानानर्हम्(क) भवति। हृदन्तस्था(ख)न्तर्यामिणः साक्षित्वश्रवणात्। तत्राह।

प्रविष्टः कर्णरन्ध्रेण स्वानां भावसरोरुहम्।
धुनोति शमलं कृष्णः सलिलस्य यथा शरद् इति॥

ननु शुद्धिकारणानि तु बहूनि साधनानि(ग) सन्ति। तत्कथाश्रवणेन किम् इति कुतर्के(घ) तदधिकत्वमाह देवानां वाक्येन।

शुद्धिर्नृणां न तु तथेड्य दुराशयानां
विद्याश्रुताध्ययनदानतपःक्रियाभिः।
सत्त्वात्मनामृषभ ते यशसि प्रवृद्ध-
सच्छ्रद्धया श्रवणसंभृतया यथा स्यात् इति(१)।

(१) शुद्धिरित्यादिश्लोकस्यार्थः। हे ईड्य हे ऋषभ ते यशसि यशःश्रवणे या प्रवृद्धा श्रद्धा तया श्रवणपुष्टया सच्छ्रद्धया यथा सत्त्वात्मनां तव भक्तानां शुद्धिः स्यात्तथा दुराशयानां तव विमुखानां विषयरागिणां नृणां विद्यादिभिर्न स्यात्। विद्या देवतान्तरोपासना। प्राणाद्युपासना वा। श्रुतं कर्मकाण्डबोधकशास्त्रश्रवणं कैवल्य(ङ)शास्त्रश्रवणं वा। अध्ययनं स्वशाखावेदाध्ययनम्। दानं सर्वस्वदानादिकम्(च)। तपः कृच्छ्रचान्द्रायणादि। क्रिया अग्निहोत्रादिकौशल्यम्। तैस्तैर्विद्यादिभिर्न मनसः शुद्धिः॥

(क) नुमानार्हम् इति आ० पु० न्न० पा०। (ख) हृदन्तस्थान्त इत्या० पु० न्न० पा०। (ग) आ० पु० न्न० तु इत्यधि० वर्त०। (घ) आ० पु० न्न० कुतर्केण इति पा०। (ङ) आ० पु० न्न० कैवल्य इति पा०। (च) आ० पु० न्न० सर्वस्वादिकम् इति पा०।

किं च आस्तां दुराशयानां वार्त्ता । यतीनामपि हरिकथाश्रवणं विना न योगसिद्धिरित्याह चतुर्थे मैत्रेयः ।

छिन्नान्यधीरधिगतात्मगतिर्निरीह-
स्तत्तत्यजेऽच्छिनदिदं वयुनेन येन ।
तावन्न योगगतिभिर्यतिरप्रमत्तो
यावद् गदाग्रजकथासु रतिं न कुर्य्यादिति (१)॥

तस्मात्सर्वे विवेकिनो हरिकथासु रतिं कुर्वन्तीत्याहुर्ऋषयः ।

को वा भगवतस्तस्य पुण्यश्लोकेड्यकर्मणः ।
शुद्धिकामो न शृणुयाद्यशः कलिमलापहमिति ॥

---

(१) छिन्नान्यधीरित्यादिश्लोकस्यार्थः ॥ यावद् गदाग्रजस्य वसुदेवनन्दनस्य श्रीकृष्णस्य कथासु गुणकर्माश्रयासु रतिं न कुर्यात्तावद्यतिरपि यत्नवान्(क) जितेन्द्रियोऽपि योगगतिभिरणिमाद्यष्टसिद्धिभिर्यद्वा वृत्तिनिरोधादिभिरप्रमत्तः सावधानो न स्यात् । किं तु सिद्ध्यधीन एव भवति । किन्तत्प्रियो यतिः । नेत्याह । छिन्नान्यधीः छिन्ना नष्टा अन्या देहात्मधीर्देहात्म(ख)बुद्धिर्यस्य सः । अतोऽधिगता प्राप्ता आत्मगतिर्येन सः । ब्रह्मभूत इत्यर्थः । तल्लक्षणान्निरीहः । निर्गताः सर्वेहा यस्मात्सः । पुनः येन वयुनेन ज्ञानेनेदं देहादिकं विश्वमच्छिनत् । तज्ज्ञानमपि तत्यजे त्यक्तवान् । तदप्रयोजनात् । इत्थम्भूतो यतिरपि कथाश्रवणं विना प्रमत्त एव ॥

---

(क) पा० पु० स्त० [illegible] । (ख) आ० पु० स्त० [illegible] इति पुनर्नास्ति ।

तामेव शुद्धिमाह शुकः ।

पिबन्ति ये भगवत आत्मनः सतां
कथामृतं श्रवणपुटेषु संभृतम् ।
पुनन्ति ते विषयविदूषिताशयं
व्रजन्ति तच्चरणसरोरुहान्तिकमिति ।

ननु साक्षात् भक्तिं विना कथं श्रवणमात्रेणान्तःकरणशुद्धौ भगवत्पदप्राप्तिरिति चेत्सत्यम् । तत्सर्वमपि(क) श्रवणादेव भवतीत्याह शुकः ।

ज्ञानं यदा प्रतिनिवृत्तगुणोर्मिचक्र-
मात्मप्रसाद उभयत्र गुणेष्वसङ्गः ।
कैवल्यसम्मतपथस्त्वथ भक्तियोगः
को निर्वृतो हरिकथासु रतिं न कुर्यादिति ॥(१)॥

(१) ज्ञानं यदित्यादिश्लोकस्यार्थः ॥ यदा तु कथासु ज्ञानं भवति । कीदृशम् । आप्रतिनिवृत्तगुणोर्मिचक्रम् आ सर्वतोभावेन प्रतिनिवृत्तं गुणोर्मीणां चक्रं कर्मचक्रं संसारो यस्मात्तन्निर्गुणज्ञानमित्यर्थः । सविशेषं निर्गुणं स्मृतमिति चतुर्विधज्ञानप्रकरणे श्रीभगवदुक्तेः । तत्कृतः । यदा पुनर्यो तु आत्मप्रसादः मनःप्रसादः शुद्धिः । यतो यातु उभयत्र गुणेष्वैहिकामुष्मिकविषयभोगेषु असङ्गः वशीकाराख्यं वैराग्यम् । पुनर्यो तु भक्तियोगः । किंविशिष्टः । मुक्तिमा-

(क) आ। पु० स्त० भ० च तत्सर्वं इति पा० ।

अतस्तद्रसिकस्तु नापवर्गमपि विगणयतीत्याहुः सनकादयो मुक्तमणयः ।

नात्यन्तिकं विगणयन्त्यपि ते प्रसादं
किन्त्वन्यदर्पितभयं भ्रुव उन्नयैस्ते ।
येऽङ्ग त्वदङ्घ्रिशरणा भवतः कथायाः
कीर्त्तन्यतीर्थयशसः कुशला रसज्ञा इति ॥(१)॥

ते रसज्ञा(क) एव भगवन्तं स्वाधीनं कुर्वन्तीत्याह ब्रह्मा ।

ज्ञाने प्रयासमुदपास्य नमन्त एव
जीवन्ति सन्मुखरितां भवदीयवार्त्ताम् ।
स्थाने स्थिताः श्रुतिगतां तनुवाङ्मनोभि-
र्ये प्रायशोऽजित जितोऽप्यसि तैस्त्रिलोक्यामिति(ख)(२)॥

---

न्यपयस्तत्फसारादित्यर्थः । तासु भगवत्कथासु को निर्वृतो रतिं न कुर्यात् ॥

(१) नात्यन्तिकमित्यादिश्लोकस्यार्थः ॥ अङ्ग भोः(ग) । भगवन् । ते तवात्यन्तिकं मोक्षाख्यं प्रसादं ते भक्ता विशेषेण न गणयन्ति । अन्यं न विगणयन्तीति किं वक्तव्यम् । किम्भूतम् । ते भ्रुव उन्नयैर्भ्रूविजृम्भैरर्पितं भयं यस्मिंस्तत् । ते के । तत्राह । ये भगवतः कथाया रसज्ञाः कथासुखविदः । अतः कुशलास्त्वदङ्घ्रिशरणाः ॥

(२) ज्ञाने प्रयासमित्यादिश्लोकस्यार्थः ॥ हे अजित

---

(क) ते रसज्ञा इत्यस्य स्थले भा० पु० स्त० अत इति पा० ।
(ख) भा० पु० स्त० इति इति पा० ।
(ग) भा० पु० स्त० भोः इत्यस्य स्थले हे इति पा० ।

एवं कृष्णाङ्घिचरणमाहात्म्यं ज्ञात्वा महांस्तु तदन्यत्किमपि नेच्छतीत्याह पृथुवाक्येन । पृथुस्तु भगवन्तं प्रत्याह द्वाभ्याम् ।

स उत्तमश्लोक महन्मुखच्युतो
भवत्पदाम्भोजसुधाकणानिलः ।

---

त्रिलोक्यां त्वमजितोऽपि तैर्जितोऽसि ।(क)कैः तत्राह । स्थाने प्रयासः श्रेयो(ख)ज्ञानप्राप्त्यर्थं ज्ञानसाधने प्रकर्षेण य(ग) आयासस्तमुदपास्य संत्यज्य भवदीयां(घ) वार्त्तां तनुवाङ्मनोभिर्नमन्त एव सत्कुर्वन्त एव जीवन्ति। सत्काराभावे तज्जीवनाभाव इत्यर्थः। तन्वा तु कथापुस्तकस्य तत्स्थानस्य वक्तुः परिचर्यया । गिरा वक्तुरनुमोदनेन । मनसा कथार्थानां मननेन एवं सत्कुर्वन्ति एव(ङ) जीवन्तीत्यनेन श्रवणलक्षणमप्युक्तं भवति। कीदृशीं वार्त्ताम् सन्मुखरितां सद्भिर्मुखरिता कथिता या ताम् इत्यनेन सन्मुखरितैव कथा तादृशफलदा भवति नान्येत्यपि सूचितमुक्तं भवति । कथम्भूता ये। स्थाने स्थिताः। स्वस्थाने स्थिताः इत्यनेन वैष्णवमेवका एव ज्ञातव्याः। पुनः कीदृशीं वार्त्ताम्। श्रुतिगताम् अनायासेन श्रवणप्राप्ताम् । अयं भावः । स्वेच्छयैव सेवकानां गृहगतैर्भागवतैः कथिता भगवत्कथा स्वयमेव तेषां श्रवणे प्रविशति या तां श्रुतिगताम् ॥

(क) भा० पु० व्या० तैः इत्यधि० वैत्त० । (ख) भा० पु० गत : भवो इत्यत्र स्थाने यो इति पा० । (ग) भा० पु० व्या० य इति पा० । (घ) भा० पु० व्या० भवदीय इति पा० । (ङ) भा० पु० व्या० सत्कुर्वन्त इति पा० ।

स्मृतिं पुनर्विस्मृत(क)तत्त्ववर्त्मनां
कुयोगिनां नो वितरत्यलं वरैः॥
न कामये नाथ तदप्यहं क्वचि-
न्न यत्र युष्मच्चरणाम्बुजासवः।
महत्तमान्तर्हृदयान्मुखच्युतो
विधत्स्व कर्णायुतमेष मे वर इति(ख)॥(१)॥

(१) स उत्तमश्लोकेत्यादिश्लोकयोरर्थः। उद्गतं तमो यस्मात्स उत्तमश्चासौ श्लोको यशो यस्य स उत्तमश्लोकस्तत्सम्बोधनं हे उत्तमश्लोक भगवन् भवतः पदाम्भोजयोः पद्मकमलयोः सुधा कीर्त्तिस्तस्याः कणानिलो वायुः स कर्णगतः विस्मृत(ग)ब्रह्ममार्गाणां मिद्धप्रधीनामां कुयोगिनां पुनर्ब्रह्मस्मृतिं वितरति। कीदृशः कणानिलः। महन्मुखच्युतः। अतो नोऽस्माकं तव भक्तानां तदितरैर्वरैरलम्। नन्वन्यवरान् मायागुणजन्याननित्यान्मत्वा नेच्छसि। तदुपपन्नम् मुमुक्षूणां कैवल्याधिकारित्वात्। तर्हि कैवल्यं वृणीष्वेति चेत्तत्राह। हे नाथ यस्मिन्युष्मच्चरणाम्बुजासवः मोक्षफलं नास्ति तत्कैवल्यमपि न कामयेऽहम्। तव यशोविधुरात्कैवल्यात्तु संसारं वरं मन्ये तन्नाकाङ्क्षति(घ) भावः। नाथेत्यनेन तदनाथप्रियत्वमुक्तं भवति।

(क) भा० पु० स्क० विस्मृत इति पा०। (ख) भा० पु० स्क० इति इति पा०। (ग) भा० पु० स्क० विस्मित इति पा०। (घ) भा० पु० स्क० तद् इत्यधि० वर्ण०।

यतो गृहस्थानां तु भगवत्प्राप्तौ परमसाधनं हरिकथाश्रवणमेव । तदेवाह श्रीभगवान् ।

गृहेष्वाविशतां चापि पुंसां कुशलकर्मणाम् ।
मद्वार्त्तायातयामानां न बन्धाय गृहा मताः ।
नत्यवत्कृदयं यज्ञो ब्रह्मेतद् ब्रह्मवादिभिः ।
न मुह्यन्ति न शोचन्ति न हृष्यन्ति यतो गता इति(क)(१)॥

इत्थंभूतां भगवत्कथां हित्वा येऽन्यविषयां शृण्वन्ति ते शूकरतुल्या इत्याह श्रीकापिलः ।

कीदृशश्चरणाम्बुजासवः । महत्तमानां भागवतानामन्तर्हृदयान्मुखमागत्य तस्मान्मुखाच्च्युतः । तस्मादामवाद कैवल्यमधिकम् । न सममपि । सुखानुभवाभावात् । तस्मात्तच्छ्रवणाय कर्णायुतं विधत्स्व । मे त्वेष एव वरः ॥

(१) गृहेष्वाविशतामित्यादिश्लोकयोरर्थः ॥ गृहेषु आविशतामभिनिविष्टचित्तानामपि ते गृहा बन्धाय न भवन्ति । कीदृशानाम् । मद्वार्त्तायातयामानां मत्कथाश्रवणेन याता यामा येषाम् । यतः कुशलकर्मणाम् । तस्मात्तेषां गृहास्तु मुक्तिसाधकाः तीर्थभूता भवन्ति । न तु बन्धनहेतवः । ननु तव वार्त्ताश्रवणेनैव तव दासानां कथं गृहा न बन्धाय भवन्तीति चेत्तत्राह । ब्रह्मवादिभिर्वक्तृभिर्निमित्तभूतैर्हेतुभिर्यतः । यतो मत्कथाश्रवणाच्छ्रोतॄणां हृदय-

(क) भा० पु० स्क० इति इति मा० ।

नूनं दैवेन निहता ये चाच्युतकथासुधाम् ।
हित्वा शृण्वन्त्यसद्गाथाः पुरीषमिव विड्भुज इति(क)(१)॥
न केवलं ते तत्तुल्याः किन्त्वतिनिन्द्या इत्याह शौनकः ।
श्वविड्वराहोष्ट्रखरैः संस्तुतः पुरुषः पशुः ।
न यत्कर्णपथोपेतो जातु नाम गदाग्रज इति (ख)(२)॥

दयं ज्ञः सर्वज्ञोऽहं प्रतिक्षणं नूतनवद् अये प्राप्नोमि(ग)। ब्र-
ह्मसाक्षात्कारो भवतीत्यर्थः। यतोऽहमेतदेव निर्गुणं ब्रह्म।
तत्र हेतुः। यतो गताः मां प्राप्ताः सन्तो विषयदर्शने न
मुह्यन्ति तेषु दुःखभावनया । तद्विनाशे न शोचन्ति अ-
नित्यत्वात् । तत्प्राप्तौ न हृष्यन्ति प्रारब्धभोगत्वात् ।
तस्मान्महात्मनामनिकेतनानि तीर्थभूतान्येव ॥

(१) नूनमित्यादिश्लोकस्यार्थः ॥ ते जीवा दैवेन प्राचीनेन कर्मणा कर्णादानेन निहता नितरां हताः। पुनः-पुनर्जन्ममरणात्। नूनन्निश्चितमिदं तु शास्त्रकृद्भिः। ते के। तत्राह। ये अच्युतस्य कथासुधां हित्वा असद्गाथाः स्त्री-पुत्रस्वर्गकथाः(घ) शृण्वन्ति। यथा विड्भुजो ग्रामशूकराः अ-मृतान्नं हित्वा पुरीषं नरमलमदन्ति ॥

(२) श्वेत्यादिश्लोकस्यार्थः ॥ गदस्याग्रजः श्रीकृष्णः जातु कदाचिदपि यद् यस्य न कर्णपथोपेतः स पुरुषपशु-

(क) भा० पु० स्क० इति इति ना०। (ख) भा० पु० स्क० इति इति ना०।
(ग) भा० पु० स्क० प्राप्नोति इति पा०। (घ) भा० पु० स्क० स्त्रीपुत्रस्वर्ग कथाः इति ना०।

न केवलं तैः संस्तुतः(क) किन्तु श्रवणभक्तिविमुखो(ख) नरकंभागित्याह ब्रह्मा ।

यत्र व्रजन्त्यघभिदो रचनानुवादा-
च्छृण्वन्ति येऽन्यविषयाः कुकथा मतिघ्नीः ।
यास्तु श्रुता हतभगैर्नृभिरात्तसारा-
स्तांस्तान्क्षिपन्त्यशरणेषु तमःसु हन्तेति (१) ॥

नाम प्रसिद्धः श्वविड्वराहादिभिः संस्तुतः पशुश्रेष्ठत्वेन स्तुतः । ज्ञानविधुरेण श्वरूपेण मैथुनदुःखाविदुषा शुना ज्ञानवान् निर्लज्जः पुरुषपशुः श्वश्रेष्ठत्वेन स्तुतः। विड्वराहेण ग्रामशूकरेण स्ववर्ण(ग)भक्षत्यागेन मलशायिना मलाहारिणा नरपशुः । परेच्छया भारवाहिना कण्टकाशनेनोष्ट्रेण स्वेच्छयैव गृहभारवाहिकः कुविषयभोगी पुरुषपशुः । अनुगामिना गर्दभेन गर्दभीपादमार्हितेन शश्वद्दासी स्त्रीपादताडितः पुरुषपशुः स्वाधिक्येन स्तुतः ॥

(१) यत्र व्रजन्तीत्यादिश्लोकस्यार्थः ॥ यद्यं वैकुण्ठं प्रति ते न व्रजन्ति । ते के । तत्राह । येऽघभिदः हरेः रचनानुवादाल्लीलागुणानुवादादन्यविषयाः स्त्रीपुत्रस्वर्गद्रव्यसाधनविषयाः कुकथाः शृण्वन्ति। कीदृशीः। मतिघ्नीः सुमतिविनाशिनीः।ताः कास्तत्राह।यास्तु हतैश्वर्यैर्नृभिर्हृ-

(क) आ पु । स्त० स्तुत इति पा० । (ख) श्रवणभक्तिहीनो इत्यादि० पु० स्त पा० । (ग) आ पु । स्व० स्वधर इति पा० ।

एवं कथाविमुखानां दुःखं ज्ञात्वा राजानमुपदिशति शुकः।

तस्माद्भारत सर्वात्मा भगवान्हरिरीश्वरः।

श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयमिति ॥

एवं श्रवणाङ्गं निरूप्य कीर्त्तनाङ्गं निरूप्यते शुकवाक्येन।

कलेर्दोषनिधे राजन्नस्ति ह्येको महान्गुणः।

कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेदिति(क)(१)॥

ननु स्वधर्मादन्तःकरणशुद्धौ ज्ञानप्रवेशेन वैराग्याद्भगवति भक्ति(ख)र्भवति तया कृष्णपदप्राप्तिः। कथं कीर्त्तनादेव कृष्णसामीप्यमिति चेत्। सत्यम्। तत्सर्वमपि(ग) कीर्त्तनादेव भवतीत्याह शुकः।

---

रसज्ञैः श्रुता न तु सभगैः। यत आत्तसाराः श्रोतॄणां गृहीतः सारः पुण्यं याभिस्ताः। भगवद्गुणाभावात्ताः कथास्तान् श्रोतॄन् तमस्सु नरकेषु क्षिपन्ति। का दृशेषु। अशरणेषु रक्षकाभावेषु ॥

(१) कलेरित्यादिश्लोकस्यार्थः ॥ दम्भाहङ्कारकामक्रोधमदमत्सरलोभाद्यसमुद्रस्य कलेः। हि निश्चयार्थे।(घ) एको महान्गुणोऽस्ति। स कः। तत्राह। कृष्णस्य कीर्त्तनादेव मुक्तबन्धः सञ्जीवः परं पुरुषोत्तमं श्रीकृष्णमेव व्रजेत्। एवकारः साधनान्तरव्यावृत्त्यर्थे ॥

---

(क) भा० पु० स्क० इति इति ना०। (ख) भा० पु० स्क० भगवति भ.क्तिरिति ना०। (ग) भा० पु० स्क० अपि तत्सर्वमिति पा०।
(घ) भा० पु० स्क० निश्चितार्थे इति पा०।

कृते यद्ध्यायतो विष्णुं त्रेतायां यजतो मखैः ।
द्वापरे परिचर्यायां कलौ तद्धरिकीर्त्तनादिति(क) ॥(१)॥

तदेव कीर्त्तनस्य(ख) सर्वकर्म(ग)साङ्गकारकत्वमाह शुकः ।

मन्त्रतस्तन्त्रतश्छिद्रं देशकालार्हवस्तुतः ।
सर्वं करोति निश्छिद्रं नामसंकीर्त्तनं तवेति(घ)॥(२)॥

एतच्च सर्वकर्म(ङ)विगुणायनाशकगुणत्वात् । तदेवाहुः पार्षदाः ।

(१) कृते यदित्यादिश्लोकस्यार्थः ॥ कृते सत्युगे विष्णुं ध्यायतः पुरुषस्य यत्फलं वृत्तिनिरोधद्वारा सत्यलोकप्राप्तौ ब्रह्माद्यभेदनादिकम् । त्रेतायां नारायणं मखैर्यजतो जीवस्य यत्फलं स्वर्गभोगादिकम् । द्वापरे परिचर्यायां कृष्णमर्चतः पुरुषस्य यत्फलं भक्तियोगलक्षणम् । तत्सर्वं हरिकीर्त्तनात्कलियुगे भवति । तत्रैतादृशस्य कुतः कीर्त्तनस्य । सर्वकर्मसाङ्गकारित्वात् ॥

(२) मन्त्रत इत्यादिश्लोकस्यार्थः ॥ हे भगवन् मन्त्रतः स्वरभ्रंशादिना । तन्त्रतो व्युत्क्रमादिना । देशतः कीकटादिना । कालतो वेदविरोधादेर्वसन्ताद्यभावरूपात् । अर्हवस्तुतः दक्षिणादिना । यत् कर्मणि छिद्रं वैगुण्यं तत्सर्वं तव नामसंकीर्त्तनं निश्छिद्रं साङ्गं कर्म करोति ॥

(क) भा० पु० स्क० इति इति ना० । (ख) भा० पु० स्क० कीर्त्तनस्य इति पा० । (ग) भा० पु० स्क० कर्म इति ना० । (घ) भा० पु० स्क० इति इति ना० । (ङ) एतच्च सर्वकर्म इत्यस्य स्थाने भा० पु० स्क० यतस्तु इति पा० ।

साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुरिति(क) ॥ (१) ॥

एवं हरिनाम्नः स्वभावतो नामार्थज्ञानेन प्रीत्या स्वो-च्चारणानपेक्षतो जीवनिस्तारणं भवतीत्याह शुकः ।

म्रियमाणो हरेर्नाम गृणन्पुत्रोपचारितम् ।
अजामिलोऽप्यगाद्धाम किं पुनः श्रद्धया गृणन् इति(ख)(२)॥

तत्राजामिलमुक्तौ न शङ्कालेशोऽपि । यतस्तन्मुक्तिं साक्षाद्यमो दृष्ट्वाह भागवतदर्शनेन कृतार्थभूतान्स्वदूतान्प्रति ।

---

(१) साङ्केत्यमित्यादिश्लोकस्यार्थः ॥ साङ्केत्यादिकमपि वैकुण्ठनामग्रहणमशेषाघहरं विदुः स्वयम्भ्वादय इति शेषणार्थः । संकेतस्य भावः सांकेत्यम् । पुत्रादीनां नाम्ना भगवन्नामोच्चारणम् । परिहासस्य भावः पारिहास्यं परिहासच्छलतो हरिनामग्रहणम् । गानपादपूरणार्थं स्तोभम् । अनादरपूर्वकाच्युतनामोच्चारणं हेलनम् । एवंभूतमपि वैकुण्ठस्य नामोच्चारणं सर्वाधौघविनाशकम् ॥

(२) म्रियमाण इत्यादिश्लोकस्यार्थः ॥ जामिः जातिभार्या । तदन्या अजामिः । अजामिं लाति गृह्णातीत्यजामिलः दास्याः पतिः । अधमाधमोऽपि हरेर्धाम वैकुण्ठमगात् । किं कुर्वन्पुत्रोपचारितं पुत्रस्य नारायण इति नाम गृणन् । कीदृशः । म्रियमाणः श्रद्धाविहीनः सोपुत्र-

---

(क) भा० पु० [illegible] (ख) भा० पु० [illegible]

नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ।
अजामिलोऽपि येनैव मृत्युपाशादमुच्यतेति(क) (१) ॥

एवं यमोक्तं सिद्धान्तमुक्त्वा राजानं प्रत्याह शुकः ।
तस्मात्संकीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् ।
महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृत(ख)मिति (२)॥

ननु महतोऽघस्य महत्प्रायश्चित्तमल्पस्याल्पं धर्मशास्त्रोक्तम् । तत्रापि वर्णाश्रमभेदेन शक्तिभेदादपि भिन्नं भिन्नं तत्तदनुरूपम् । न तु कृष्णनामसंकीर्तनमेव सर्वेषामंहसामिति चेत्तत्राहुः पार्षदाः ।

---

मना अपि । पुनः श्रद्धया शुद्धस्तन्नाम गृणन्सन्मुक्तो भवतीति किं वक्तव्यम् ॥

(१) नामोच्चारणेत्यादिश्लोकस्यार्थः ॥ हे पुत्रका इत्यादरे सम्बोधनम् । हरेर्नामोच्चारणमाहात्म्यं पश्यत । साक्षाद् दृष्टत्वात् प्रमाणाप्रयोजनम् । येनैव । एवकारः साधनान्तरव्यावृत्त्यर्थः । नाममात्रेणैव अजामिलोऽपि मृत्युपाशादमुच्यत । न केवलं भवपाशात् ॥

(२) तस्मादित्यादिश्लोकस्यार्थः ॥ हे कौरव्य तस्मादजामिलापवर्गत्वात् महतामपि ब्रह्महत्यादीनां पापानां निष्कृतं(ग) प्रायश्चित्तं विष्णोः संकीर्तनं विद्धि ।

---

(क) भा० पु० स्क० इति इति ना० । (ख) भा० पु० स्क० निष्कृतम् इति पा० । (ग) भा० पु० स्क० निष्कृतम् इति ना० ।

स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः ।
स्त्रीराजपितृगोहन्ता ये च पातकिनोऽपरे ।
सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ।
नामव्याहरणं विष्णोर्यतस्तद्विषया मतिरिति (क) (१)॥

ननु तर्हि शास्त्रज्ञा मुनयोऽपि कथं नामसंकीर्त्तनं संत्यज्य द्वादशाब्दिकं प्रायश्चित्तं स्मरन्तीति चेत्तत्राह यमदेवः ।

प्रायेण वेद तदिदं न महाजनोऽयं
देव्या विमोहितमतिर्बत मायया लम् ।
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां
वैतानिके महति कर्मणि युज्यमान इति (२)॥

कथंभूतम् । ऐकान्तिकं व्यभिचाराभाववत्त्वम् । देशकालाद्यधीनत्वाभावात् । कुतः । यतो जगन्मङ्गलं तत् ॥

(१) स्तेन इत्यादिश्लोकद्वयस्यार्थः ॥ स्तेनादयः परे च पातकिनस्तेषां सर्वेषामघवतामपीदमेव सुनिष्कृतम् । एवकारोऽन्यव्यावृत्त्यर्थे । सुशब्दोऽत्यर्थे । अतिप्रायश्चित्तन्त्विदमेव । तत् किं । यद्विष्णोर्नामव्याहरणम् । तत् कुतः । यतः नामापराधरहितात् विष्णोर्नामव्याहरणात् तत्तस्मिन्नामोच्चारकपुरुषे विष्णोर्विषया मतिर्मदीयोऽयं मया सर्वतो रक्षणीय इति मतिर्भवति ॥

(२) प्रायेणेत्यादिश्लोकस्यार्थः॥ (ख)बत खेदे(ग)।स्वयं(घ)-

(क) भा० पु० स्क० इति इति ना०।(ख)भा० पु० स्क० प्रायेणेति इत्यधि० वर्त्त० (ग) भा० पु० स्क० बत खेदे इति ना० । (घ) स्वायम् इति ना० ।

आस्तां मायामोहितमतेर्वार्त्ता। अपि तु केऽपि न विदुरित्याह।

धर्मं तु साक्षाद्भगवत्प्रणीतं
न वै विदुर्ऋषयो नापि देवाः।
न सिद्धमुख्या असुरा मनुष्याः
कुतश्च विद्याधरचारणादयः॥
स्वयम्भूर्नारदः शम्भुः कुमारः कपिलो मनुः।
प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम्॥
द्वादशैते विजानीमो धर्मं भागवतं भटाः।
गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वामृतमश्नुते इति(१)॥

---

मन्वादिद्वादशव्यतिरिक्तो महाजनो धर्मशास्त्रकारकः अयम् इदं भगवन्नाममाहात्म्यं न वेद(क)। यतः मायया देव्या अत्यर्थं विमोहितमतिः। हरिविमुखत्वात्। कीदृशः। तया मायया मधु मधुरं यथा स्यात्तथा पुष्पितायां फलस्थानीयपुष्पप्रतिपादिकायां स्वर्गपरायां वेदत्रय्यां जडीकृतमतिरभिनिवेशितमतिः। अतो वैतानिके मखोत्सवे महति कर्मण्यप्यल्पफलदातरि नियोज्यमानो महाफलदातर्यप्यल्पायासे नाम्नि न प्रवर्तते भाग्याभावात् ॥

(१) धर्ममित्यादिश्लोकत्रयस्यार्थः ॥ मन्वादिमुखेन भगवत्प्रणीतान्धर्मांस्तु देवर्ष्यादयः सर्वे विदुरपि। साक्षाद्भगवता श्रीकृष्णेन नारायणेन प्रणीतो यो धर्मस्तं तु

---

(क) भा० पु० [illegible] ।

ननु पापहरत्वेन भागवतधर्मरूपस्य नामसंकीर्त्तनस्य माहात्म्यवर्णनात्तत्कर्माङ्गत्वमसङ्गः। मायश्चित्तान्तरपातित्वात्। तेन कथं मोक्ष इति चेत्तत्राह यमदेवः।

एतावतालमघनिर्हरणाय पुंसां
संकीर्त्तनं भगवतो गुणकर्मनाम्नाम्।

मरीच्यादय ऋषयोऽपि न विदुः। नापीन्द्रादयो देवाः। तर्हि शास्त्रकर्तृत्वात्सिद्धा विदुर्नेत्याह। न सिद्धमुख्याः। कुतोऽसुराः। तर्ह्यतिविषयसुखाभावात्साधनाधिक्येन मनुष्या विदुः। नेत्याह। न मनुष्याः। कुतो विद्याधरादयः। ननु कोऽपि न जानन्ति। तर्हि तत्सत्त्वे किं प्रमाणम्। तत्राह। स्वयंभ्वादयो द्वादशैते वयं भागवतं धर्मं विशेषेण जानीमः। अन्ये भागवतास्तु सामान्येन। स्वयम्भूर्ब्रह्मा। कुमारः सनत्कुमारः। स्कन्दो वा। जनकः बहुलाश्वः सीरध्वजो वा। वैयासकिः शुकः। वयमित्यात्मानं बहु मन्यमानः। तं कं भागवतं धर्मम्। यं ज्ञात्वाऽमृतं मोक्षमश्नुते। तमासेव्यामृतमश्नुत इति किं वक्तव्यम्। यतः विशुद्धं मायागुणातीतम्। ननु तर्हि(क) सर्वे तं ज्ञात्वा कथं न मुक्ता भवन्ति। तत्राह। दुर्बोधम्। भगवत्कृपाबोध्यत्वात्। भागवतानां सङ्गेन तु सुबोधम्। यतः गुह्यं वेदैः कर्मजवनिकाच्छादितमित्यर्थः॥

(क) भा० पु० न्त० तर्हि इति ना०।

विक्रुश्य पुत्रमघवान्यदजामिलोऽपि
नारायणेति म्रियमाण अवाप मुक्तिमिति(१)॥
तस्मान्न तत्कर्माङ्गत्वं प्रायश्चित्तत्वम् ।
तत्स्थानत्वादनन्यधर्मः खलेवालीवदिति
शाण्डिल्यसूत्रोक्तेः॥(२)॥

(१) एतावतेत्यादिश्लोकस्यार्थः ॥ भगवतो गुणानां कर्मणां नाम्नां च (क) सम्यक्कीर्त्तनं केवलमघनिर्हरणाय (ख)एतावता अलम् । अलंशब्दोऽत्र(ग) वारणे। अलं भूषणपर्याप्तिशक्तिवारणवाचकमित्यभिधानोक्तेः । केवलं पापविनाशाय कीर्त्तनं न भवति । किंतु मोक्षाय । यतस्तदेव मोक्षकारणम्। पापहरत्वं त्ववान्तरफलम्। तदेवाह । अजामिलोऽपि महाधमाधमो(घ) म्रियमाणः श्रद्धाविहीनोऽपि यतो नाम्ना(ङ) मुक्तिमवाप।किंकृत्य । नारायणेति पुत्रं विक्रुश्य । न तु नारायणम् । तस्मात्प्रासङ्गिकान्नाम्नोऽपि मुक्तिमवाप । सम्यग्नामसंकीर्तनस्य माहात्म्यन्त्वनिर्वचनीयम् ॥

(२) तत्स्थानत्वादित्यादिशाण्डिल्यसूत्रस्यार्थः ॥ प्रायश्चित्तं तु तस्येदं हरिसंस्मरणं परमित्यादौ प्रायश्चि-

(क) आ० पु० स० स नाम्नाम् इति पा० । (ख) आ० पु० स० पु सां कीर्तनम् इत्यधि० वर्त्त० । (ग) आ० पु० स० शक्ति इत्यधि० वर्त्त० । (घ) आ० पु० स० अपीत्यधि० वर्त्त० । (ङ) आ० पु० स० नाम्नो इति पा०

प्रायश्चित्तान्यपि हरिनामबलेन पुनन्ति नान्यथा । तदेवाह शुकः ।

प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ।
न निष्पुनन्ति(क) राजेन्द्र सुराकुम्भमिवापगा इति (१)॥

एवं(ख) नाममाहात्म्यं विजानतापि स्वायम्भुवमनुना भक्त्यनधिकारिणां विषयिणां जीवानामघविनाशाय नामबलानि प्रायश्चित्तानि वर्णितानि । सर्व्वपापहरत्वेन नाममाहात्म्यवर्णनात्कर्माङ्गत्वं स्यात्प्रायश्चित्तान्तरभंवशादिति आत्व।

तत्स्थाने विहितत्वादपि न हरिस्मरणस्य प्रायश्चित्तधर्मत्वं खलेवालीयत् । खलेवाली यूपो भवतीत्यत्र पश्वर्थयोजने यूपकारके खलेवालीविधिर्न तु यूपधर्माष्टास्रकरणादिप्रसक्तस्तद्वदत्रापि न खलोमादिवपनानां प्रायश्चित्तधर्मत्वासम्प्राप्तेन हरिनाम्नः प्रायश्चित्तत्वं कर्माङ्गत्वमित्यर्थः ॥

(१) प्रायश्चित्तानीत्यादिश्लोकस्यार्थः । हे राजेन्द्र चीर्णानि सम्यक्कृतानि प्रायश्चित्तानि संमिलितान्यपि नारायणपराङ्मुखं नारायणविमुखम् एकम् अपि पुमांसं न निष्पुनन्ति(ग) न निष्पापं कुर्वन्ति। यथा सुराकुम्भं पवित्रकारिण्योऽपि नद्यः न पुनन्ति ॥

(क) आ॰ पु॰ स्तं॰ निष्पुनन्ति इति पा॰। (ख) आ॰ पु॰ स्तं॰ नामा इत्यधिकं वर्त्तते। (ग) आ॰ पु॰ स्तं॰ पुनन्ति इति पा॰।

तन्माहात्म्यं नोक्तम् । पुनः सर्वसाधननिषेधेन (क) नामाधिक्यनिरूपणात्तत्प्रीत्या सर्वजीवमुक्तिमसङ्गस्सद्सहमानस्य सृष्टिविस्ताराभियस्य जनकस्य शापभयादपि तादृशपापाभावादपि च । एवं ज्ञात्वा भक्त्यनाधिकारिणो वर्णाश्रमधर्मपरा अपि नामाश्रयाः सन्तः पापनिवृत्तये प्रायश्चित्तान्तराणि कुर्वन्तु । भागवतानान्तु तत्र कुत्रत्यमन्यधिकाराभावादघतमोनाशकसाधनार्कप्रकाशफलं च हरिनामसंकीर्त्तनमेव । तदेवाह शुकः ।

> नातः परं कर्मनिबन्धकृन्तनं
> मुमुक्षतां तीर्थपदानुकीर्त्तनात् ।
> न यत्पुनः कर्मसु सज्जते मनो
> रजस्तमोभ्यां कलिलं ततोऽन्यथेति (१) ॥

(१) नातः परमित्यादिश्लोकस्यार्थः ॥ तीर्थानि गङ्गादीनि शास्त्राणि वा पदानि यस्य स तस्य भगवतोऽनुकीर्त्तनादतः परं कर्मनिबन्धकृन्तनं साधनं मुमुक्षतां नैव। तेषां तु तदेव साधनं फलम् । अन्यत्राधिकाराभावात् ।

लघ्वपि भक्त्यधिकारे महत्क्षेपकमपरसर्वहानादिति
शाण्डिल्यविद्योक्तेः ॥

लघ्वपि भक्त्यधिकार इत्यादिशाण्डिल्यविद्यासूत्रस्यार्थः ॥ लघ्वपि सकृत्स्मरणकीर्त्तनादि महतां पापानामपि क्षपकं नाशकं भवति। यतो भक्त्यधिकारे परस्वं-

(क) भा० पु० ... इति पा० ।

तथापि न केवलं मुमुक्षूणामेव सुखजनकं भगवन्नामसंकीर्त्तनं(क) किंतु त्रिविधजनानां विषयिमुमुक्षुमुक्तानामभीष्टफलजनकं (ख)न(ग)देवेत्याह शुकः ।

एतान्निर्विद्यमानानामिच्छतामकुतोभयम् ।
योगिनान्नृप निर्णीतं हरेर्नामानुकीर्त्तनमिति (१) ॥

प्रायश्चित्तानां हानगानात् परित्यागत्वज्ञानात् । भक्तानां भक्तेरितरसाधनेष्वधिकाराभावात् ।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच

इत्य(घ)परसर्वप्रायश्चित्तान्तरहानात् हानगानात् ॥

तस्मात्तेषां तु कर्मबन्धनच्छेदकं तदेव सर्वेषामपि । अन्ये तु कर्मबन्धने सुखबुद्धयः । यद्यागोऽनुकीर्त्तनाद् मनः पुनः कर्मसु न सज्जते दुःखानुभवात् । कीर्त्तनानन्दावाप्तेः । ततोऽन्यथा तस्मात्कीर्त्तनात्साधनान्तरैस्तु तत्र सुसज्जते । यतो रजस्तमोभ्यां कलिलं मनस्तु रजस्तमो गुणजलप्रवाहे पतितं तज्जन्य(ङ)कर्मसमुद्रस्य संयोगे तत्र निमग्नं(च) भवतीति भावः ॥

(१) एतन्निर्विद्यमानानामित्यादिश्लोकव्यार्थः ॥

हे नृप इच्छतामानाकामामिच्छतां विषयिणां विषय-

(क) आ० पु० स्त० अत्र भगवन्नामसङ्कीर्त्तनमिति ना० ।
(ख) आ० पु० स्त० अत्र भगवन्नामसंकीर्त्तनमित्यधिकं । (ग) आ० पु० स्त० तद् इति ना० । (घ) आ० पु० स्त० शुचेति पद इति पा० । (ङ) आ० पु० स्त० तज्जन्यद्य इति पा० । (च) आ० पु० स्त० न इत्यधिक वर्ण० ।

कामिनामपि न केवलं कामप्रदं मुक्तिदमपीत्याह ।

एतद्ध्यातुरचित्तानां मात्रास्पर्शेच्छया मुहुः ।
भवसिन्धुप्लवो दृष्टो हरिचर्यानुवर्णनमिति (२) ॥

मुक्तानां तु तत्फलमेवेत्याह स्वानुभवेन नारदः ।

साधनमेतदेव(क) । निर्विद्यमानानां वैराग्यशीलानां मुमुक्षूणां ज्ञानसाधनमप्येतदेव । योगिनां मुक्तानामेतदेव प्रेम(ख)साधनम् । तत्किम् । हरिनामानुकीर्त्तनम्। ननु फलसंख्यातानि साधनानि श्रुतानि । कथं सर्वफलानां तदेव साधनम् । तत्र तु अद्धैव(ग) तादृशीति चेत्तत्राह विशेषणम् । कीदृशं निर्णीतं सर्वफलदातृत्वेन नारदादिभिर्वेदशास्त्रार्थसमुद्रं मथित्वा निर्णीतं यथा सर्वकामसाधको देववृक्षः। पुनः किंविशिष्टम् । अकुतोभयं न तु कर्मयोग(घ)ज्ञानादीनामिव देशकालयमनियमकामक्रोधादिभिर्हतम्।

(२) एतद्धीत्यादिश्लोकस्यार्थः ॥ मात्रा विषयास्तेषां स्पर्शा भोगाः । मुहुस्तदिच्छया(ङ) आतुरचित्तानां विषयभोगसागरे मग्नानां भवसिन्धुतारणहेतुः प्लवो मया दृष्टः।न केवलं(च) श्रुतः। स कः । यद्धरिचर्यानुवर्णनं भगवन्नामगुणधामरूपकीर्त्तनात्मक(छ) इत्यर्थः ॥

(क) आ० पु० स्त० एतदेव इति ना० । (ख) आ० पु० स्त० प्रेम इति ना० । (ग) आ० पु० स्त० अद्धैव इति पा० । (घ) आ० पु० स्त० योग इति पा० । (ङ) आ० पु० स्त० तदीप्सया इति पा० । (च) आ० पु० स्त० मया इत्यधिकं वर्त्त० । (छ) आ० पु० स्त० स्मकम् इति पा० ।

प्रगायतः स्ववीर्याणि तीर्थपादः प्रियश्रवाः।
आहूत इव मे शीघ्रं दर्शनं याति चेतसीति (१)॥

इत्थंभूताद्धरिकीर्त्तनाद्विमुखस्त्वतिजुगुप्सित इत्याह नृपेन्द्रः।

निवृत्ततर्षैरुपगीयमानाद्
भवौषधाच्छ्रोत्रमनोऽभिरामात्।
क उत्तमश्लोकगुणानुवादा-
त्पुमान्विरज्येत विना पशुघ्नादिति (२)॥

(१) प्रगायत इत्यादिश्लोकस्यार्थः॥ तस्य भगवतो वीर्याणि प्रकर्षेणान्यकामाभावेन गायतो मम चेतसि तीर्थपादो भगवान्दर्शनं प्रति याति। स्वस्य वीर्याण्ययं प्रगायतीति(क) ज्ञात्वा। आहूत इव शीघ्रं चित्तगोचरो भवतीत्यर्थः। यतः प्रियश्रवाः प्रियं भक्ताधीनस्वरूपं श्रवो(ख) यशः श्रवणं वा यस्य सः॥

(२) निवृत्ततर्षैरित्यादिश्लोकस्यार्थः॥ उत्तमश्लोकस्य भगवतो गुणानुवादात्कः पुमान्विरज्येत। विना पशुघ्नात्। अपगता शुग्यस्मात्तं स्वात्मानं हन्तीत्यपशुग्घ्नस्तस्मात्। पुमान्भवाब्धिं न तरेत्स आत्महेति भगवद्वचनात्। तदधःपातित्वमेव हननम्। यद्वा। पशून् हन्तीति पशुघ्नस्तस्माद्भिन्नो। मुख्यार्थस्तु कर्मवादाश्रयाद्भिन्नो गुणानुवादाद्विरज्येत विरक्तो भवेत्। न कोऽपीत्यर्थः।

(क, ओ० पु० स्त० प्र इ.त ना०। (ख) ओ० पु० स्त० श्रवो इ.त ना०।

अतः कीर्त्तनाविमुखः श्रेष्ठोऽप्यात्महा । तद्रसिको नीचोऽपि सर्वश्रेष्ठस्तदेवाह देवहूतिः ।

अहो बत श्वपचोऽतो गरीया-
न्यज्जिह्वाग्रे वर्त्तते नाम तुभ्यम् ।
तेपुस्तपस्ते जुहुवुः सस्नुरार्या
ब्रह्मानूचुर्नाम गृणन्ति ये ते इति (१) ॥

(क)पशुहिंसायां स्वयमेव करणकर्त्तृरूपो भवति यः(ख) स तु कालातिक्रमेण कर्मवैगुण्यात्कर्मफलभ्रंशभयाद्विरज्येत। अनीश्वरवादाभिनिवेशात् । कथंभूताद् गुणानुवादात् । निवृत्ततर्षैरुपगीयमानात् । गततृष्णैर्मुक्तैर्भगवदुपसमीपे गीयमानात् तत्परमव्यसनात्फलादपि । यतोऽधिकारभेदेन श्रवणादीनि नैवाङ्गानि साधनान्यपि फलानि च । पुनः कथंभूतात् । भवौषधात् मुमुक्षूणां भवामयनिवर्त्तकात् । पुनः किंविशिष्टात् । श्रोत्रमनोऽभिरामात् श्रवणमनसोः(ग) सुखप्रदात् विषयिणां परमविषयात् । यतः केचिदनुवादाः श्रवणप्रियत्वेऽपि हृदप्रियाः । केचिन्मनःप्रियत्वेऽपि कर्णाप्रियाः । भगवद्गुणानुवादस्तु श्रोत्रमनोऽभिरामः । अत्रचरोचकत्वेन परिणामे सुखप्रदत्वात् ॥

(१) अहो बतेत्यादिश्लोकस्यार्थः॥ यद्यस्य जिह्वाग्रे

(क) आ० पु० न्न । य. इत्यधि । वर्त्त० ॥ (ख) आ० पु० न्न० य इति ना० ।
(ग) आ० पु० न्न । श्रवणमनस इति पा० ।

विशेषं च दर्शयतीति वेदान्तोक्तेः (१) ॥

तस्मान्नामोपासकः श्रेष्ठः(क) एवं ज्ञात्वाह प्रह्लादः ।

तस्मादहं विगतविक्लव ईश्वरस्य
सर्वात्मना महि गृणामि यथामनीषम् ।
नीचोऽजया गुणविसर्गमनुप्रविष्टः
पूयेत येन हि पुमाननुवर्णितेनेति (२) ॥

---

तुभ्यं तव नाम वर्त्तते स श्वपचोऽपि गरीयानिति । बतशब्दो हर्षे । अर्थान्नामविमुखः श्रुतिकार्यपि(ख)निन्द्यः । देहापवित्रत्वादित्याश्चर्ये अहो । कुतः श्वपचो गरीयांस्तत्राह । यतस्ते नाम ये गृणन्ति ते तपस्तेपुः कृतवन्तः । जुहुवुर्होमं कृतवन्तः । त एव सर्वतीर्थेषु स्नाताः । आर्याः सदाचारा अपि । त एव ब्रह्म वेदमनु वारं वारमूचुः । नाम्नः सर्वमूलत्वात् । अतो हेतोः ॥

(१) विशेषं च दर्शयतीति वेदान्तसूत्रस्यार्थः ॥ नामोपास्स्वे(ग)त्यादिश्रुत्या प्रतीकोपासनेषु नामोपासनाया अधिकफलमुक्तन्तस्मान्नामोपासकः श्रेष्ठः ॥

(२) तस्मादहमित्यादिश्लोकस्यार्थः ॥ यतः कीर्त्तनरसिको नीचोऽपि गरीयांस्तस्मादहमसुरोऽपि विगतविक्लवः असुरत्वाधिशून्य ईश्वरस्य महि महिमानं यथाम-

---

(क) आ० पु० टीकायां तस्मान्नामोपासकः श्रेष्ठ इति ना० ।
(ख) आ० पु० स्त० श्रुत्यधिकार्यपि इति पा० । (ग) आ० पु० स्त० पास्स्वे- इति पा० ।

अतोऽन्याभिधासती गीरपि भगवद्गुणसंकीर्त्तनेन शुद्धा सफला भवति । तद्रहिता तु निष्फला निन्द्या ।

तदेवाह स्वयं भगवान् ।

यस्यां न मे पावनमङ्ग कर्म-
स्थित्युद्भवस्थाननिरोधमस्य ।
लीलावतारेप्सितजन्म वा स्या-
द्वन्ध्यां गिरं तां बिभृयान्न धीर इति (१) ॥

न केवलं भगवद्गुणरहिता गिरो वन्ध्याः किन्तु मृषा अ-सतीरित्याह सूतः ॥

---

मोषं(क) बुद्धिमनतिक्रम्य गृणामि । यतः येनानुवर्णितेन महिम्ना नीचोऽपि पूयेत । कीदृशः । अजया मायया स्वाविद्यया गुणानां सत्त्वादीनां विसर्गं संसारं वारंवारं प्रविष्टः ॥

(१) यस्यां नेत्यादिश्लोकस्यार्थः ॥ अङ्ग हे उद्धव । यस्यां वाचि । वा वै निश्चयार्थे । मे कर्म जन्म(ख) च न स्यात्तां वन्ध्यां गिरं धीरश्छेदमदुःखमहन-शीलस्तु न धारयेत् । नित्यनरकदुःखप्रदत्वात् । किं भूतं कर्म । अस्य विश्वस्य उत्पत्ति(ग)स्थितिलयात्मकस्मज्ञान दम् । किंविशिष्टं जन्म । लीलावतारैर्मत्स्यादिभिरीप्सितं वाञ्छितं मद्भक्तिदम् ॥

---

(क) आ० पु० स्त० यथामनीषम् इति पा० । ख) आ० पु० स्त० जन्मकर्म इति पा० । (ग) आ० पु० स्त० विश्वोत्पत्ति इति पा० ।

मृषा गिरस्ता ह्यसतीरसत्कथा
न कथ्यते यद् भगवानधोक्षजः ।
तदेव सत्यं तदु हैव मङ्गलं
तदेव पुण्यं भगवद्गुणोदयम् ।
तदेव रम्यं रुचिरं नवं नवं
तदेव शश्वन्मनसो महोत्सवम् ।
तदेव शोकार्णवशोषणं नृणां
यदुत्तमश्लोकयशोऽनुगीयते इति (१) ॥

(१) मृषा गिर इत्यादिश्लोकद्वयस्यार्थः ॥ या असत्कथाः स्त्रीपुत्रस्वर्गविषयकथा गिरः । यद्याभिः कदापि भगवानधोक्षजो न कथ्यते ता गिरो मृषा असतीः । तर्हि किं सत्यमित्यपेक्षायामाह । तदेवेति । यच्छ्रवणे भगवद्गुणोदयं वदनेनानुगीयते च । तदेव सत्यं कालत्रयाबाधितम्।न तु यथार्थभाषणम् । तदघप्राप्तेः। तदेव मङ्गलम्प्रमोदः । न तु पुत्रादिजन्मरूपम् । तन्मरणद- र्शनात् तदेव पुण्यं सुखजनकम्।न तु मखजम् । स्वर्गपत- नात् । तदेव रम्यम्मनोज्ञम्। न तु नेत्रसुखदविषयदर्शनम्। परिणामित्वात्। स्वाभाविकाभावाच्च । तदेव रुचिरं रुचि- जनकम् । न तु पुत्रकलभाषणादिकम् । अनित्यत्वात् । तदेव नवन्नवम् । न तु स्वर्गभूषणादिकम्। भुक्तभोगात्। त- देव मनसो महोत्सवम्। न तु भवनादिकम्। नानाविग्रह-

तस्मात्स्वहितविद्भिर्हरिकीर्त्तनमेव कर्त्तव्यम् (क)॥

एवं कीर्त्तनाङ्गमुक्त्वा ध्यानाख्यं स्मरणाङ्गमाह शुकवाक्येन।

ते सभाग्या मनुष्येषु कृतार्था नृप निश्चितम्।

स्मरन्ति स्मारयन्ति ये हरेर्नाम कलौ युगे इति (१)॥

ननु शमादिसाधनैरभद्रनाशाद्द्वारान्तःकरणशुद्धौ ज्ञानप्रवेशेन विज्ञानाद् भगवद्भक्त्या जीवाः कृतार्था भवन्ति।

---

तत्वात्। तात्कालिकत्वाच्च। नृणां तदेव शोकार्णवशोषणम्। न तु शास्त्रादिकम्। तद्वति शोकदर्शनात्। एवकारः षड्भावृत्त्या भगवद्गुणोदयाभावे सत्यं यथार्थभाषणमप्यसत्यं पापजनकमेवाग्न्यादीनामिव। पुत्रजन्मादिकं मङ्गलमप्यमङ्गलमेव अङ्गचित्रकेतूनामिव। पुण्यमपि पापमेव त्रिशङ्क्वादीनामिव। रम्यं विषयदर्शनमपि बीभत्समेव। रुचिरमपि ग्लानिप्रदम्। नवन्नवमपि जीर्णञ्जीर्णम्। ज्ञानादिकं शोकार्णवशोषणमपि शोकार्णवमेव स्यात्। एवं सर्वाणि सुखानि दुःखान्येव भवन्ति। तस्मात्स्वहितविद्भिर्हरिकीर्त्तनमेव कर्त्तव्यमिति निर्द्धारणार्थः (ख) ॥

(१) ते सभाग्या इत्यादिश्लोकस्यार्थः ॥ मनुष्येषु स्वधर्मवत्सु त एव सभाग्याः भाग्येन सह वर्त्तमानाः। न तु ज्ञानैश्वर्यादिभिर्युक्ताः (ग)। संसारदुःखकालाधीनत्वादिति

---

(क) तस्माद्दित्यादि कर्त्तव्यमिति पर्यं... भा० पु० स्त० टिप्पण्यांनैव वर्त्तते। (ख) भा० पु० स्त० निर्धारणार्थं इति ना०।

(ग) भा० पु० स्त० ज्ञानैश्वर्यादियुक्ता इति पा०।

कथं हरिस्मरणादेव कृतार्थत्वम् । तत्राह सूतः ।

अविस्मृतिः कृष्णपदारविन्दयोः
क्षिणोत्यभद्राणि शमं तनोति ।
सत्त्वस्य शुद्धिं परमात्मभक्तिं
ज्ञानं सविज्ञानविरागयुक्तमिति (१) ॥

अतः कृष्णस्मरणादेव निःसंदेहकृतार्थत्वं मनसस्तदाकारत्व(क)रूपत्वम् । तदेवाह स्वयं भगवान् ।

विषयान्ध्यायतश्चित्तं विषयेषु विसज्जते ।
मामनुस्मरतश्चित्तं मय्येव प्रविलीयते इति (२) ॥

निश्चितम् । ते के । ये हरिनाम कलौ स्मरन्ति स्मारयन्ति च त एव कृतार्थाः मुक्ताश्च नान्ये । कलौ अन्यसाधनशुद्ध्यभावात् ॥

(१) अविस्मृतिरित्यादिश्लोकस्यार्थः ॥ श्रीकृष्णपदारविन्दयोः अविस्मृतिर्निरंतरां स्मृतिः अभद्राणि अनर्थान्तरायाख्यानि क्षिणोति । यतः शमन्तनोति । विरागयुक्तमनुभवात्मकं स्वात्मपरात्मज्ञानन्तद्द्वारा भक्तिं तनोति ॥

(२) विषयान्नित्यादिश्लोकस्यार्थः । विषयान् शब्दस्पर्शरूपरसगन्धान्ध्यायतः पुरुषस्य चित्तं विषयेषु विशेषेण सज्जतेऽपि तद्रूपं न भवति । दुःखात्मकसुखत्वात् । सर्वव्यवहारानुभवाच्च । मामनुस्मरतो जीवस्य चित्तं म-

(क) भा० पु० स्त० तदाकार इति पा० ।

एवं श्रीकृष्णोक्तं स्मरणमाहात्म्यं ज्ञात्वा सर्वे भक्तास्तदेव प्रार्थयन्ति इति नृपप्रार्थनयाह ।

तन्नः शमादिशोपायं येन ते चरणाब्जयोः ।
स्मृतिर्यथा न विरमेदपि संस्मरतामिहेति (१) ॥

त्मयेव प्रविलीयते । एवकारोऽन्यव्यावृत्त्यर्थे । उपसर्गद्वयात् । मद्रूपम्भवति । परमानन्दाधिक्यात् । अयं भावः । कृष्णाकारे चित्ते देहादीनां न स्मरणं भवति । व्यवहारदर्शनाभावात् ।

शय्याशनाटनालाप(क)क्रीडास्नानासनादिषु ।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस

इति शुकोक्तेः ॥

अस्य शय्येत्यादिश्लोकस्यार्थः ॥ शय्यादिषु तत्तत्कर्मकारका अपि कृष्णचेतसो वृष्णयः सन्तं वर्त्तमानं देहं न विदुः । कृष्णाकारचित्तवृत्तित्वात् । लोकेऽपि कारणाभावेऽपि तत्सत्ताकस्य कार्यस्याल्पव्यवहारदर्शनात् । यथा अपक्वनिद्रोत्थितः पुनस्तदभिमुखो जीवः स्वभाषणादिकं न वेद मदिरामत्तोऽपि तथा प्रारब्धाधीनानीन्द्रियाणि स्वस्वव्यापारं कुर्वन्त्यपि ते(ख) अतदेवोद्धवादयो वृष्णयो न विदुः ॥

(१) तन्न इत्यादिश्लोकस्यार्थः ॥ हे नाथ

(क) जापा इति पा० पु० न्त० पा० । (ख) पा० पु० न्त० ते इति ना०

यं मां स्मृत्वागाथा गाथा भवति
यं मां स्मृत्वा अपूतः पूतो भवति ।
यं मां स्मृत्वा अव्रती व्रती भवति
यं मां स्मृत्वा सकामो निष्कामो भवती·
त्यादिश्रुतौ भगवदुक्तेः ॥

भगवत्स्मरणपराणां रिपवोऽपि बान्धवा भवन्ति । पापमपि पुण्यम् । गरलमप्यमृतम् । दुःखमपि सुखम् । निन्दापि स्तुतिरेवं सर्वे पदार्था अनुकूला एव । यं मां स्मृत्वेतिस्मरणोपलक्षणेन नवाङ्गानां श्रवणादीनां माहात्म्यमुक्तं भगवता ।

तं ध्यायेत्तं रसयेत्तं यजेत्तं भजेदिति

श्रुत्या नवधा भक्तिरुक्ता । तत्स्मरणस्य परमदयालुत्वमाहुः श्रुतयः ।

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्
मुनय उपासते तदरयोऽपि ययुः स्मरणात् ।

तदेवोपायं सम्यगादिश । तत्तवाधीनत्वात् । येनोपायेन यथेह संसारे स्त्रीपुत्रादिसंयुक्ते सम्यक् चरतां नोऽस्माकं तव चरणारविन्दयोः स्मृतिर्न विरमेत् । तव चरणस्मृत्यां सत्यां घोरसंसारोऽपि तव प्राप्तिबाधको न भवति । किन्तूपकारकारक(क) एवेति भावः ।

(क) आ० पु० न्त० पकारक इति पा० ।

स्त्रिय उरगेन्द्रभोग(क)भुजदण्डविषक्तधियो
वयमपि ते समाः समदृशोऽङ्घ्रिसरोजसुधा इति(१)

एवं हरिस्मरणकरुणामृतास्वादिनो नान्यात्किमपि वाञ्छन्तीत्याह कविः ।

(१) निभृतेत्यादिश्रुतिस्तुतिश्लोकस्यार्थः ॥ यत् तत्त्वं ब्रह्म हृदि मुनयो मननशीला उपासते तत्तत्त्वं त्वां श्रीकृष्णं तवारयोऽपि पूतनाघासुरादयस्तव स्मरणाद्ययुः। अपिशब्दो विषमे न्यूनपक्षे च। तत्तत्त्वं स्त्रियो गोप्यो ययुः। तत्तत्त्वं वयमपि ताभिर्गोपीभिर्विषमा अपि यास्यामः । यतो वयं च ते च सर्वे स्मरणात्ते समाः । तद्विषमत्वमेवाहुः । कीदृशा मुनयः । निभृतमरुन्मनोऽक्षदृढयोगयुजः निभृतानि धृतानि मरुन्मनोऽक्षाणि यैस्ते दृढयोगं युञ्जन्तीति दृढयोगयुजः । अरयस्तु तवापकारधियः । कीदृश्यः स्त्रियः । उरगेन्द्रभोगभुजदण्डविषक्तधियः उरगेन्द्रोऽनन्तस्तस्य भोगस्य देहस्य सदृशयोर्भुजयोर्विषक्ता धीर्यासां ताः सर्वाङ्गोपासिन्यः पतिव्रता इत्यर्थः। कीदृश्यो वयम् । समदृशः सर्वेषु चराचरेषु चन्द्रेन्द्रादिषु समा परमेश्वरदृष्टिर्यासां ता व्यभिचारिण्य इत्यर्थः । पुनः । अङ्घ्रिसरोजसुधाः अङ्घ्रिसरोजं सुष्ठु दधति धारयन्तीत्यङ्घ्रिसरोजसुधा एकाङ्गोपासिन्यः ॥

(क) भा० पु० स्त० भोग इति पा० ।

त्रिभुवनविभवहेतवेऽप्यकुण्ठ-
स्मृतिरजितात्मसुरादिभिर्विमृग्यात् ।
न चलति भगवत्पदारविन्दा-
ल्लवनिमिषार्धमपि स वैष्णवाग्र्य इति ॥(१)॥

तस्मादचलने कारणमाह ध्रुवः ।

या निर्वृतिस्तनुभृतां तव पाद पद्म-
ध्यानाद् भवज्जनकथाश्रवणेन वा स्यात्
सा ब्रह्मणि स्वमहिमन्यपि नाथ मा भू-
त्किन्त्वन्तकासिलुलितात्पततां विमानादिति (२)॥

(१) त्रिभुवनविभवेत्यादिश्लोकस्यार्थः ॥ त्रिभुवनविभवस्य हेतुः कारणं विभवप्राप्तौ साधनं तस्मै साधनाय । अपिशब्दात् त्रिभुवनवैभवाय । भगवत्पदारविन्दाल्लवमपि निमिषार्द्धमपि यो न चलति स वैष्णवाग्र्यः । कथंभूतात्पदारविन्दात् । अजितात्मसुरादिभिर्विमृग्यात् अजिते भगवति आत्मा मनो येषां तैर्ब्रह्मादिभिर्विमृग्यात् । कीदृशो यः । अकुण्ठस्मृतिः अकुण्ठिता अखण्डिता भगवत्पदस्य स्मृतिर्यस्य सः ॥

(२) या निर्वृतिरित्यादिश्लोकस्यार्थः ॥ तनुभृतां देहधारिणां सुरासुरमुनिमर्त्यपक्षीपुरुषादीनां तव पादपद्मध्यानात् भवज्जनानां तव ध्याननिष्ठानां कथाश्रवणेन वा यां निर्वृतिः परमानन्दप्राप्तिः स्यात्सा ब्रह्मणि सा

तस्माद्धरिस्मरणमेव परमानन्दजनकमिति ज्ञात्वा भगवानेव स्मर्त्तव्यः ॥

एवं स्मरणाङ्गं निरूप्य पादसेवनाङ्गं निरूप्यते नारदवाक्येन ॥

धर्मार्थकाममोक्षाख्यं य इच्छेच्छ्रेय आत्मनः ।
एकस्यैव हरेस्तत्र कारणं पादसेवनमिति ॥(१) ॥

ननु वर्णाश्रमोक्तं श्रेय इत्युक्तेनैव द्विविधश्रेयसो बोधो जातस्तस्मादन्यदपि तदाख्यं श्रेयोऽस्ति किम् इति चेत्तदस्त्येव।

अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ।
मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक्कर्म करोतु कायः ॥

भूत् । कीदृशे । स्वमहिमनि । हे नाथ पुनर्देवानां मध्ये सा मा भूदिति किं वक्तव्यम् । किंविशिष्टानाम् । अन्तकः कालस्तस्यासिः खड्गस्तेन लुलितात्खण्डिताद्धिमानात्पतताम् ॥

(१) धर्मार्थेत्यादिश्लोकस्यार्थः ॥ यो वर्णाश्रमनिष्ठोऽपि पुरुषो वर्णाश्रमोक्तमात्मनः श्रेयो धर्मार्थकाममोक्षाख्यमिच्छेत्तत्रैकस्य हरेः पादसेवनं कारणम् । नान्यत्साधनं पूर्वमीमांसाधर्मविषयज्ञानादिकम् । नान्येषां पादसेवनमपि ॥

न नाकपृष्ठं न च पारमेष्ठ्यं
न सार्वभौमं(क) न रसाधिपत्यम् ।
न योगसिद्धीरपुनर्भवं वा
समञ्जस त्वा विरहय्य काङ्क्षे ॥

अजातपक्षा इव मातरं खगाः
स्तन्यं यथा वत्सतराः क्षुधार्त्ताः ।
प्रियं प्रियेव व्युषितं विषण्णा
मनोऽरविन्दाक्ष दिदृक्षते त्वाम् ॥

ममोत्तमश्लोकजनेषु सख्यं
संसारचक्रे भ्रमतः स्वकर्मभिः ।
त्वन्माययात्मात्मजदारगेहे-
ष्वासक्तचित्तस्य न नाथभूयादित्यादिभ्यः॥(१)॥

(१) अहं हरे इत्यादिश्लोकचतुष्टयस्यार्थः ॥ वृत्रासुरः परमेश्वरात्पुरुषार्थचतुष्टयस्य ग्रहणेच्छया आह तं प्रति। हे हरे तव पादावेवैकं मूलं आश्रयो येषां तेषां तव दासानामनुदासो भूयो भवितास्मि भविष्यामीत्यर्थः। न तु वर्णाश्रमाभिमानी। तदभिमानेनाधःपतनभयात्। असुपतेः प्राणनाथस्य तव गुणान्भक्तवत्सलत्वादीन्मम मनः स्मरतु। न तु वर्णाश्रमधर्मतत्त्वम्। तत्फलं च हेयत्वानित्यत्वाभ्याम्। वागपि तानेव कीर्तयतु। न तु स्वजा-

(क) सार्वभौमं न पारमेष्ठ्यम् इति क्वचित् पाठः भा० पु० स्क० पा० ।

लोकं वदन् । स्वरज्ञानाभावेन दोषप्राप्तेः । कायस्तु तव परिचर्यात्मकं कर्म करोत्विममेव धर्मं याचे त्वत्तः । यतोऽयमेव मे धर्मः । एवं धर्ममुक्त्वार्थमाह । न नाकपृष्ठमिति । हे समञ्जस मम तु त्वं सर्वेश्वर एवार्थः । न तु द्रव्यादिकम् । अतस्त्वा त्वां विरहय्य पृथक् कृत्वा नाकपृष्ठादिकं अपुनर्भवान्तं न काङ्क्षे । एवमर्थमुक्त्वा काममाह । हे अरविन्दाक्ष त्रिविधतापनिवर्त्तक मे मनस्त्वां दिदृक्षते द्रष्टुमिच्छतीत्यर्थः । न तु लोचने । वियोगदुःखभयात् । अयमेव मे कामः । के कमिव । अजातपक्षाः खगाः कायिकवाचिकसाधनशून्याः साधनानपेक्षां मातरमिव । खगा इति खगजातीयाः । वासिष्ठा एव वसिष्ठा इतिवद्वा । अस्मिन् दृष्टान्ते क्षुधादिदुःखाभावेन वियोगादिदुःखाभावे दृष्टान्तान्तरमाह । यथा वत्सतराः केवलं स्तन्यजीवना अपि क्षुधया पीड़िताः स्तन्यमिच्छन्ति । वत्सतरेष्वपि निष्कामतानन्यताभावं दृष्ट्वान्यदृष्टान्तमाह । विशेषेणोषितं दूरदेशगतं प्रियं पतिं पतिव्रता अतो विषण्णा प्रियेवेत्ययमेव कामः । एवं स्वकाममुक्त्वा मोक्षमाह । हे नाथ स्वकर्मभिः संसारचक्रे भ्रमतो मम उत्तमश्लोकस्य तव जनेषु सख्यं भूयात् । त्वन्मायया देहपुत्रदारगेहेषु आसक्तचित्तस्य तेष्वात्मादिषु कदाप्यासक्तिर्न भूयादित्ययमेव मेऽपवर्ग इत्येवं भक्तानां पुरुषार्थचतुष्टयम् । तस्यापि कारणं भगव(क)त्पादसेवनमित्यर्थः ॥

(क) आ॰ पु॰ स्त॰ भगवत् इति ना॰ ।

ननु चतुर्वर्गबाधकानां पापानां सत्त्वे कथं पादसेवनादेव तद् भवति । तत्राह पृथुः ।

यत्पादसेवाभिरुचिस्तपस्विना-
मशेषजन्मोपचितं मलं धियः ।
सद्यः क्षिणोत्यन्वहमेधती सती
यथा पदाङ्गुष्ठविनिःसृता सरिदिति (१) ॥

ततः किं भवति । तत्राह ।

विनिर्धुताशेषमनोमलः पुमा-
नसङ्गविज्ञानविशेषवीर्यवान् ।
यदङ्घ्रिमूले कृतकेतनः पुमा-
न्न संसृतिं क्लेशवहां प्रपद्यत इति ॥

स एव भयातीतो भवतीत्याह कविः ।

मन्येऽकुतश्चिद् भयमच्युतस्य
पादाम्बुजोपासनमत्र नित्यम् ।

---

(१) यत्पादसेवेत्यादिश्लोकस्यार्थः ॥ यद्धियो मलं तप आदिभिस्तपस्विनां न क्षीणं तदशेषजन्मोपचितं संचितकर्मरूपं सत् यस्य भगवतः पादसेवाभिरुचिः क्षिणोति । कीदृशी । अन्वहमेधती । अतः सती । पादसेवायास्तु फलमनिर्वचनीयमिति भावः ॥

उद्विग्नबुद्धेरसदात्मभावा-

द्विश्वात्मना यत्र निवर्त्तते भीरिति (१) ॥

अत एव साधवस्तु श्रीकृष्णपादसेवां न विसृजन्तीत्याहुर्देवाः। अथ ह वाव तव महिमामृतसमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकान्तिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरन्तरनिर्वृतमनसः कथमु ह वाव मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणाम्बुजानुसेवां विसृजन्ति न यत्र पुनरयं संसारपर्यावर्त्त इति ॥ (२) ॥

(१) मन्य इत्यादिश्लोकस्यार्थः। अच्युतस्य भगवतः पादाम्बुजस्योपासनमेवात्र नित्यमकुतोभयं मन्येऽहं। अच्युतात्तदुपासनस्य भेदाभावेनाच्युतत्वात्। अन्यत्तु सर्वं भयग्रस्तं कालाधीनत्वात्। यत्रोपासने तु देहात्मभावादुद्विग्नबुद्धेरपि भीर्निवर्त्तते स्वमृत्युभयादित्यर्थः।

(२) अथ ह वावेत्यादिगद्यस्यार्थः। हे मधुमथन भक्तभयहर अजितः(क) तव पादानुसेवां साधवः कथं पुनर्विसृजन्ति न विसृजन्तीत्यर्थः। तां काम्। तत्राह। यत्रानुसेवायां न पुनरयं संसारपर्यावर्त्तः परिभ्रमणम्। तव सान्निध्यात्। साधवः कीदृशाः। स्वार्थकुशलाः हिताहितविवेकिनः। य-

(क) पा० पु० न्त० अजित् इति पा०।

तस्या भगवत्पादसेवायाः फलं तु विलक्षणम्(क) । तदेवाह स्वयं भगवान् ।

मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ।
नेच्छन्ति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतमिति ॥

तस्माद्विवेकिनस्तु सेवामेव प्रार्थयन्तीत्याहाजवाक्येन ।

तदस्तु मे नाथ स भूरिभागो
भवेऽत्र वान्यत्र तु वा तिरश्चाम् ।
येनाहमेकोऽपि भवज्जनानां
भूत्वा निषेवे(ख) तव पादपल्लवमिति (१) ॥

---

तः भागवताः । पुनः किंविशिष्टाः । एकान्तिनः ते सेवोद्यमीनाः । पुनः कथंभूताः । तव महिमामृतसमुद्रस्य विप्रुट्कणस्तन्मात्रेण यावलीढा तयापि सकृदप्यवलीढया आस्वादितया निस्यन्दमानं यदनवरतं सुखम् अतिशयेन स्रवन्निरन्तरं सुखं तेन विस्मारिता दृष्टश्रुतविषयसुखलेशाभासा येषां ते । अतस्त्वयि भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरान्निरन्तरन्निर्वृतं च मनो येषान्ते त्वयि नितरां निरन्तरनिर्वृतमनसः । यत्र यस्याम् अनुसेवायां सत्याम् ॥

(२) तदस्तु मे नाथेत्यादिश्लोकस्यार्थः ॥ हे नाथ यतस्ते पदसेवारसिकाः सालोक्यादिचतुष्टयं नेच्छन्ति त-

---

(क) भा० पु० स्क० एव इत्यधि० वर्त्त० ।
(ख) भा० पु० स्क० भजे इति पा० ।

एवं सेवाङ्गं निरूप्यार्चनाङ्गं निरूप्यते । यतः सेवाङ्गाद-र्चनाङ्गं भिन्नम् । सेवा त्वरुणोदयमारभ्य भगवच्छयनपर्यन्ता स्वस्वकालप्राप्तपर्याकरणरूपा मनोमयी परिचर्या । अतो(क) मानसव्यापाररूपं सेवाङ्गम् । षोडशोपचारात्मकं कायिकव्यापा-रात्मकमर्चाङ्गमिति भेदः । तदर्चाङ्गान्निरूप्यते तावत् । तदकरणे दोषमाह ब्रह्मा ।

लोको विकर्मनिरतः कुशले प्रमत्तः
कर्मण्ययं त्वदुदिते भवदर्चने स्वे ।
यस्तावदस्य बलवानिह जीविताशां
सद्यश्छिनत्त्यनिमिषाय नमोऽस्तु तस्मै इति(१) ॥

तस्मात्ममापि स भूरिभागोऽस्तु । अत्र भवे ब्रह्मजन्मनि । अन्यत्र वा तिरश्चामपि कुत्रापि । (ख) कः तत्राह । येन भाग्येन भगव(ग)ज्जनानां भागवतानां मध्ये कोऽप्येक उ-त्तमोऽधमो मध्यमो भूत्वा तव पादपल्लवं निषेवे । ए-तस्माद् ब्रह्मदेहात्तव दाससेवकदेहः श्रेष्ठ इति भावः ॥

(१) लोको विकर्मेत्यादिश्लोकस्यार्थः ॥ अयं लोको विकर्मनिरतः धर्मबाधो विधर्मः स्यादिति नारदोक्तेस्त-स्मिन्काम्यकर्मणि देवान्तरार्चने सावधानोऽनुरागयुक्त इ-त्यर्थः । भवदर्चने स्वे कर्मणि प्रमत्तः असावधानः सालसः

(क) आ० पु० स्त० यतो इति पा० । (ख) आ० पु० स्त० स इत्यधि० वर्त्त० ॥ (ग) आ० पु० स्त० भव इति पा० ।

यतः पुंसां वर्णाश्रमकर्माणि स्वागन्तुकान्येव अधिकारान्तरे जन्मान्तरे च हेयत्वात्। ब्रह्मचारिणां धर्मो गृहस्थैर्हेयस्तेषामपि कर्म वानप्रस्थैस्तद्धर्मोऽपि यतिभिस्तेषामपि परमहंसैः। एवं जन्मान्तरेऽपि। तस्मादागन्तुकः। तवाराधनरूपन्तु जीवानां स्वाभाविकं कर्म। सर्वत्र हेयाभावात्। सर्वेषां मदुपासनमिति भगवद्वचनात्। तस्मिन् स्वकर्मणि प्रमत्तः। कथंभूते। कुशले निर्भये। वैगुण्येऽपि फलबाधाभावात्। प्रत्यवायदोषावचनात्।

> यानास्थाय नरो राजन्न प्रमाद्येत कर्हिचित्।
> धावन्निमील्य वा नेत्रे न स्खलेन्न पतेदिहेति
>
> कव्युक्तेः।

> नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।
> स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति
>
> तवो(क)क्तेः।

पुनः कीदृशे। त्वदुदिते।

> यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
> यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणमिति ॥
> मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु।
> मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे
>
> इत्यादिभिस्त्वदुदिते।

(क) भा० पु० नत० तवो इति पा०।

एवं ज्ञात्वा ये भगवन्तमर्चन्ति त एव कुशला इत्याहुः प्रचेतसः ॥

क्रियाकलापैरिदमेव योगिनः
श्रद्धान्विताः साधु यजन्ति सिद्धये ।
भूतेन्द्रियान्तःकरणोपलक्षितं
वेदे च तन्त्रे च त एव कोविदा इति (१) ॥

इत्थंभूते स्वकर्मण्यनुरागशून्यो यावदिह स्वार्थितेभ्यः देवेभ्यः कामान्प्रार्थयति तावद्यः कालात्मा बलवान्भवांस्तस्य जीविताशां सद्यश्छिनत्ति तस्मै अनिमिषाय कालाय नमोऽस्तु ॥

(१) क्रियाकलापैरित्यादिश्लोकस्यार्थः ॥ नो दृष्टिगोचरमिदं तव रूपं साधु यथा स्यात्तथा श्रद्धान्विता योगिन इह मोक्षाय क्रियाकलापैः कर्म(क)समूहैर्यजन्ति ते एव वेदे तन्त्रे च कोविदाः । तयोस्तात्पर्यार्थज्ञानात् । किंभूतमिदम् । भूतेन्द्रियान्तःकरणोपलक्षितम् ।

यथा जलस्थ आभासः स्थलस्थेनावदृश्यते ।
स्वाभासेन तथा सूर्यो जलस्थेन दिवि स्थितः ॥
एवं त्रिवृदहङ्कारो भूतेन्द्रियमनोमयैः ।
स्वाभासैर्लक्षितोऽनेन सदाभासेन सत्यदृगिति
श्रीकपिलोक्तेः ।

(क) आ० पु० स्त० कर्म इति पा० ।

ये यजन्ति त एव मुक्ता भवन्ति सुपथाश्रयत्वात्।
तदेव सुपथत्वमाहुर्ऋषयः।

अयं स्वस्त्ययनः पन्था द्विजातेर्गृहमेधिनः।

यच्छ्रद्धयाप्तवित्तेन शुक्लेनेज्येत पूरुष इतिं (क)।

अस्याः कपिलोक्तेरर्थः ॥

यदा सूर्यस्य तत्तेजोमय आभासो जलस्थः प्रतिबिम्बो गृहान्तर्वर्त्तिभित्तौ स्फुरति तदा गृहैकदेशस्थितैः पुरुषैर्भित्त्यादौ स्थलस्थितेन स्वाभासेन करणेन जलस्थः सूर्याभासः प्रथममवदृश्यते। तेन जलस्थेन प्रतिबिम्बेन करणेन दिवि स्थितः सूर्यो यथावद् दृश्यते तथा देहेन्द्रियमनोमयैः स्वाभासैः करणैर्जीवसत्ताको जडस्त्रिविधोऽहङ्कारोऽवदृश्यते। तेन सदाभासश्चेतनो जीवः। तेन सदाभासेन जीवेन सत्यदृग् भगवान्परमात्मावदृश्यते। अयम्भावः। जडदेहस्य व्यापारः कर्मज्ञानात्मकानीन्द्रियाणि विना न संभवति। एवं देहेनेन्द्रियाणि ज्ञायन्ते। तेषामप्यचितां मनोदैवतं संकल्पविकल्पात्मकं विना कथं व्यापारः। एवं तैर्मनो ज्ञायते विवेकिभिः। मनसोऽपि जडस्याहंकारं विना न संभवति। तस्यापि जडस्य त्रिविधाहंकारस्य चेतनं जीवं विना न कदापि। एवं जीवेनेश्वरसत्ताकेन सत्यदृक् परमात्मा ज्ञायते। एवं भूतेन्द्रियान्तःकरणोपलक्षितं यजन्ति त एव मुक्ता भवन्ति ॥

(क) ये इत्या० पूरुष इतीति पर्यं० आ० पु० स्त। टिप्पण्यामेव वर्ण०।

यतः सर्वफलदातृ भगवदर्चनमेव । तदेवाह सुदामा ।

स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम् ।
सर्वासामपि सिद्धीनां मूलं तच्चरणार्चनमिति ॥

तत्कुतः । भगवदर्चनस्य सर्वार्हणत्वात् । तदेवाह नारदः ।

यथा तरोर्मूलनिषेचनेन तृप्यन्ति तत्स्कन्धभुजोपशाखाः ।
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्येति(१)॥

---

(१) यथा तरोरित्यादिश्लोकस्यार्थः ॥ यथा तरोर्वृक्षस्य मूलनिषेचनेन तस्य भुजोपशाखाः पत्रपुष्पस्कन्धादयः अयत्नेनैव तृप्यन्ति। अनादृता अपि सुखिनो भवन्ति। यथा प्राणोपहारात्सर्वेन्द्रियाणां तृप्तिर्भवतीति दृष्टान्तोऽयं प्रत्यक्षानुभवकारकः तथा भगवतोऽच्युतस्येज्या सर्वार्हणं देवासुरमनुष्यमृगखगकीटपतङ्गादीनामप्यर्हणं पूजनं भवति। अयं भावः। तरुमूलानादरेण स्कन्धशाखादिषु प्रीत्या जलनिषेचनम्। प्राणानादरेणेन्द्रियेभ्योऽन्नदानं च तेषां दुःखजनकमेव भवति। तथा कृष्णार्चनानादरेण देवार्चनं तु तेषामप्यसंतोषकारणम्।
सर्वे देवाः सर्वे पितरः सर्वे मनुष्या विष्णुनाशितमश्नन्ति। विष्णुना घ्रातं जिघ्रन्ति विष्णुना पीतं पिबन्तीति श्रुतेः॥

तत्कुतः । तस्य सर्वमूलत्वात् ॥

तदेवाह ।

जीवराशिभिराकीर्ण आण्डकोशाङ्घ्रिपो महान् ।

तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणमिति ॥ (१) ॥

अत्रेज्याशब्देन भगवद्विग्रहार्चा ज्ञेया । न तु मखादयः । तदुक्तं शाण्डिल्यविद्यायाम् ।

तद्यजिः पूजायामितरेषां तु नैव(क) इति (२) ॥

एवमर्चनमाहात्म्यं भगवत्सुखाय न नारदेनोक्तम् । किं तु जीवानामेव सुखायेत्याह प्रह्लादः ।

(१) जीवराशिभिरित्यादिश्लोकस्यार्थः । यो महान् आण्डकोशाङ्घ्रिपो ब्रह्माण्डवृक्षस्तस्य मूलमाश्रयस्तु भगवानच्युतः । तस्मान्मूलत्वादच्युतेज्या तु सर्वेषामात्मनः पूजकस्याप्यर्हणां भवति ॥

(२) तद्यजिरिति शाण्डिल्यविद्यासूत्रस्यार्थः ।

यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ।

भूतानि यान्तिभूतेज्या यान्ति मद्याजिनोऽपिमा-

मित्यत्र गीतायां यजिः पूजार्थक एव । नाग्निष्टोमाद्यर्थकः । कुतः । यतस्तेषां तु कामफलप्रापकत्वेन चरितार्थत्वान्नेश्वरप्रापकत्वम्(ख) । यतो निष्कामकर्मणां सन्ध्योपासनादीनामपि पितृलोकादिफलश्रवणम् । तस्माद्विग्रहादौ पूजनमेव भगवदर्चनम् । न तु मखादिरूपमित्यर्थः ॥

(क) मतम् इति पा० (ख) स्यात् इत्याद पु० अ० पा० ।

नैवात्मनः प्रभुरयं निजलाभपूर्णो
मानं जनाद्विदुषः करुणो वृणीते ।
यद्यज्जनो भगवते विदधीत मानं
तच्चात्मने प्रतिमुखस्य यथा मुखश्रीरिति (१)॥

अथापि न केवलं बिम्बप्रतिबिम्बन्यायेन यावत्तावद् द्रव्यादिकं ददाति श्रीकृष्णः । किन्त्वल्पाया: सेवाया अपि (क) महत्फलमित्याह स्वयं भगवांस्त्रिभिः ।

एवं क्रियायोगपथैः पुमान्वैदिकतान्त्रिकैः ।
अर्चन्नुभयतः सिद्धिं मत्तो विन्दत्यभीप्सिताम् ॥

प्रतिष्ठया सार्वभौमं सद्मना भुवनत्रयम् ।
पूजादिना ब्रह्मलोकं त्रिभिर्मत्साम्यतामियात् ॥

(१) नैवात्मन इत्यादिश्लोकस्यार्थः । भगवत्पदार्थेषु द्रव्यालङ्कारवस्त्रादिषु स्वसत्ताभिमानिनः अविदुषः जनान्मानमयं प्रभुः परमेश्वर आत्मनः स्वस्य सुखाय न वृणीते । यतो निजलाभेन स्वसुखेनैव पूर्णः । प्रभुत्वात् । तथापि तद्धिताय वृणीते । यतः करुणः । तदेवाह । भगवते यद्यन्मानं जनो विदधीत तत्तन्मानं तस्यात्मने भवति । यथा बिम्बमुखार्पिता श्रीः प्रतिबिम्बमुखस्य भवति । तदभावे तदभावः ॥

(क) भा० पु० स्क० अर्चाति मा० ।

मामेव निरपेक्षेण भक्तियोगेन विन्दति ।
भक्तियोगं च लभते एवं यः पूजयेत मामिति (१) ॥

एवं साधनरूपमर्चनाङ्गमुक्त्वा फलरूपमाह सूतवाक्येन ।

ध्यायन्सर्वत्र च हरिं भावद्रव्यैरपूजयत् ।
क्वचित्पूजां विसस्मार प्रेमप्रसरसंप्लुत इति (२) ॥

(१) एवं क्रियेत्यादिश्लोकत्रयस्यार्थः ॥ वेदोक्तं वैदिकं कर्म। नारदपञ्चरात्रोक्तं तान्त्रिकम्(क)।क्रियायोगपथैरुक्तप्रकारेण मामर्च(ख)न्पुमानुभयतः सिद्धिमैहिकामुष्मिकविषयसुखमभीप्सितं मत्तः विन्दति । तामेव सिद्धिमाह। मम विग्रहप्रतिष्ठया सार्वभौमपदं विन्दति । सद्मना मम मन्दिरेण भुवनत्रयं पातालावनिस्वर्गरूपम्। पूजादिना सत्यलोकम्।त्रिभिः प्रतिष्ठासद्मपूजा(ग)भिः मत्साम्यतामियात्। मां तु निरपेक्षेण निर्गुणेन भक्तियोगेन विन्दति । ननु सोऽपि केनोपायेन साध्य इति शङ्कायामाह । योऽकामः सन्नेवम्मांपूजयेत्स भक्तियोगं च लभते। साधनभक्त्या परा भक्तिर्भवतीति वचनात् ॥

(२) ध्यायन्नित्यादिश्लोकस्यार्थः ॥ स मार्कण्डेयो भावनाद्रव्यैर्मनःकल्पितैः पूजाद्रव्यैर्हरिमपूजयत् । तमेव

(क) भा० पु० स्क० ११ अध्या० २७ श्लो० ४९ इत्यधि० वर्त्त०। (ख) भा० पु० स्क० ११ अध्या० २७ श्लो० ४९ यंय इति पा०। (ग) भा० पु० स्क० ११ अध्या० २७ श्लो० ५० भिः इति पा०।

एवमर्चनाङ्गं निरूप्य वन्दनाङ्गं कथ्यते तावत् । वन्दनोद्यमफलमाह बलिः ।

अहो प्रणामाय कृतः समुद्यमः
प्रपन्नभक्तार्थविधौ समाहितः ।
यल्लोकपालैस्त्वदनुग्रहोऽमरै-
रलब्धपूर्वोऽपसदेऽसुरेऽर्पितः (१) ॥

एवं प्रणामोद्यमस्य फलमुक्त्वा तदिच्छाफलमाहाक्रूरवाक्येन ।

ममाद्यामङ्गलं नष्टं फलवांश्चैव मे भवः ।
यन्नमस्ये भगवतो योगिध्येयाङ्घ्रिपङ्कजमिति (२) ॥

सर्वं सर्वेषु च(क) ध्यायन्सन् क्वचित्पूजां क्रमं च विसस्मार । यतः प्रेमप्रवाहे मग्नः । अतो व्यवहारदर्शनाभावात् ॥

(१) अहो प्रणामायेत्यादिश्लोकस्यार्थः । अहो आश्चर्यमिदं तु । मया प्रणामाय समुद्यमः कृतः । न तु सम्यक् प्रणामः कृतः । तेन समुद्यमेनैवैवंभूतोऽनुग्रहो मय्यपसदे नीचेऽसुरेऽप्यर्पितः । स कस्तत्राह । योऽनुग्रहस्त्वत्तो लोकपालैरमरैरलब्धपूर्वः । यतस्त्वया भगवता प्रपन्नानां भक्तानामर्थसिद्धौ स्थापितः । यद्वा स एवानुग्रहोऽप्रमत्तस्तस्यां स्थितः । अतस्त्वत्तोऽपि तव प्रणामोद्यमस्य माहात्म्यमधिकं मया ज्ञातमिति भावः ॥

(२) ममाद्येत्यादिश्लोकस्यार्थः ॥ भगवतो यदङ्घ्रि-

(क) भा० पु० स्त० च इति नी० ।

एवं तदिच्छाफलं ज्ञात्वा श्रद्धाशून्यप्रणामफलमाह सूतः ।

पतितः स्खलितो वार्त्तः क्षुत्वा वा विवशो गृणन् ।
हरये नम इत्युच्चैर्मुच्यते सर्वपातकादिति ॥

एतादृशं तत्फलम् । सम्यक् प्रणामफलं तु विलक्षणम् । तदेवाह ब्रह्मा ।

तत्तेऽनुकम्पां सुसमीक्षमाणो
भुञ्जान एवात्मकृतं विपाकम् ।
हृद्वाग्वपुर्भिर्विदधन्नमस्ते
जीवेत यो मुक्तिपदे स दायभागिति (१) ॥

---

पङ्कजं योगिनां ध्येयं बुद्धिगोचरन्न कदाप्यविषयत्वान्नेत्रगोचरम् । तदहं तु साक्षान्नमस्ये अतो नमस्कारैश्चयैवाद्य ममामङ्गलं भक्तिप्रतिबाधकं पापं नष्टम् । मे भवोऽपि फलवाञ्जातः ॥

(१) तत्ते इत्यादिश्लोकस्यार्थः ॥ यतः पूर्वोक्तः अनधिकार्येपि हरये नम इति ब्रुवन्मुच्यते तत्तस्मात् हे नाथ हृद्वाग्वपुर्भिस्ते नमो विदधद् यो जीवेत । नमस्काराभावे तज्जीवनाभाव इत्यर्थः । स मुक्तिपदे निवासस्थाने तव पदसेवाद्रव्ये दायभाग् भवति । हृदा तु मन्त्रमूर्त्तिध्यानेन । वाचा मन्त्रोच्चारणेन । वपुषाष्टाङ्गैर्नमो विदधदित्यनेन तल्लक्षणमप्युक्तं भवति । एतादृशो न-

एवं वन्दनाङ्गं निरूप्य दास्याङ्गं निरूप्यते। तत्रापि दासस्तु द्विविधः। तत्सुखसुखी। स्वसुखसुखी च। तत्सुखसुखिनस्तु गोप्युद्धवादयः। स्वसुखसुखिनो गजेन्द्रादयः। तयोस्तत्सुखसुखी श्रेष्ठः। तदेवाह दुर्वासाः।

यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः।
तस्य तीर्थपदः किंवा दासानामवशिष्यत इति ॥

एवं सर्वसंपद्युक्ता अपि भगवद्दासाः स्वापराधिन्यप्यनुग्रहपराः। न तु स्ववैभवबलात् तस्मिन्दोषदृष्ट्य इत्याह (क)।

---

मस्कार एवैतादृशफलजनक इति भावः। कीदृशो यः। आत्मकृतं विपाकं शुभाशुभमिश्रितप्रारब्धफलमनासक्तः सम्भुञ्जान एव। एवकारस्तु तद्रागद्वेषनिषेधकः। तद्भोगनिवृत्तीच्छाऽभाववानित्यर्थः। पुनः कथंभूतः। तवानुकम्पां सुसमीक्षमाणः कदा मामनुग्रहीष्यति कदा मयि कृपां करिष्यतीत्यनुकम्पां सु सम्यग् ईक्षमाणः साधनशून्य इत्यर्थः।

एकोऽपि कृष्णस्य कृतः प्रणामो
दशाश्वमेधावभृथेन तुल्यः।
दशाश्वमेधी पुनरेति जन्म
कृष्णप्रणामी न पुनर्भवाय (ख)॥

---

(क) आ० पु० ग्त० दुर्वासाः इत्यधि० वर्ग।
(ख) एकोऽपीत्यादि श्लो० भा० पु० ग्त० ना०।

अहो अनन्तदासानाम्महत्त्वं दृष्टमद्य मे ।
कृतागसोऽपि मे राजन्मङ्गलानि समीहसे इति (१) ॥

एवं तेषां निर्भयानां मङ्गलाचरणं तु स्वकृपयैव न तु कस्यचिद् भयादित्याहाभयत्वम्पुरञ्जनः ।

पश्ये न वीतभयमुन्मुदितं त्रिलोक्या-
मन्यत्र वै मुररिपोरितरत्र दासादिति (२) ॥

अतः श्रीकृष्णदासा दुर्जयामपि मायाञ्जयन्ती(क)त्याह जयशील उद्धवः ।

---

(१) अहो अनन्तदासानामित्यादिश्लोकस्यार्थः ॥ हे राजन् ।

तिरस्कृता विप्रलब्धाः शप्ताः क्षिप्ता हता अपि ।
नास्य तत्प्रतिकुर्वन्ति तद्भक्ताः प्रभवोऽपि ही-

त्यादिभि(ख)र्वेदपुराणेष्वनन्तदासानां माहात्म्यं श्रुतमात्रमेव । अद्य तु साक्षाद् दृष्टम्मे मया । यतस्त्वं कृतापराधिनोऽपि मे मङ्गलानि स्वपुण्यदानेन सम्यगीहसे ॥

(२) पश्ये नेत्यादिश्लोकार्धस्यार्थः ॥ मुररिपोः श्रीकृष्णस्य दासादन्यत्र. वीतभयं महामोदयुक्तं कमपि जीवं त्रिलोक्यां तदन्यत्र जनमहरादिषु वा । यद्वा । कृष्ण-

---

(क) भा० पु० स्क० तरन्ति इति पा० ।
(ख) प्रभवाद्यैरित्याद० पु० स्क० अधि० वर्त्त० ।

त्वयोपभुक्तस्रग्गन्धवासोऽलंकारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायाञ्जयेम हि ॥
वातरशना ऋषयः श्रमणा ऊर्ध्वमन्थिनः ।
ब्रह्माख्यं धाम ते यान्ति शान्ताः सन्न्यासिनोऽमलाः ।
वयन्त्विह महायोगिन्भ्रमन्तः कर्मवर्त्मसु ।
त्वद्वार्त्तया तरिष्यामस्तावकैर्दुस्तरन्तम इति (१) ॥

स्यान्यत्र तद्दासादितरत्र न पश्येऽहम् । कालाधीनत्वात् । कालेश्वरदासत्वात्त एव भयाभाववन्तः ॥

(१) त्वयोपभुक्तेत्यादिश्लोकत्रयस्यार्थः॥ हे महायोगिन् तव मायां दुर्जयामपि वयं तव दासास्तु हेलाभिर्जयेम हि निश्चितमिदं तु । कीदृशा वयम् । त्वयोपभुक्तस्रग्गन्धादिभिश्चर्चिताः । न तु दिगम्बराः। पुनः किंविशिष्टाः । तवोच्छिष्टभोजिनः दिव्यान्नभोजिनः । न तु निरन्नाः फलाद्याहारा अपि । अन्ये त्वतिकृच्छ्रेणेत्याह । ब्रह्माख्यं तव धाम तेजोऽपि ऋषयोऽतिश्रमेण यान्ति । न तु त्वाम् । तमेव श्रमणाह विशेषणैः । कथंभूता ऋषयः । वातरशनाः पवन एव परिधानवस्त्रं येषान्ते नग्ना इत्यर्थः । अत एव श्रमणाः शीताद्यादिश्रमयुक्ताः । पुनः कीदृशाः । ऊर्ध्वमन्थिनः अस्खलितवीर्याः स्त्रीविषयसुखवर्जिताः । पुनः सन्न्यासिनः अपरिग्रहा अपि। शान्ताः कामादूर्मिरहिताः । अतोऽमलाः एतादृशेन म-

अतो यावद् भगवद्दासा न भवन्ति तावदेव कामादयो जीवानां ज्ञानादिद्रव्यहारका भवन्ति । कृष्णदासानान्तु त एवोपकारकारका इत्याह ब्रह्मा ।

तावत्कामादयः स्तेनास्तावत्कारागृहं गृहम् ।
तावन्मोहोऽङ्घ्रिनिगडो यावत्कृष्ण न ते जना इति ॥

एवं दास्याङ्गमुक्त्वा सख्याङ्गमाह तावत् । कृष्णसख्यस्य सर्वैश्वर्यप्रदत्वन्निरूपयति सुदाम्नोऽनुभवेन ।

नूनं बतैतन्मम दुर्भगस्य
शश्वद्दरिद्रस्य समृद्धिहेतुः ।
महाविभूतेरवलोकतोऽन्यो
नैवोपपद्येत यदूत्तमस्येति (१) ॥

हाऽग्रेसेव ते तव धाम यान्ति । वयं तु संसारे कर्मवर्त्मसु देहगेहस्त्री पुत्रादिसुखासुख(क)रूपेषु तमस्सु भ्रमन्तोऽपि तावकैस्त्वद्दासैः सह तव वार्तालापेन सूर्योदयेन दुस्तरं तमोऽपि तरिष्यामः ॥

(१) नूनमित्यादिश्लोकस्यार्थः । बत हर्षे । ममैतत्समृद्धिहेतुः कारणं श्रीकृष्णस्यावलोकतः अन्यो नैवोपपद्येत । स एव हेतुर्नूनं निश्चितं मया । कथम्भूतस्य यदूत्तमस्य । महा विभूतेः महाविभूतिरनेककोटिब्रह्माण्डरूपा यस्य । कथंभूतस्य मम । शश्वद्दरिद्रस्य । यतो ऽ-

(क) भा० पु० स्त० पुत्रादिषु स्वसुख इति पा० ।

ननु तेन भगवता तु न किमप्युक्तम्। कथं तस्यैवावलोकनं कारणम् । तव तु श्रद्धैव। यथा भागवता वदन्त्यस्माकं शुभं कर्म तु भगवदिच्छया जातमशुभं तु प्रारब्धभोगेन । तत्राह ।

नन्वब्रुवाणो दिशते समक्षं
याचिष्णवे भूर्यपि भूरिभोजः ।
पर्जन्यवत्तत्स्वयमीक्षमाणो
दाशार्हकाणामृषभः सखा मे इति (१) ॥

अथापि (क) कृष्णसख्यं न केवलं विषयसुखप्रदं किन्तु परमानन्ददमित्याह शुकः ।

---

न्मान्तरेऽस्मिन् जन्मनि वा दृढ्यार्थमाराधितो मया भगवान् । अतो दुर्भगस्य ॥

(१) नन्वित्यादिश्लोकस्यार्थः ॥ तस्य भगवतः अयं निसर्गः । भक्त्या प्रणतदत्तमल्पमपि काञ्चनाद्रिं मत्वा स्वदत्तं परमेष्ठिपदमप्यल्पं ज्ञात्वा मे सखा श्रीकृष्णः समदानाभावाल्लज्जया भूर्यपि दानं याचकाय समक्षमब्रुवाण एव ददाति । यतो भूरिभोजः अनेककोटिब्रह्माण्डानन्दभोक्ता तस्मात् स्वभोगापेक्षया कैवल्यमप्यल्पं मन्यते । कीदृशो मे सखा । पर्जन्यवत्तद्दानं स्वयमीक्षमाणः । यथा जलनिधिपूरको मेघोत्तमो निद्राधीने जने गर्जनरहितोऽपि क-

---

(क) श्रा० पु० स्त० तथापीति पा० ।

इत्थं सतां ब्रह्मसुखानुभूत्या
दास्यं गतानां परदैवतेन ।
मायाश्रितानान्नरदारकेण
साकं विजह्रुः कृतपुण्यपुञ्जा इति (१) ॥

(क) तेषां कृष्णमित्राणां भाग्यमभिनन्दति ब्रह्मा ।

र्षकाणां वप्र वर्षति । तद्वृष्टिजलं तत्काले स्वयमेव पश्यति । नान्यः । तथा दाशार्हकाणामृषभोऽपि ॥

(१) इत्थमित्यादिश्लोकस्यार्थः ॥ कृताः पुण्यानां भागवतधर्माणां पुञ्जा राशयो यैस्ते गोपकुमारा उक्तप्रकारेण तेन श्रीकृष्णेन साकं सह विजह्रुर्विहारं कृतवन्तः । तेन केन । तत्राह । सतां ब्रह्मसुखानुभूत्या । ज्ञानिनां ब्रह्मसुखस्य यानुभूतिरनुभवमूर्त्तिस्तया(ख) तेन । पुनः दास्यं गतानां भागवतानां भक्तानां परदैवतेन परमेश्वरेण । स्वात्मप्रदेन दृष्टिगोचरेण । पुनः केन साकम् । तत्राह । मायाश्रितानां नरदारकेण माया दम्भे कृपायां चेति विश्वकोशात्कृपाश्रितानां व्रजजनानां नन्दनन्दनत्वेन प्रतीयमानेनातिसुलभेन । किं वर्ण्यते । किं वर्ण्यते (ग) तेषां भाग्यमिति भावः । एवं सदादीनामुत्तरोत्तरं श्रैष्ठ्यम् । सुखानु-

(क) भा० पु० स्त० यन: इत्यधि० वर्त्त ।
(ख) भा० पु० स्त० तया इति ना०।
(ग) भा० पु० स्त० किं वर्ण्यते इत्येकवारमेवाहित ।

अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् ।
यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनमिति (१) ॥

एवं सख्याङ्गं निरूप्यात्मार्पणाङ्गं कथयति प्रह्लादवाक्येन ।

भवतारतम्यात् । सुलभत्वाच्च । यथा मनुष्यदेवदेवेन्द्राणामन्धानन्धसहस्राणां सुधापाने उत्तरोत्तरतत्त्वम् ॥

( १ ) अहो भाग्यमित्यादिश्लोकस्यार्थः ॥ नन्दव्रजराजस्य व्रजश्चतुरशीतिक्रोशमेको निकेतनं येषां तेषां व्रजौकसां केन पुण्येनैतादृशो भाग्योदयो मया ब्रह्मणापि न ज्ञायत इत्याश्चर्ये अहोशब्दः । एतादृशं भाग्यं केनोपायेन लभ्यमिति खेदे पुनरहोशब्दः । नन्दगोपस्य भाग्यं त्वनिर्वचनीयम् । वाचोऽगोचरत्वात् । तत्किं भाग्यम् । तत्राह । येषां मित्रं परमानन्दम् उपकारानपेक्षोपकारकारकम् । परमानन्दत्वात् । प्रत्युपकाराभावेऽपि मित्रत्वभङ्गाभावाद्भाग्योत्तमं स्वयम् । पुनः कीदृशम् । ब्रह्म व्यापकम् । सर्वदेशकालसंयोगसुखदम् । एकदेशित्वाभावेन वियोगदुःखाभावात् । पुनः सनातनं नित्यमित्रानन्ददम् । मरणविकाराभावेनाविनाशित्वात् । तत्कुतः । यतः पूर्णम् । सर्वानन्दादिभिर्गुणैः पूर्णम् । एवंमानन्दब्रह्मसनातनशब्दैरानन्दचित्सद्भिः प्रतिपादितः सच्चिदानन्दविग्रहः श्रीकृष्णो बुद्ध्यगोचरोऽपि येषां चर्मचक्षुर्गोचरो मित्रोत्तमः । व्रजौक-

धर्मार्थकाम इति यो ऽभिहितस्त्रिवर्ग
ईक्षात्रयी नयदमौ विविधाश्च वार्त्ताः ।
मन्ये तदेतदखिलं निगमस्य सत्यं
स्वात्मार्पणं स्वसुहृदः परमस्य पुंस इति (१) ॥

सर्वार्पणं विना सर्वं मिथ्या भवतीत्याह शुकः ।

तपस्विनो दानपरा यशस्विनो
मनस्विनो मन्त्रविदः सुमङ्गलाः ।

---

सामिति सामान्यपदेन गवादीनामपि ग्रहणं सुखविशेषाभावात् ॥

(१) धर्मार्थेत्यादिश्लोकस्यार्थः ॥ वर्णाश्रमानुरूपो वेदप्रणीतोऽर्थहेतुर्धर्मः । कामसाधनं रजतहाटकाद्यात्मकोऽर्थः । इन्द्रियप्रीतिहेतुः शब्दस्पर्शादिविषयात्मकः काम इति धर्मार्थकामात्मको योऽभिहितस्त्रिवर्गः । वेदैरिति शेषेणार्थः । ईक्षात्रयी विद्यात्रयी प्राज्ञवैश्वानरदहराकाशानामुपासनात्रयी । नयदमौ च । विविधाश्च वार्त्ता जीविकाः । तदेतदखिलं वेदस्य तदा सत्यं मन्येऽहं यदा पुंसो भगवतः स्वात्मार्पणं भवति । तत्तत्फललाभात् । कथंभूतस्य पुंसः । परस्य पुरुषोत्तमस्य । स एतस्मात्सर्वजीवसमष्टिरूपादुत्कृष्टाद्धिरण्यगर्भादप्युत्कृष्टं सर्वप्राणिहृदयेशयं परमेश्वरं प्रश्यतीति श्रुतेः ।

१ क्षेमं न विन्दन्ति विना यदर्पणं
तस्मै सुभद्रश्रवसे नमो नमः इति (?)॥
तदर्पणस्य फलं कैमुत्यन्यायेनाह शुकः ।
पूतना लोकबालघ्नी राक्षसी रुधिराशना ।
जिघांसयापि हरये स्तनं दत्त्वाप सद्गतिम् ।

---

यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम
इति भगवद्वचनात् ।
पुनः किंविशिष्टस्य । स्वसुहृदः ।
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छतीति
श्रीगीतायां भगवदुक्तेः ।

स्वात्मार्पणमित्युपलक्षणम् । पत्रपुष्पादिवाक्यवत् । सर्वार्पणमित्यर्थः । यत्करोषीत्याद्युक्तेः ॥

( १ ) तपस्विन इत्यादिश्लोकस्यार्थः ॥ यशस्विनो नैष्ठिकवट्वादयः । दानपरा गृहस्थादयः । तपस्विनो वानप्रस्थादयः । मनस्विनो यत्यादयः । तत्रापि सुमङ्गलाः मङ्गलशीलाः(क) स्वाधिकारानुसारेण याज्ञिकाः । यतो मन्त्रविदः वैदिका अपि याज्ञिकाः(ख) । ते सर्वे यदर्पणं

---

( क ) भा० पु० स्त० मङ्गलशीला इति ना० ।
( ख ) यतो मन्त्रविदः वैदिका अपि याज्ञिका इत्याद० पु० स्तं० ना० ।

किं पुनः श्रद्धया भक्त्या कृष्णाय परमात्मने ।
यच्छन्प्रियतमं किन्नु रक्तास्तन्मातरो यथेति (१) ॥

तदेव सद्गतिमाह स्वयम् भगवान् ।

मर्त्यो यदा त्यक्तसमस्तकर्मा
निवेदितात्मा विचिकीर्षितो मे ।

यस्य भगवतोऽर्पणं(क) विना क्षेमं निर्भयस्थानम् अपवर्गाख्यं तत्तत्कर्मफलं चापि न विन्दन्ति । तस्मै सुभद्रश्रवसे नमो नमः ॥

( १ ) पूतनेत्यादिश्लोकद्वयस्यार्थः ॥ हरये श्रीकृष्णाय स्तनं दत्त्वा पूतनापि सद्गतिं सतां गतिम् अपवर्गाख्यामवाप । किं सा ब्राह्मणी । नेत्याह । राक्षसी । तर्हि किं हिंसावर्जिता । नेत्याह । बालघ्नी । तत्रापि लोकबालघ्नी । यतो रुधिराशना । न तु मांसाशना । तर्हि किं हरितोषाय स्तनं दत्तम् । नेत्याह । श्रीकृष्णाय जिघांसया तद्दत्त्वा सद्गतिमवाप । किं पुनर्वाच्यम् । परमात्मने त्रिकालज्ञानवते कृष्णाय श्रद्धया भक्त्या प्रियतमं यच्छन्सन् सद्गतिं लेभे इति । किमुततरां यथा तस्य कृष्णस्यानुरक्ता मातरः प्रियतमं कृष्णाय यच्छन्ति तथा यच्छन् । मातर इति बहुवचनान्तं पदं वत्सहरणाभिप्रायेणोक्तम् । तदा तस्य बहुमातृभावात् ॥

(क) भा० पु० स्क० । यस्य भगवतोऽर्पणम् इति ना० ।

तदाऽमृतत्वं प्रतिपद्यमानो
मयात्मभूयाय च कल्पते वै इति (१) ॥

एवं भक्तेर्नवाङ्गानि श्रवणादीनि निरूप्येदानीन्नवधा-भक्तिरहितानीन्द्रियाणि निन्दति तावत् । भक्त्यङ्गविमुखाना-मिन्द्रियाणां त्विन्द्रियत्वं नास्तीत्याह शौनकः ।

बिले बतोरुक्रमविक्रमान्ये
न शृण्वतः कर्णपुटे नरस्य ।
जिह्वासती दार्दुरिकेव सूत
न योपगायत्युरुगायगाथा इति (२) ॥

(१) मर्त्यो यदेत्यादिश्लोकस्यार्थः ॥ मर्त्यो मरण-धर्मविशिष्टः पुरुषो यदा त्यक्तसमस्तकर्मा सन् मे निवेदि-तात्मा भवति तदाऽसौ मे विचिकीर्षितः विशिष्टः कर्तु-मिष्टो भवति । ततोऽमृतत्वं मोक्षत्वं प्रतिपद्यमानो मया-त्मभूयाय मत्सदृशवैभवाय योग्यो भवति । विना मद-र्पणं न कदापि मत्सदृशं भयातीतं रूपं विन्दतीत्यर्थः ॥

(२) बिले बतेत्यादिश्लोकस्यार्थः ॥ बत खेदे । उरु-क्रमस्य भगवतो विक्रमान्भक्तपालनाय सृष्ट्यादीन् अशृण्व-तो जीवस्य ये कर्णपुटे ते बिले विषयवार्त्तासर्पालये । हे सूत । येद्या जिह्वा उरुगायगाथा नोपगायति सा दा-र्दुरिकेव । दर्दुरी भेकस्तत्संबन्धिनी । स्वमरणोत्पादिके-वेत्यर्थः ।

तथा सर्वाणि ज्ञेयानीत्याह ।

भारः परं पट्टकिरीटजुष्ट-
मप्युत्तमाङ्गन्न नमेन्मुकुन्दम् ।
शावौ करौ नो कुरुतः सपर्यां
हरेर्लसत्काञ्चनकङ्कणौ वा ॥
बर्हायिते ते नयने नराणां
लिङ्गानि विष्णोर्न निरीक्षतो ये ।
पादौ नृणां तौ द्रुमजन्मभाजौ
क्षेत्राणि नानुव्रजतो हरेर्यौ ।
तदश्मसारं हृदयं बतेदं
यद् गृह्यमाणैर्हरिनामधेयैः ।
न विक्रियेताथ यदा विकारो
नेत्रे जलं गात्ररुहेषु हर्ष इति (१) ॥

नन्विन्द्रियाणामिन्द्रियत्वाभावे का हानिस्तत्राह यमवाक्येन ।

जिह्वा न वक्ति भगवद्गुणनामधेयं
चेतश्च न स्मराति तच्चरणारविन्दम् ।

(१) भारः परमित्यादिश्लोकत्रयस्यार्थः ॥ उत्तमाङ्गं शिरः पट्टकिरीटजुष्टम् अपि मुकुन्दं प्रति न नमेत्तद्भारः परं केवलम् । नरकदुःखभारप्रदत्वात् । हरेः सपर्यां अकुर्वतः पुरुषस्य यौ करौ तौ शावौ (क) प्रे-

(क) आ॰ पु॰ स्त॰ करौ इत्यधि॰ वर्त्त॰ ।

कृष्णाय नो नमति यच्छिर एकदापि
तानानयध्वमसतोऽकृतविष्णुकृत्यानिति ॥

ननु तर्हि(क) कानीन्द्रियाणीति शङ्कायामाह नृपेन्द्रः ।

सा वाग्यया तस्य गुणान्गृणीते
करौ च तत्कर्मकरौ मनश्च ।
स्मरेद्वसन्तं स्थिरजङ्गमेषु
शृणोति तत्पुण्यकथाः स कर्णः ॥

शिरस्तु तस्योभयलिङ्गमानमे-
त्तदेव यत्पश्यति तद्धि चक्षुः ।
अङ्गानि विष्णोरथ तज्जनानां
पादोदकं यानि भजन्ति नित्यमिति ॥

लक्ष्करौ लसत्काञ्चनकङ्कणावपि । विष्णोर्लिङ्गानि धारव-
प्रसमुपमयानि शरीराणि न निरीक्षतः ये नयने ते बर्हा-
यिते मयूरपुच्छतुल्ये । तद्वदावरणात् वृथैव शोभमाने ।
हरेः क्षेत्राणि नानुव्रजतः यौ पादौ तौ द्रुमजन्मभाजौ ज-
न्मस्थले मरणत्वात् । कामनापरेच्छोत्थानत्वाच्च बत खेदे ।
तद्हृदयमश्मसारं प्रस्तरादपि कठिनम् । यद् गृह्यमाणैर्ह-
रिनामधेयैर्न विक्रियेत न द्रवेत । विकारस्तु नेत्रे जलम् ।
गात्रे रोमाञ्च इत्युपलक्षणम् । अंटसात्विकभावा इत्यर्थः ॥

(क) क्वा, पु० न्त, तर्हि इति वा० ।

नन्विन्द्रियाणामिन्द्रियत्वे को लाभस्तत्राह ब्रह्मा ।

शृण्वन्गृणन्संस्मरयंश्च चिन्तय-
न्नामानि रूपाणि च मङ्गलानि ते ।
क्रियासु यस्त्वच्चरणारविन्दयो-
राविष्टचित्तो न भवाय कल्पते इति (१) ॥

तदपि न चिरादित्याह कुन्ती ।

शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः
स्मरन्ति नन्दन्ति तवेहितं जनाः ।
त एव पश्यन्त्यचिरेण तावकं
भवप्रवाहोपरमं पदाम्बुजमिति ॥

तदपि न देहान्ते किन्त्विहैवेत्याह श्रुतिदेवः ।

शृण्वतां गदतां शश्वदर्चतां त्वाभिवन्दताम् ।
नृणां संवदतामन्तर्हृदि भास्यमलात्मनामिति ॥

शृण्वतां गदतामिति पष्ठ्यन्तेन भिन्नाभिन्नपदेन श्रवणादीनामप्येकैकस्य माहात्म्यमुक्तम् । यत एकस्मादेकस्मा-

(१) शृण्वन्नित्यादिश्लोकस्यार्थः ॥ तवार्चनक्रियासु ते नामानि रूपाणि(क) मङ्गलानि चैतन्यानि यः शृण्वन्गृणन्सम्यक् स्मरयंश्चिन्तयन्सन् तव चरणारविन्दयोराविष्टचित्तः स भवाय संसाराय न कल्पते। किंतु तव स्वरूपाय योग्या भवति ॥

(क) आ० पु० स्त० रूपाणि इति पा० ।

दृढ़ात्पर(क)भक्तिप्राप्त्या श्रीकृष्ण(ख)पदाम्बुजप्राप्तिः ॥

ईश्वरतुष्टेरेकोऽपि बलीति

शाण्डिल्यसूत्रोक्तेः (१) ॥

तेषां श्रवणादीनामप्येकाङ्गप्राप्तेरनन्तरं द्वितीयाङ्गस्य प्राप्तिरित्यपि(ग) नियमो नास्ति ।

अप्रयोगानां यथाकालसंभवो गृहादिवदिति

भक्तिसूत्रोक्तेः (२) ॥

एवं नवधाभक्तेर्माहात्म्यं ज्ञात्वा निर्गुणभक्तिकामेन सा(घ) भगवति कर्त्तव्या ॥ १३ ॥

(१) ईश्वरतुष्टेरित्यादिशाण्डिल्यसूत्रस्यार्थः ॥ अनुष्ठीयमानेषु श्रवणादिषु यो बलवान्भवति स एकोऽपि परमेश्वरतुष्टिं जनयित्वा प्रगल्भभक्तये भवतीत्यर्थः ॥

(२) अप्रयोगानामित्यादिशाण्डिल्यभक्तिसूत्रस्यार्थः ॥ सहप्रयोगानुशिष्टगन्धपुष्पाद्यतिरिक्तानां श्रवणादीनां यथासंभवमनुष्ठानम् । यथा गृहसाधनतृणास्तम्बाद्याहरणं कदाचिदेकदा कदाचित्क्रमशः कदाचिदग्रे तृणाहरणं कदाचित्स्तम्बादेः । एवं यदङ्गमग्रे जातं तस्यैवानुष्ठानमित्यर्थः ॥

(क) भा० पु० न्त० परा इति पा० ।

(ख) श्रीकृष्णस्य इत्याद० पु० न्त० पा० ।

(ग) प्राप्तिरपि इत्याद० पु० न्त० पा० ।

(घ) भा० पु० न्त० भक्तिः इत्यधि० वर्त्त० ।

यतस्तस्या हि प्राकट्यं तदङ्गैर्हृदये भवेत् ।
पूर्वोक्तैः सूत्रसिद्धैश्च न कदा साधनान्तरैः ॥ १४ ॥
दुष्कृतोत्थादयोऽनर्था अन्तराया लयादयः ।
तेषां सम्यग्विनाशेनानैष्ठिकी नैष्ठिकी भवेत् ॥ १५ ॥

तत्कुतः । यतस्तस्याः पराया भक्तेः हृदये प्राकट्यं तस्या अङ्गैः पूर्वोक्तैः श्रवणादीभिर्भवेत् । किंभूतैः । सूत्रसिद्धैः भक्तिशास्त्रसूत्रोक्तैः । साधनान्तरैर्यज्ञादिभिर्न कदापि । तत्तु पुरैवोक्तं ॥ १४ ॥

किन्तु तद्बाधकानां निवृत्तिस्त्ववश्यं कर्त्तव्येत्याह । दुष्कृतोत्थादय इति । आदिपदेन दुष्कृतोत्थाः सुकृतोत्था अपराधोत्था भक्त्युत्थाश्चत्वारोऽनर्थाः । दुष्कृतोत्थास्तु दुःखाभयार्यशआप्तमरणद्रव्यगृहविनाशादयः । सुकृतोत्थास्तु नानाभोगाभिनिवेशेनालस्याभिमानलज्जादयः ।

अपराधोत्थास्तु(क) हरिनामापराधोत्थाः । नामापराधास्तु दशैव । यथा पाद्मे ।

"सतान्निन्दा नाम्नः परममपराधं वितनुते
यतः ख्यातिं यातं कथमु(ख) सहते(ग) तद्विगर्हाम् ।
शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं
धिया भिन्नं पश्येत्स खलु हरिनामाहितकरः ॥

(क) भा० पु० स्त० तु इति ना० ।(ख) भा० पु० स्त० कथमथ इति पा०
(ग) भा० पु० स्त० सहते इति पा० ।

गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं
तथार्थवादो हरिनाम्नि कल्पनम् ।
नाम्नो बलाद्यस्य हि पापबुद्धि-
र्न विद्यते तस्य यमैर्हि शुद्धिः ॥
श्रुत्वापि नाममाहात्म्यं यः प्रीतिरहितोऽधमः ।
अहंममादिपरमो नाम्नि सोऽप्यपराधकृत् ॥
धर्मव्रतत्यागहुतादिसर्व-
शुभक्रियासाम्यमपि प्रमादात् ।
अश्रद्दधाने विमुखेऽप्यशृण्वति
यश्चोपदेशोऽपि नाम्नोऽपराध इति ॥

भक्त्युत्थास्तु सेवापराधोत्थाः । भगवत्परिचर्यायां हिंसात्मकाश्च । सेवापराधास्तु श्रीवाराहे ।

यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे ।
देवोत्सवाद्यसेवा च ह्यप्रणामस्तदग्रतः ।
उच्छिष्टे वाप्यशौचे वा भगवद्वन्दनादिकम् ।
एकहस्तप्रणामश्च तत्पुरस्तात्प्रदक्षिणम् ।
पादप्रसारणं चाग्रे तथा पर्यङ्कबन्धनम् ।
शयनं भक्षणं चापि मिथ्याभाषणमेव च ।
उच्चैर्भाषा मिथोजल्पो रोदनानि च विग्रहः ।
निग्रहानुग्रहौ चैव नृषु च क्रूरभाषणम् ।
कम्बलावरणं चैव परनिन्दा परस्तुतिः ।
अश्लीलभाषणं चैव अधोवायुविमोक्षणम् ।

अतस्तांस्त्यक्त्वैव तं सेवे । तत्रापि किं मया भगवत्प्राप्तये श्रवणमेव ग्रहीतव्यं वा । कीर्त्तनं स्मरणं वा । नवाङ्गानि किंवा तत्क्षेत्रपर्यटनं सर्वभोगत्यागरूपं तपो वा । एवं व्यूढा विकल्पा यस्यां सा व्यूढविकल्पा ॥ तस्य भक्तस्य पूर्वाभ्यस्तैस्तैः शब्दादिभिर्विषयैर्नित्यं सङ्करो युद्धं कदाचित्त्यागेन तेषां पराजयः । कदाचित् पुन(क)स्तत्सेवनात्स्वपराजय इति विषयसङ्करा ॥ अद्यारभ्य भगवतो मयेयन्ति नामानि ग्रहीतव्यानि । एतावत्यः प्रणतयोऽपि कार्याः । यावता कालेन तदर्चनं कार्य्यम्मनसा ध्यानं च विमुखैः सह भाषणं कदापि न कार्यम् । वैष्णवा भगवानिव(ख) दानमानाभ्यां सेवनीयाश्चेत्यादिषु नियमेषु तत्तत्समये तस्य तथा न क्षमत्वामिति नियमाक्षमा ॥ हरिभक्तेर्निसर्गोऽयं तद्वति जीवे वर्णाश्रमस्थाः सर्वे तद्बाह्या अप्यनुरज्यन्ते । तेषामनुरागमभवासु विभूतिषु मानमतिष्ठाद्रव्यालङ्कारवस्त्राख्यासु श्रवणादिष्वासक्तस्य तस्य भक्तस्य रङ्ग इति तरङ्गरङ्गिणी ॥ इत्यनैष्ठिकी षड्विधभजनक्रिया । तद्रूपाया अङ्कुरोत्पत्तेस्ते बाधकाः । तेषां निवृत्तिरपि पञ्चविधैव । एकदेशवर्त्तिनी । बहुलदेशवर्त्तिनी । मायिकी । पूर्णा । आत्यन्तिकी च । तत्र दुष्कृतोत्थानामनर्थानां तेषु तेषु दुःखागमेषु भगवत्कृपाभावनया प्रारब्धभोगदृष्ट्या वा । सुकृतोत्थानां दानसंग्रहोभावव्रतनियमभोगत्यागादिभिः । नामापरा-

(क) आ० पु० स्त० पुन इति ना० ।
(ख) आ० पु० स्त० भगवानिव इति ना० ।

धानामभ्यहत्सच्छास्त्रश्रवणेन । सर्वत्र कृष्णबुद्ध्या । सेवापराधानां तत्तद्देशकालविचारेणापराधव्यवस्थया ।

निमित्तगुणव्यपेक्षणादपराधेषु व्यवस्थेति
भक्तिशास्त्रसूत्रोक्तेः (१) ॥

लयस्य सत्त्वाल्पाहारजीषणान्निद्राजयेन । विक्षेपस्यैकान्तवासेन । अप्रतिपत्तेर्ध्यानानुरागेण । रसास्वादानां तेषु तेषु स्त्रीपुत्राप्तादिषु दोषदुःखबुद्ध्या । कषायाणां नामस्मरणकीर्त्तनाभ्याम् । मायिकया निवृत्त्या भक्त्यङ्कुरवृद्ध्या मौढ्याय भक्तिकल्पवल्ल्या गुच्छकलिकापुष्पफलोपमानि निष्ठारतिभावप्रेमाख्यानि चतुरङ्गानि भवन्ति । तस्मात्तेषां निवृत्तिः कर्त्तव्या । ननु मधुसूदनयतीन्द्रेण तु भागवतसंमताद् भक्तेर्भूमिकानामान्येकादशाङ्गानि कथितानि । तद्यथा

प्रथमं महतां सेवा तद्दयापात्रता ततः ।
श्रद्धाथ तेषां धर्मेषु ततो हरिगुणश्रुतिः ।
ततो रुच्यङ्कुरोत्पत्तिः स्वरूपाधिगतिस्ततः ।

---

(१) निमित्तगुणेत्यादिभक्तिशास्त्रसूत्रस्यार्थः ॥ केनापि देशकालादिना निमित्तेन दोष एव गुणो भवति । यथा यवनसंपर्के वस्त्राभावे कम्बलावरणम् । तस्मात्तेषु व्यवस्थयाऽन्य(क)गुणा अपि दोषा भवन्ति ॥

---

(क) भा० द० न्त० न्यथा इति पा० ।

आविर्भावो हि तस्यास्तु क्लेशघ्नत्वादितद्गुणैः ।
ज्ञेयः शुद्धिश्च तल्लिङ्गैः शास्त्रोक्तैः पुलकादिभिः १६

प्रेमवृद्धिः परानन्दे तस्यान्तः स्फुरणं ततः ।
भगवद्धर्मनिष्ठातः स्वस्मिंस्तद्गुणशालिता ।
प्रेम्णोऽथ परमा काष्ठेत्युदिता भक्तिभूमय इति ॥

तथा माधुर्यकादम्बिन्याम् । आदौ श्रद्धा ततः साधुसङ्गोऽथ भजनक्रिया । ततोऽनर्थनिवृत्तिश्चेत्यादीनि । कथं चत्वार्येवाङ्गानि सत्यम् । तानि महतां सेवादीनि हरिगुणश्रुतिरुच्यन्तानि स्वनैष्ठिक्या भजनक्रियाया अङ्गानि ज्ञात्वा स्वरूपाधिगतिरिति स्वस्मिंस्तद्गुणशालितेति । तस्मात्तत्स्फुरणमिति अङ्गानि तु भक्तेरवान्तरफलानि मत्वात्र पराया अङ्गेषु नानुवर्णितानि तान्यपि साधनप्रकरणे कथितानि । निर्गुणायास्तूक्तान्येवाङ्गानि ॥ १५ ॥

ननु हृदि तत्प्राकट्यं कथं ज्ञायत इति शङ्कायामाह । आविर्भाव इति । तस्या निर्गुणाया भक्तेर्हृदयाविर्भावस्तु तत् तस्याः क्लेशघ्नत्वादिगुणैर्ज्ञेयः । अविद्यास्मितारागद्वेषाभिनिवेशानां पञ्चक्लेशानां विनाशेन क्लेशघ्नत्वलक्षणस्याद्यस्य कनिष्ठगुणस्याविर्भावो ज्ञेयः । पूर्वोक्तानां शुभगुणानां प्राप्त्या द्वितीयस्य कनिष्ठगुणस्य मुक्तावपि निःस्पृहया तृतीय-

मध्यमगुणस्य । साधनान्तराभावेऽपि त्रिगुणानामाविर्भावेन चतुर्थमध्यमगुणस्य । पार्षददेहाकारवृत्त्या प्राकृतदेहस्य विस्मृत्या पञ्चमोत्तमगुणस्य । स्वाधीनेन श्रीकृष्णेन षडुत्तमगुणस्यैवं षड्गुणैस्तस्याः षड्गुणायाः प्राकट्यं ज्ञेयम् । तत्तस्याः शुद्धिरपि शुद्धिलिङ्गैर्ज्ञेया । कीदृशैः । पुलकादिभिः । किंभूतैः भक्तिशास्त्रोत्थैः । शास्त्रं तु ॥

तत्परिशुद्धिश्च गम्या लोकवल्लिङ्गेभ्यः ।

संमानबहुमानप्रीतिविरहेतरविचिकित्सामहिमख्यातितदर्थप्राणस्थापनतदीयतासर्वतद्भावाप्रातिकूल्यादीनि स्मरणेभ्यो बाहुल्यादिति ।

शाण्डिल्यसूत्रे (१) ॥

(१) तत्परिशुद्धिरित्यादिशाण्डिल्यसूत्रयोरर्थः ॥ तत्तस्या भक्तेर्दृढतरसंस्कारलक्षणा परिशुद्धिः लिङ्गेभ्यो लिङ्गैः स्तम्भस्वेदरोमाञ्चस्वरभङ्गवेपथुवैवर्ण्याश्रुप्रलयैर्ज्ञेया लोकवत् । यथा लोके पुत्रादौ स्नेहतारतम्यं तत्कथाश्रवणादावश्रुपुलकादिभिर्ज्ञेयम् । तथा भगवत्कथाश्रवणादावित्यर्थः । अन्यैरपि तेषां स्तम्भादीनां निष्कपटानन्यतां दर्शयद्भिः सम्मानादिभिस्तस्याः शुद्धिर्गम्या । मनउत्साहपूर्वकं तस्मिन्भगवति तद्धातुमणिमृण्मयादिविग्रहेषु मानं सम्मानम् । यथा श्रीकृष्णे तत्पत्नीनाम् । तदेवाह शुकः ।

प्रत्युद्गमासनवरार्हणपादशौच-
ताम्बूलविश्रमणवीजनगन्धमाल्यैः ।
केशप्रसारशयनस्नपनोपहार्यै-
र्दासीशता अपि विभोर्विदधुः स्म दास्यमिति ॥

तथार्जुनस्यापि तस्मिन् ।

प्रत्युत्थानं च कृष्णस्य सर्वावस्थो धनञ्जयः ।
न लङ्घयति धर्मात्मा प्रेम्णा भक्त्या च सर्वदेति ॥

बहुमानं नाम तत्सम्बन्धिनि वस्तुनि मानम् ।
यथा श्रीव्रजराजस्य श्रीभगवति ।

तमागतं समागम्य कृष्णस्यानुचरं प्रियम् ।
नन्दः प्रीतः परिष्वज्य वासुदेवधियार्चयदिति ॥

पितृत्वाद् वृद्धत्वाच्चोद्धवपूज्येन नन्देनोद्धवोऽर्चितस्तत्रापि वासुदेवधिया श्रीकृष्णानु(क)चरत्वात् ।
इक्ष्वाकोरपि ।

पद्मयोस्तेन तन्नाम्नि मृगे पद्मे च तद्दृशि ।
शृङ्गार मेघे वर्णे च बहुमानमतिं नृप इति ॥

अस्य पद्मयोरित्यादिश्लोकस्यार्थः ॥ इक्ष्वाकुर्नृपस्तेन भावेन तस्मिंस्तस्मिन्नर्चनरूपां मतिं बभार । कस्मिन्कस्मिंस्तत्राह । पद्मयोर्मध्ये तस्य कृष्णस्य नाम्नि । कृष्णपक्षे तन्नामसम्बन्धात् । यथा कृष्णनाम्नि । तद्दृशि तद्-

(क) श्रीकृष्णस्यानु इति भा० पु० स्त० पा०।

द्रुगुपमे यच्चा(क) खगे च । तद्वर्षे मेघे तद्वर्षोपमे ॥

प्रीतिर्नाम तद्दर्शने परमानन्दानुभवः ॥

विरहो नाम तद्वियोगे कोटियमयातनादुःखोद्भवः(ख) ।
यथा व्रजदेवीनाम् । तदेवाह शुकः ।

गोपीनां परमानन्द आसीद् गोविन्ददर्शने ।
क्षणं युगशतमिव यासां येन विनाभवदिति ॥

इतरविचिकित्सा नाम तदितरे प्रियवस्तुन्यपि
दुःखप्रिद्बुद्धिः । भगवदन्यस्मादर्थग्रहणेच्छाभावो वा ।
यथा व्रजसुन्दरीणां स्वस्वपतावपि । तदेवाह ।

यर्ह्यम्बुजाक्ष तव पादतलं रमाया
दत्तक्षणं क्वचिदरण्यजनप्रियस्य ।
अस्प्राक्ष्म तत्प्रभृति नान्यसमक्षमङ्ग
स्थातुं त्वयाभिरमिता बत पारयाम इति ॥

अस्य यर्ह्यम्बुजाक्षेत्यादिश्लोकस्यार्थः ॥ हे अम्बुजाक्ष त्रिविध(ग)तापनिवर्त्तक यर्हि तव पादतलं वयमरण्येऽस्प्राक्ष्म स्पृष्टवत्यः । तत्र त्वयाभिरमिताः सत्यस्तदानन्दानुभवस्मरणेन तदारभ्यान्यसमक्षन्तु स्थातुमपि न पारयामः । किं वक्तव्यं पुनः स्पर्शालापादीनां वार्त्ता । दुःखप्रिद्बुद्धेस्तान्यमदूततुल्यान्भावयामः । कीदृशं पाद-

(क) आ० पु० न्ता० च इत्यधि० वर्ण० । (ख) आ० पु० न्ता० दुःखानुभवः इति पा० । (ग) आ० पु० न्ता० त्रिविध इति ना० ।

तलम् । क्वचिद्रमाया दत्तवणं लक्ष्म्या.दत्तोत्सवम् । तदपि क्वचित् । न सदैव । यतोऽरण्यजनप्रियोऽसि । अरण्यजन-प्रियत्वादरण्यवासिन्यो वयमेव ते प्रियाः । न रमेत्यर्थः॥
अन्यस्मादर्थाग्रहणानि(क) तु । यथा पृश्निसुतपसोः ।

शीर्णपर्णानिलाहारावुपशान्तेन चेतसा ।
मत्तः कामानभीप्सन्तौ मदाराधनमीहतुरिति ॥

महिमख्यातिर्नाम तन्महिम्नो विकथनम् ।

यथोद्धवः ।

अहो बकी यं स्तनकालकूटं
जिघांसयापाययदप्यसाध्वी ।
लेभे गतिं धात्र्युचितां ततोऽन्यं
कं वा दयालुं शरणं व्रजेमेति ॥

अस्याहो इत्यादिश्लोकस्यार्थः ॥ अहो परमाश्चर्य-हर्षयोः । यं कृष्णं जिघांसया स्तनकालकूटमपाययत्सा बकी स्वयमेव कर्तृभूता धात्र्युचितां मोक्षाख्यां गतिं लेभे। विषदानस्पर्शसंबन्धाभ्यां कृष्णेन दत्तो गतिरित्यनुक्तत्वात्। तस्मात्कृष्णादन्यं कं दयालुं शरणं वयं व्रजेम । न कम-पीत्यर्थः ॥ यथाह यमोऽपि दूतं प्रति ।

स्वपुरुषमभिवीक्ष्य पाशहस्तं
वदति यमः किल तस्य कर्णमूले ।

(क) भा० पु० न्त० अर्थग्रहणानिच्छा इति पा० ।

परिहर मधुसूदनप्रपन्ना-
न्प्रभुरहमन्यनृणाम वैष्णवानामिति ॥

तदर्थप्राणस्थापनमीम तद्वियोगश्रवणे प्राणत्यागः ।
तदेवाह सूतः ॥

पृथाप्यनुश्रित्य धनञ्जयोदितं
नाशं यदूनां भगवद्गतिं च ताम् ।
एकान्तभक्त्या भगवत्यधोक्षजे
निवेशितात्मोपरराम संसृतेरिति ॥

अस्य पृथेत्यादिश्लोकस्यार्थः ॥ कृष्णवियोगेन वसुदेवादीनां यथाप्राणत्यागप्रसङ्गमुक्त्वा पृथा(क)प्राणत्यागमाह । पृथापि कुन्त्यपि धनञ्जयोदितं यदूनां नाशं श्रुत्वा भगवतस्तां गतिमसुरमोहनाय कपटशरीरत्यागरूपां चापि भगवत्यधोक्षजे श्रीकृष्णे निवेशित आत्मा मनो यया सा संसृतेः संसारादुपररामेत्यनेन नित्यसिद्धानां भागवतानां स्वेच्छयैव संसार( ख )स्वीकारस्तत्त्यागश्च । तेषां भगवद्रूपत्वात् । यो नन्दः परमानन्दः [illegible]दामुक्तिः । देवकी या सा ब्रह्मविद्या । निगमो वसुदेवो यो वेदार्थः(ग) कृष्णः । श्रीकृष्णाख्यं परं ब्रह्म गोपिकाः श्रुतयोऽभवन्निति श्रुतेः ।

(क) भा० पु० स्त० पृथायाः इति पा० । (ख) भा० पु० स्त० संसारस्य इति पा० । (ग) भा० पु० स्त० सः इत्यधि० वर्त्त० ।

यथा हनुमत्प्रतिज्ञा ।

यावद्रामकथा लोके तावत्प्राणान्विभर्म्यहमिति ॥

कदाचित्तद्दर्शनलालसया प्राणधारणेऽपि तद्वियोगे तापादिभिर्वियोगलिङ्गैरपि तच्छुद्धिर्ज्ञेया । तद्भावाप्रातिकूल्यादीनि इति सूत्रोक्तेः । तानि लिङ्गानि तु । तापः कृशतोद्वेगः शून्यताऽधृतिर्जडता व्याधिरुन्मादो मूर्च्छा मृतिरिति ॥

गुरूणामग्रतो वक्तुं किं ब्रवीम न नः क्षमम् ।
गुरवः किं करिष्यन्ति दग्धानां विरहाग्निनेति

(क)कृष्णवियोगे व्रजसुन्दरीणां तापः ॥

अस्य गुरूणामित्यादिश्लोकस्यार्थः ॥ कस्माद्यूयं केन तापेन देहदग्धा अनुत्सवाः कृशदेहाः सदाशुचन्द्रवदना इति तैः पृष्टा वयं तेषां गुरूणामग्रतः नोऽस्माकं वक्तुं न क्षमम् । तत्किं ब्रवीमेति ज्ञात्वा तूष्णीम्भूतास्तस्मात्तु तर्जनादीनि दुःखानि नियोजयन्ति तैस्ते कृष्णविरहाग्निना(ख) दग्धानां नो गुरवः किं करिष्यन्तीति ॥

कृशताव्याधी श्रीरामचन्द्रवियोगे जानक्याः । तदेवाह शुकः ।

ततो ददर्श भगवानशोकवाटिकाश्रमे ।
तां स्वविरहव्याधिं शिंशुपामूलमाश्रितामिति ॥

(क) भा० पु० स्त० यथा हस्त्यवि० वर्ण० ।
(ख) भा० पु० स्त० निव इति पा० ।

तथा भरतस्यापि तदेवाह ।

गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलाम्बरम् ।
महाकारुणिकोऽतप्यज्जटिलं स्थण्डिलेशयमिति ॥

गोप्योऽनुरक्तमनसो भगवत्यनन्ते
तत्सौहृदस्मितविलोकगिरः स्मरन्त्यः ।
ग्रस्तेऽहिना प्रियतमे भृशदुःखतप्ताः
शून्यं प्रियव्यतिहृतं ददृशुस्त्रिलोकमिति

शून्यतोद्वेगौ ॥

अस्य गोप्य इत्यादिपद्यस्यार्थः ॥ प्रियेण श्रीकृष्णेन व्यतिहृतं त्यक्तं विरहितं वा त्रिलोकं गोप्यः शून्यं ददृशुः। कीदृश्यः । प्रियतमे कृष्णेऽहिना ग्रस्ते भृशदुःखाग्निना तप्ताः। यतोऽनन्ते भगवत्यनुरक्तानि मनांसि यासां ताः ॥ पुनः किंविशिष्टाः । तस्य श्रीकृष्णस्योपकारानपेक्षोपकारं(क) स्मितविलोकं च मधुरप्रियभाषणं च स्मरन्त्यः ॥

गायन्त्य उच्चैरमुमेव संहता
विचिक्युरुन्मत्तकवद्वनाद्वनम् ।
पप्रच्छुराकाशवदन्तरं बहि-
र्भूतेषु सन्तं पुरुषं वनस्पतीनिति

जडतोन्मादौ ॥

(क) आ० पु० ना० च इत्यधिकं क्वचित्।

देवकी रोहिणी चैव वसुदेवस्तथा सुतौ ।
रामकृष्णावपश्यन्तः शोकार्त्ता विजहुः स्मृतिम् ॥
प्राणांश्च विजहुस्तत्र भगवद्विरहातुरा इति

मूर्च्छामृत्यवस्मृतयः । इति तद्वियोगे दश दशाः ॥
तदीयता नाम । देहादिकं तदर्पणं कृत्वा तत्सत्ताकं तदीयं पश्येत् । यथोपरिचरस्य वसोः ।

आत्मा राज्यं धनं चैव कलत्रं वाहनं तथा ।
एतद्भागवतं सर्वमिति तत्प्रेक्षते नृप इति ॥

तदीयतायाः फलमाह ।

एषां घोषनिवासिनामुत भयान्किं देव रातेति न-
श्चेतो विश्वफलात्फलं त्वदपरं कुत्राप्ययन्मुह्यति ।
सद्वेषादिव पूतनापि सकुला त्वामेव देवापिता
यद्धामार्थसुहृत्प्रियात्मतनयप्राणाशयास्त्वत्कृते इति ॥

अस्यैषामित्यादिपद्यस्यार्थः ॥ येषां धामादयस्त्वत्कृते त्वदर्थमेव तेषां घोषनिवासिनां व्रजवासिनां(क) भवान्—त्मानपि सर्वैश्वर्यप्रदः परमेश्वरोऽपि विश्वफलात्सर्वफलात्मका(ख)त्वत्तः परं फलं किं राता किं दास्यत इति नश्चेतः कुत्रापि अयत्सर्वत्र गच्छद्विचारयन्मुह्यति! तेषामृणग्रस्ते त्वयि तव पुत्रत्वात्तद्ग्रस्तोऽहमेव भविष्यामीतीदं

(क) आ० पु० त्म० व्रजवासिनाम् इति पा० ।
(ख) आ० पु० त्म० त्मकत्वात् इति पा० ।

मम मोहकारणमिति भावः । ननु मा शुचस्त्वम् । मामेव दत्वा ऋणमुक्तो भविष्यामीति चेत्तत्राह । सतां भक्तानां यो वेषस्तदनुकरणं तस्माद् द्वेषाद्वेषानुकरणमात्रेण महापापिष्ठा सर्वलोकबालघ्नी पूतना त्वामेव आपिता प्रापिता । तर्हि घोषजनसंबन्धिनामप्यात्मानं दास्यामीति चेत्तत्राह । कीदृशी पूतना । सकुला । भो देव द्योतमान । बकाघासुरसहिता । त्वामापितास्तदृणमुक्तिर्न(क) दृश्यते इत्यनेन तदीयतायाः फलमप्युक्तं भवति ॥

सर्वतद्भावो नाम सर्वेषु भूतेषु भगवद्भावः । यथा प्रह्लादस्य । तदेवाह स्वयं प्रह्लादः ।

हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः ।
इति भूतानि मनसा कामैस्तैः साधु मानयेदिति ॥

अप्रातिकूल्यमात्रं तत्प्रियाचरणम् । यथा व्रजदेवीनाम् । यदुक्तं भगवता । आयास्य इति दौत्यकैरिति । बहुवचनान्तपदस्यायं भावः । भवतीभिर्मथुरा तत्र मयि विद्यमाने न द्रष्टव्या । वयमेव व्रजमेष्याम इत्येवं [illegible] तस्मिन्वाक्ये स्थिता गोप्य आहुः ।

अप्येष्यतीह दाशार्हस्तप्ताः स्वकृतया शुचा ।
संजीवयन्नु नो गात्रैर्यथेन्द्रो वनमम्बुदैः ।
तर्हि द्रक्ष्यामि तद्वक्त्रं सुनसं सुस्मितेक्षणमिति ॥

(क) आ० पु० स्त० निवृत्तिर्न इति पा० ।

ननु भगवद्भक्तिभागवतापराधिषु भक्तानां द्वेषादयोऽपि किं शुद्धिलिङ्गानि। नेत्याह शाण्डिल्यः शाण्डिल्यविद्यायाम्।

द्वेषादयस्तु नैवमिति ॥

तथोक्तं भगवता व्यासेन।

न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः।
भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे इति ॥

निन्दां भगवतः शृण्वंस्तत्परस्य जनस्य वा।
ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युत इति ॥

एतत्तु भक्ति(क)साधनकाले। न पराभक्तिप्राप्तौ। नन्वनुग्रहतारतम्यवति स्वामिनि तदनुरागिणां द्वेषादयस्तु किं शुद्धि(ख)लिङ्गानि। न हि न हि।

जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्मभिः।
यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिन इत्युक्तेः ॥

तस्माद् द्वेषादयस्तु भगवति मुक्तानामपि नरकहेतवः। किं पुनरन्येषाम्। शिशुपालादीनां तु शापवशाद् भगवति द्वेषादयस्तस्मात्तत्स्मरणम्। ततो भगवति बुद्ध्यनुवृत्तिस्तया भगवत्पद(ग)प्राप्तिरित्येवं क्रमस्तस्माद् द्वेषादयः केवलं नरक(घ) इत्यलं विस्तरेण ॥ १६ ॥

(क) आ० पु० स्त० भक्ति इत्यस्य स्थाने साध्य इति पा०। (ख) आ० पु० स्त० करणानि इत्यधि० वर्त्त०। (ग) आ० पु० स्त० पद इति पा०। (घ) आ० पु० स्त० हेतव इत्यधि० वर्त्त०।

तया वै परया कृष्णः सुखापो भगवान् हरिः ।
भक्तिरेवैनामित्यादेर्वेदशब्दान्न चेतरैः ॥ १७ ॥

तया पूर्वोक्तया शुद्धया परया भक्त्या एव श्रीकृष्णो भगवान् । हरिरित्यवताराभेदाभिप्रायेण । कृष्णः सुखापः । कुतः । भक्तिरेवैनं नयति । भक्तिरेवैनं पश्यति । भक्तिरेवैनं दर्शयतीति वेदशब्दात् । एवकारस्य त्रिरावृत्त्या कर्मयोगवैराग्यज्ञानादिभिरितरैः साधनैर्न ।

नायं सुखापो भगवान्देहिनां गोपिकासुतः ।
ज्ञानिनां चात्मभूतानां यथा भक्तिमतामिहेति
भागवते तच्छ्रुतिबृंहणात् (१)॥

अयं भावः । तदानुकूल्यात्तद्विरहाग्निना दग्धा अपि त्यक्तलोकवेदमर्यादा अप्यनागतं(क) नन्दनन्दनं द्रष्टुयाम । तथा व्रजकुमारिकाणामपि । तदेवाह शुकः ।

दूरं प्रलब्धास्त्रपया च हापिताः
प्रस्तोभिताः क्रीडनवच्च कारिताः ।
वस्त्राणि चैवापहृतान्यथाप्यमुं
ता नाभ्यसूयन्प्रियसङ्गनिर्वृताः

इत्येवं सम्भ्रमस्तम्भादिभिरष्टादशलिङ्गैस्तच्छुद्धिर्ज्ञेया ।

(१) नायं सुखाप इत्यादिश्लोकस्यार्थः । भक्तिमतां यशोदानन्दादीनां पुत्रत्वेन यथा भगवान्सुखापस्तथा देहिनां देहाभिमानिनां तपस्विनां न वै । यतो भग-

(क) भा० पु० स्त० भागतम् इति पा० ।

अनन्यचेताः सततं यो मां स्मरति नित्यशः ।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ।
ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ।
तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसामिति ॥
नाहं वेदैर्न तपसा न दानेन न चेज्यया ।
शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥

---

वान् अचिन्त्यैश्वर्यगुणसमुद्रस्ते तु तदभिमानिनः । अतः संबन्धाभावात् । ननु देहाभिमानिनस्तु सर्वे जीवाः। कथं त एव निश्चिता इति चेत्सत्यम्।तथापि आत्मभूतसाहचर्यात्र देहाभिमानिनस्त एवाल्पसेवापराधाभ्याम् अनुग्रहनिग्रहकारकत्वात् । अन्येषां प्रसङ्गाभावादपि। प्रसङ्गस्तु तत्प्राप्तियत्नपराणामेव।तर्हि किं ज्ञानिनां सुखापः । नेत्याह। आत्मभूतानां ब्रह्मभूतानां ज्ञानिनाम्(क) अपि न सुखापः। किन्तु दुःखाप एव ।

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते

इति श्रीभगवदुक्तेः ॥

कुतः सुखापाभावः । यतः गोचिकाद्युराः । ते त्वव्यक्तं ब्रह्म अपाणिपादमचक्षुःश्रोत्रमनिर्वचनीयं मृगयन्ति । तेन

---

(क) आ० पु० स्त० ज्ञानिनाम् इति ना० ।

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तपेति ॥
भक्त्याहमेकया ग्राह्यः श्रद्धयात्मा प्रियः सताम् ।
भक्तिः पुनाति मन्निष्ठा श्वपाकानपि(क) संभवादित्यादिभ्यः।
अतो भगवत्परमप्रसादाधिकारिणो भगवद्भक्ता एव ।
तदेवाह शुकः ।
नेमं विरञ्च्यो न भवो न श्रीरप्यङ्गसंश्रया ।
प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदादिति(१) ॥१७॥

साक्षात्परब्रह्मत्वा गोपिकासुतत्वं स्वीकृतम् । यतस्तेन सह तेषां संबन्धाभावाद् बुद्ध्याप्यगोचरः । भक्तिमतान्तु सर्वेन्द्रियगोचर इति भावः ।

(१) नेममित्यादिश्लोकस्यार्थः ॥ सायुज्यमुक्तिदात्कृष्णाल्लेभिरे उलूखले(ख) लेभिरः स्यादुलूखल इति विश्वः । इमं साम्प्रतोक्तं यत्प्रसादं यशोदा प्राप । तद्विरञ्च्यः पुत्रोऽपि नाप । भवो मित्रोऽप्यजसुतोऽपि नाप । वक्षःस्थलनिवासिनी श्रीः प्रिया तयोर्मातापितामही नाप(ग) । यद्वा । विरञ्च्यादयः प्रसादं लेभिरे इति न । किं तु पुत्रत्वरूपं स्वात्मरूपं च । जायात्मरूपं लेभिरे । अपि यद्गोपी प्राप तन्न लेभिरे । यद्वा । निश्चयार्थे नकारस्य त्रिरावृत्तिः ॥

(क) भा० पु० स्क० इति इति पा० । (ख) भा० पु० स्क० लेभिरः स्यादित्यारभ्य नेममितिपर्यन्तं पा० । (ग) लेभिरः स्यादित्यादिविश्वकोशवाक्यम् भा० पु० स्क० अस्ति ।

साकारविषयं ज्ञानं भक्त्यङ्गं तत्तु भक्तिदम् ।
तद्वियोगे च कन्त्यागात्मकं वैराग्यमुत्तमम् ॥ १८ ॥

ननु ज्ञानी त्वात्मैव मे मतमित्यादिभ्यो ज्ञानेनापि भगवान्सुखापः । भक्त्यैवेति कोऽयमाग्रह इति चेत्तत्राह । साकारविषयमिति । ज्ञानं तु द्विविधम् । परमपरं च । परं तु भगवान्कृष्णः । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः । अपरं ज्ञानसाधनं शास्त्रीयम् । ज्ञायतेऽनेनेति ज्ञानम् । तदपि द्विविधम् । भगवदाकारज्ञानं प्रथमम् । निराकारनिर्विशेषज्ञानं द्वितीयम् । तयोर्यत्साकारज्ञानं तत्तु भक्त्यङ्गम् । तस्माद् भक्तिदम् ।

ब्रह्मकाण्डं तु भक्तौ तस्यानुज्ञानाय सामान्यादिति ।
दृष्टत्वाच्चेति शाण्डिल्यसूत्रोक्तेः (१) ॥

---

( १ ) ब्रह्मकाण्डन्त्वित्यादिशाण्डिल्यसूत्रयोरर्थः ॥ ब्रह्मकाण्डमुपनिषद्रूपं ज्ञानकाण्डन्तु भक्तौ भक्त्यर्थमेवोपप्रवर्णितं वेदैरिति शेषेणार्थः । द्वितीयार्थे सप्तमी । यतो भगवज्ज्ञानेन तस्मिन्ननुरागो भवति । कुतः । सामान्यात् । मणिज्ञानेन मणौ प्रीतिर्भवति । तस्मान्मणिज्ञानस्य मणौ प्रीतेरङ्गत्वं प्रसिद्धम् । लोकेऽपि सौन्दर्यादिज्ञानस्यैव तरुण्यादौ प्रीतिहेतुत्वस्य दृष्टत्वात् । अतो भक्त्यर्थमेव तस्य भगवतो ज्ञानाय ब्रह्मकाण्डमित्यर्थः । यो वै भूमा तत्सुखमित्युपक्रम्य पठ्यते । आत्मैवेदं सर्वमिति । स वा

अतो ज्ञानस्य भक्त्यङ्गत्वं सिद्धम्(क)। अतो हेतोर्भक्त्यङ्गं ज्ञानं तु भक्तिदम्। चकारात्तत्तस्य कृष्णस्य वियोगे कन्त्या-गात्मकं सर्वसुखत्यागात्मकं वैराग्यमपि भक्तिदमतस्तयोर्भक्त्य-ङ्गत्वाद् भक्त्यैव भगवा(ख)न्सुखापो नान्याभ्यामित्यर्थः। तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशेष्यत इत्युक्तेः॥ १८॥

---

एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्म-क्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवतीति श्रुतेः। अस्याः श्रुतेरर्थः॥ आत्मा ब्रह्मैवेदं विश्वमिति मन्वा-नः पुरुष एवं पश्यन्नेवं विजानन् आत्मनि भगवति ब्र-ह्मणि रतिर्भक्तिर्यस्य स आत्मरतिः आत्मनि मनसः क्री-डनं यस्य स आत्मक्रीडः। आत्मना भगवता सह मि-थुनं स्वामिसेवकत्वलक्षणं द्वितीयत्वं न तु तृतीयत्वं यस्य स आत्ममिथुन एवंभूतो भगवदीयो भवतीति श्रुतावा-त्मरतिरूपाया भक्तेः पश्यन्निति दर्शनस्याङ्गत्वेन प्रति-पादनात् ज्ञानस्य भक्त्यङ्गत्वमित्यवसीयते। ननु स स्व-राड् भवतीति ज्ञानस्यैव प्रकरणमिति चेन्न। आत्ममि-थुन इत्यादिफलसंबन्धाच्छ्रुतेरेव प्रकरणात् स स्वराड् भवतीत्यस्यार्थस्तु। स्वेनैव रूपेण ज्ञानस्वरूपेण ज्ञानगु-णेनानुनाकारेण विज्वरादिगुणेन राजत इति स स्वराट्। ननु स्वेनैव ब्रह्मस्वरूपेण निर्विशेष(ग)चिन्मात्रेण ज्ञा-

---

(क) आ० पु० न्त० सिद्धम् इति पा०। (ख) आ० पु० न्त० भगवान् इति पा०। (ग) आ० पु० न्त० निर्विशेषेण इति पा०।

नगुणाभावेन राजत इति स्वराडिति चेन्न। श्रुतिसूत्रवि-रोधात्। श्रुतिस्तु। एवं सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतीरूपं संपद्य स्वेन रूपेणाभिनिष्पद्यत इति। अ-स्याः श्रुतेरर्थस्तु सूत्रकारेण भगवता व्यासेन निर्णीतः। स यथा।

संपद्याविर्भावः स्वेन शब्दात्।
ब्राह्मेण जैमिनिरुपन्यासादिभ्यः।
चितितन्मात्रेणात्मकत्वादित्यौडुलोमिः।
एवमुपन्यासात्पूर्वभावादविरोधं वादरायणः॥

एषां सूत्राणामर्थः। परं ज्योतीरूपं संपद्य स्वेन रूपेणा-विर्भाव इत्यस्य शब्दस्यार्थं ब्रह्मणः भावो ब्राह्मम्। तेन सर्वज्ञत्वादिना अपहतपाप्मत्वादिना ज्ञानगुणेना-भिनिष्पद्यते जीव इति जैमिनिराचार्यो मन्यते। कुतः(क)। स सर्वज्ञः स सर्वविदित्याद्युपन्यासादिभ्यः। चिति चित्त-न्मात्रेण ज्ञानस्वरूपेणाभिनिष्पद्यत इत्यौडुलोमिराचार्यो मनुते। कुतः।(ख)आत्मकत्वात् जीवात्मनो ब्रह्मत्वात्। एवं विरोधे अविरोधमर्थं ज्ञानगुणेन ज्ञानस्वरूपेणाभि-निष्पद्यत इति वादरायणो व्यासोऽहं मन्ये। कुतः। उ-भयप्राप्त्यविरोधात्। श्रुतावुभयरूपत्वेन प्रतिपादनादि-त्यर्थः। ये केवलं ज्ञान(ग)गुणं जीवात्मानं मन्यन्ते तेऽपि

(क) आ० पु० स्त० कुतः इति ना०। (ख) आत्मकत्वादित्यारभ्य मन्व कुतः इति पर्यं० आ० पु० स्त० ना०। (ग) आ० पु० स्त० केवलज्ञान इति पा०।

**नाभ्याभ्यां त्यागबोधाभ्यां सुखापो भगवान्हरिः ।**
**यतस्तौ भगवद्भक्तिबाधकौ क्लेशसाधकौ ॥१६॥**

तदेवाह । नाभ्याभ्यामिति । ज्ञानमेकात्मदर्शनमिति लक्षणाद्द्वैतज्ञानमपि शास्त्रप्रसिद्धम् । तदपि द्विविधम् । शास्त्रतात्पर्याद्वैतं प्रथमम् । शास्त्रतात्पर्यविधुरं द्वितीयम् । यावद् देहस्मरणं स्वप्नवदपि तावद् भगवान्भजनीयः । यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति श्रुतितात्पर्यं ज्ञात्वा अभेदभावनया भजन्ति । तच्छ्रुतितात्पर्यज्ञानम् मुक्ता अपि लीलया(क) विग्रहं कृत्वा परमेश्वरं भजन्तीति शङ्करोक्तेः। यन्न भजन्ति तच्छ्रुतितात्पर्यशून्यमासुरम् । तथा भगवद्विग्रहत्यागात्मकम् भगवत्प्रसादे विपयबुद्ध्यात्मकं वेदविरोधवैराग्यम् । ताभ्यां त्यागबोधाभ्यां भगवान् हरिर्न सुखापः । यतस्तौ ज्ञानविरागौ भगवद्भक्तिबाधकौ । अतः क्लेशसाधकौ ।

---

श्रुतिविरोधिनः । ये केवलं ज्ञानस्वरूपं वदन्ति ते वै । जीवात्मा तु ज्ञानगुणो ज्ञानस्वरूपोऽणुश्च । यतः परं ज्योतीरूपं संपद्य स्येन रूपेणाभिनिष्पद्यते । न तु तेन ज्योतीरूपेणेत्युक्तत्वात् । स्वेन रूपेण ब्रह्मरूपेणाद्वितीयेनाभिनिष्पद्यत इति वादिनस्त्ववैदिकाः श्रुतिविरोधिनः। यतो यर्हि श्रुतेरभेदान्वयस्तर्हि तेन (ख)ज्योतीरूपेण अभि-

---

(क) भा० पु० म० लीला इति पा०।

(ख) भा० पु० म० रूपेण इत्यधि० वर्तं० ।

श्रेयःसृतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूलतुषावघातिना-
मिति ब्रह्मोक्तेः (१) ॥

ननु ब्रह्माहमस्मीत्यनुसन्धानं कारितं वेदैः । तत्किं भ्रमेण । नहि नहि । तत्त्वेका सच्चिदानन्दा भगवच्छक्तिस्त्रिधा जाता आनन्दांशेन ह्लादिनी । चिदंशेन संविद्रूपा । सदंशेन संधिनी च । तत्र ह्लादिन्या तु दासदासीभावेन दास्यात्मकं भजनम् । संविद्रूपाया मित्रभावनाभेदानुसन्धानात्मकम् । सन्धि-

निष्पद्यत इति कथन्नोक्तम् । अन्यथा ज्योतिःस्वरूपस्य साधनत्वप्रसङ्गाच्छ्रुतौ विरोधापत्तिः । तस्मात् स एवार्थः ॥

(१) श्रेयःसृतिमित्यादिश्लोकस्यार्थः ॥ हे विभो अपरिच्छिन्न श्रेयसां परममङ्गलानां मोक्षादीनां सृतिः प्रवाहो यस्याः सकाशात्तान्ते भक्तिमुदस्य त्यक्त्वा ये केवलबोधलब्धये अद्वैतज्ञानलाभाय क्लिश्यन्ति क्लेशं कुर्वन्ति तेषां क्लेशल एव शिष्यते क्लेशमात्रमेवावशिष्टं भवति । नान्यत्स्वर्गसुखमपि । यथा, सकणमल्पप्रमाणं धान्यं त्यक्त्वा कणहीनस्थूलतुषावघातिनां क्लेशमात्रमवशिष्टं भवति । न तु तण्डुलस्यैककण(क)मपि ।

(क, आ० पु० स्त० तण्डुलानां कण इति पा० ।

न्या जनकजननीभावेन लालनपालनात्मकं भजनं च । अतो ब्रह्मभावत्वप्राप्तये ब्रह्मभावना कारिता वेदैः । विष्णुर्भूत्वा विष्णुं यजेदिति वचनात् । ब्रह्म भूत्वा ब्रह्माप्नोतीति श्रुतेः । ब्रह्म भूत्वा ब्रह्माप्नोति इत्यनेन भगवतः समैश्वर्यलाभत्वमुक्तं भवति । न तु भेदाभावत्वम् । अन्यथा ब्रह्माप्नोतीति श्रुतौ विरोधापत्तिः । तस्माद् ब्रह्मभावदृढत्वेन ब्रह्मसमत्वप्राप्तये ब्रह्माहमस्मीति भावना । न त्वभेदज्ञानाय । भक्तिविधुरो ब्रह्मभावस्त्वासुर एव । ईश्वरोऽहमहम्भोगीत्यासुरत्वप्रतिपादकवाक्यात् । अतो भक्तिविधुरमभेदज्ञानं त्वधःपतनहेतुः । तदेवाह ब्रह्मा भगवन्तं प्रति ।

> येऽन्येऽरविन्दाक्ष विमुक्तमानिन-
> स्त्वय्यस्तभावादविशुद्धबुद्धयः ।
> आरुह्य कृच्छ्रेण परं पदं ततः
> पतन्त्यधोऽनादृतयुष्मदङ्घ्रय इति (१)॥ १०॥

(१) येऽन्येइत्यादिश्लोकस्यार्थः ॥ हे अरविन्दाक्ष त्रिविधतापनिवर्त्तक येऽन्ये तव भक्तिवर्जितास्तु अतिकृच्छ्रेण परं पदम् अविद्यानिवृत्ति रूपं जीवनमुक्त(क)पदमारुह्य ततस्तस्मात्पदादधः पतन्ति स्वर्गेऽपि न तिष्ठन्ति। नारिकेलपत्रवदाश्रयाभावात् । यतः विमुक्तमानिनः अयं

(क) भा० पु० स्त० जीवन्मुक्ति इति पा०।

**अतस्तेनैव ज्ञानेन कृष्णरूपविदा सता ।**
**ज्ञातव्यो भगवान्कृष्णः स्वात्मा चैव ह्यजा वयः २०**
**सर्वज्ञः सर्ववित्साक्षी सर्वेशानो विभुः परः ।**
**सर्वशक्तिधरः सर्वलोकलोकाविताश्रयः ॥ २१ ॥**

अतः कारणात्तेनैव भक्त्यङ्गेन कृष्णविदा ज्ञानेन सता पुरुषेण भगवान्कृष्णो ज्ञातव्यः । स्वात्मा स्वजीवात्मा च । अजा मायापि । वयः कालः । सोऽपि ज्ञातव्यः । चकारात्कर्मस्वभावावपीत्यर्थः ॥ २० ॥

ननु कैः साधनैर्ज्ञानेन भगवान् ज्ञातव्यः । तद्विशेषणैरेव । तदेवाह पञ्चभिः । सर्वज्ञ इति । राधिकावल्लभः श्रीकृष्णो ज्ञातव्य इति पञ्चमश्लोकेनान्वयः । कथंभूतः । सर्वज्ञः । पुनः । सर्ववित् । सामान्येन सर्वं जानातीति सर्वज्ञः । विशेषेण सर्वं वेत्तीति सर्वविद् । यथा गानश्रवणे सामान्यज्ञानम् । तत्तालस्वरादिज्ञानं विशेषज्ञानमिति भेदान्न पुनरुक्तिः । पुनः किंविशिष्टः । साक्षी सर्वेषां बुद्धिद्रष्टा । पुनः कीदृशः । सर्वेषां ब्रह्मादीनामीशानः ईशिता । स सर्वज्ञः सर्ववित्सर्वेशानो यस्य ज्ञानमयं तप इति ।

मुक्ताः सजातीयविजातीयस्वगतभेदशून्या इति मानिनः । तत्कुतः । यतस्त्वय्यस्तभावादविशुद्धबुद्धयः त्वय्यस्तभक्तियोगात्र विशुद्धा बुद्धिर्येषां ते । तस्मात्कादृ त्वयुष्मदङ्घ्रयः मादृतौ नाश्रितौ सेव्यतया तवाङ्घ्री यैस्ते ॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्चेति
श्रुतेः ।

वेदाहं समतीतानि वर्त्तमानानि चार्जुन ।
भविष्याणि च भूतानि मां तु वेद न कश्चनेति
श्रीभगवदुक्तेश्च ।

पुनः कथंभूतः । विभुर्व्यापकोऽपरिच्छिन्नः ।

येनावृतं खं च दिवं मही च
येनादित्यस्तपति तेजसा भ्राजसा च ।
यमन्तःसमुद्रे कवयो वदन्ति
तदक्षरे परमे प्रजा इति ॥

महानज आत्मेत्यादिश्रुतिभ्यः । पुनः । परः सर्वेभ्यः परः ।
परोऽन्यो यस्मात्प्रपञ्चः परिवर्त्तते ।

तमीश्वराणां परमं महेश्वरं
तद् देवतानां परमं च दैवतम् ।
पतिम्पतीनां परमं परस्ता-
द्विदाम देवं भुवनेशमीड्यम् ॥
न तस्य कार्यं करणं च विद्यते
न तत्समश्चाभ्यधिकश्च दृश्यते

इत्यादि श्रुतिभ्यः। तासां श्रुतीनामुपबृंहणं तु भागवते
वसुदेवो भगवन्तं प्रति आह ।

विदितोऽसि भवान् साक्षात्पुरुषः प्रकृतेः परः ।
केवलानुभवानन्दस्वरूपः सर्वबुद्धिदृगिति (१) ॥

(१) विदितोऽसीत्यादिपद्यस्यार्थः ॥ भवान् मया साक्षाद्विदितोऽसि । न तु देवर्षीणामिव शब्दानुमानाभ्याम् । किं पुत्रत्वेन । नेत्याह(क)।प्रकृतेः परः। किमन्तर्यामीश्वरोऽहम् । नेत्याह । केवलानुभवानन्दः केवलश्चासावनुभवस्तस्यानन्दः केवलानुभवानन्दस्तत्स्वरूपः । तर्हि किं निर्विशेषः । नेत्याह । सर्वबुद्धिदृक् । न च तत्साक्षात्कारानेत्रविषयत्वेन जडत्वप्रसङ्गः । अतो वसुदेवेन तत्स्वरूपमुपवर्णितम् । न तु विग्रह इति वाच्यम् ।

नित्योऽव्यक्तो हि भगवानीक्ष्यते निजशक्तितः ।
तमृते परमात्मानं कः पश्येतामितं प्रभुमिति ॥
ततः स्वयं प्रकाशत्वं शक्त्या स्वेच्छाप्रकाशया ।
सोऽभिव्यक्तो भवन्नेत्रे न नेत्रविषयत्वत इति
नारायणाध्यात्मोपनिषदुक्तेः ।

अस्यार्थः ॥ भगवान्नित्योऽव्यक्तोऽप्यलक्ष्योऽपि निजशक्तितः भगवच्छिच्छक्त्या ईक्ष्यते । तां शक्तिं विना कः पुरुषः पश्येत् । न कोऽपीत्यर्थः । नेत्राविषयत्वात् । तदेवाह । भगवदिच्छया प्रकाशया शक्त्या स भगवान्नेत्रे-

(क) भवान्पुरुषः । किं शुद्धजीवः । नेत्याह । इत्यादि० पुं० न्त० अधि०.वर्ण० ।

एवं तत्प्रकृतिपरत्वमुक्त्वा जीवपरत्वमाह रुद्रवाक्येन ।

य: परं रंहस: साक्षात् त्रिगुणाज्जीवसंज्ञितात् ।
भगवन्तं वासुदेवं प्रपन्न: स प्रियो हि मे इति (१)॥

एवं जीवपरत्वमुक्त्वा ईश्वरपरत्वमाह शुकवाक्येन ।

गृहीतमूर्त्तित्रय ईश्वरेश्वरो
जगाद सप्रेम मनोहरस्मित इति (१) ॥

---

भिव्यक्तो भवेत् । अतो न नेत्रविषयः । तस्मात्तस्य स्वयम्प्रकाशकत्वम् । अतो निर्विशेषब्रह्मवादिभिर्ब्रह्मणि फलव्याप्तिनिषेधेन वृत्तिव्याप्तिः स्वीकृता । तस्मिन्स्वीकारेऽपि स्वप्रकाशकत्वान्न जडत्वप्रसङ्गस्तथात्रापि भगवतो विश्वरूपमपि न हि नेत्रविषयम् ।

न तु मां शक्यते द्रष्टुमनेनैव स्वचक्षुषा ।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरमित्युक्तः ।
किं वक्तव्यं चैतन्यविग्रहस्येत्यलं विस्तरेण ॥

(१) यः परमित्यादिपद्यस्यार्थः । यः पुरुषः साक्षाद्वासुदेवं प्रपन्नः 'स मे प्रिय' इत्यनेन रुद्रस्य परमवैष्णवत्वं ज्ञातव्यम्। तस्माद्भगवानिव(क) पूज्यः।कीदृशं वासुदेवम् । त्रिगुणाद्रंहसः सूक्ष्मात्प्रधानाज्जीवसंज्ञितात्पुरुषादपि परम् । यतो भगवन्तमचिन्त्यैश्वर्यम् ॥

(१) गृहीतमूर्त्तित्रय इत्यादिपद्यार्द्धस्यार्थः ॥ ई-

---

(क) भा० पु० त्व० ज्ञातव्यः इत्यधि० वर्त्त० ।

एवं तस्येश्वरपरत्वं निरूप्य तद्ब्रह्मपरत्वं तु तद्वाक्येनैवाह चित्रकेतुं प्रति भगवान् ।

अहं वै सर्वभूतानि भूतात्मा भूतभावनः ।
शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनू इति (१) ॥

श्वरस्यापीश्वरः श्रीकृष्ण उद्धवं प्रति जगाद । कथंभूतः । गृहीतमूर्त्तित्रयः । गृहीतानि मूर्त्तित्रयाणि ब्रह्मविष्णुमहेश्वराख्यानि येन सः । तत्र ब्रह्मरुद्रयोः पूर्वोक्तप्रकारेण कस्मिंश्चित्कल्पे जीवत्वं कस्मिंश्चिदीश्वरत्वम् । विष्णुस्तु स्वयं भगवान् श्रीकृष्णः ।

वसुदेवोऽस्य जनकः स एवानकदुन्दुभि-
रित्यभिधानोक्तेः ।
रोहिणी जन्मनक्षत्रं वृषराशिः सुतस्य ते ।
विष्णुदेवेति नामास्य ततः सर्वं विचार्यतामिति
श्रीनन्दोक्तेरपि ।

ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदन इति श्रुतेः ।

अतो रमानाथस्तु भगवानेव । तस्य गुणावतारत्वं तु गुणावतारे प्रवेशात् । यथा सूर्यस्य ग्रहेषु प्रवेशाद् ग्रहत्वम् । ग्रहराजत्वं तु नित्यम् । तद्वदित्यर्थः ।

(१) अहं वै इत्यादिश्लोकस्यार्थः । सर्वभूतान्यहमेव । शक्त्युपादानकारणत्वात् । भूतात्माप्यहमेव । जीवांशित्वात् । भूतभावनोऽस्मि । भूतानि भावयतीति वृद्ध-

अष्टमस्कन्धेऽपि सत्यव्रतं प्राति भगवान् ।

मदीयं महिमानं च परब्रह्मेति शब्दितम् ।

वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदीति (१) ॥

तदेव द्रढ़याति स्वयं भगवान् ।

भक्त्योद्धवानपायिन्या सर्वलोकमहेश्वरम् ।

सर्गोत्पत्त्यप्ययं ब्रह्म कारणं मोपयाति स इति (२) ॥

गीतायामपि ।

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च ।

शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य चेति (३) ॥

---

यति पालयतीति भूतभावनः । निमित्तकारणत्वात् । तत्कुतः । यतः शब्दब्रह्म वेदाख्यं परं ब्रह्म सर्वव्यापकं ते उभे सगुणनिर्गुणे मे शाश्वती निरन्तरे नित्ये तनू शरीरे अहं तु शरीरीत्यर्थः ।

(१) मदीयमित्यादिश्लोकस्यार्थः ॥ भो राजन् मदीयं महिमानं त्वया कृतप्रश्नैः त्वं वेत्स्यसि । किंभूतम् । परब्रह्मेति शब्दितं । पुनस्तैः प्रश्नैर्मया ते हृदि विवृतं प्रकाशितं सन्तम् ।

(२) भक्त्येत्यादिश्लोकस्यार्थः ॥ स पूर्वोक्तो यतिर्भक्त्या मामुपयाति । कथंभूतं माम् । सर्गोत्पत्त्यप्ययं सर्गश्चोत्पत्तिश्चाप्ययश्च सर्गोत्पत्त्यप्यया यस्मात्सः । पुनः ब्रह्मकारणम् ब्रह्माश्रयमित्यर्थः ॥

(३)ब्रह्मणो हीत्यादिपद्यस्यार्थः ॥ ब्रह्मणः निर्वि-

न च ब्रह्मशब्देन वेदः । न तु निर्गुणो निर्विशेष इति वाच्यम् । वेदब्रह्मणः प्रकरणाभावात् । प्रकरणं तु ।

मां च योऽव्यभिचारेण भक्तियोगेन सेवते ।

स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ।

ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य चेति (क) ॥

तस्माद् ब्रह्म अन्नं चं जायत इति श्रुतिरपि । अत्र(ख) चकारान्नान्नस्य विशेषणं ब्रह्म । यतः पृथक् पदम् । श्रुत्यन्तरेऽपि । स कारणं कारणकारणाधिप इति । अस्याः श्रुतेरुपबृंहणं भागवते । तद्यथा ।

सर्वेषामपि वस्तूनां भावार्थो भवति स्थितः ।

तस्यापि भगवान्कृष्णः किमतद्वस्तु रूप्यतामिति (१)॥

---

शेषस्याहमेव प्रतिष्ठा आश्रयभूतः । यथा प्रभासूर्ययोरभेदेऽपि प्रभाया आश्रयः सूर्य एव । प्रभाकरत्वात् प्रभानाथत्वाच्च । अमृतादीनामपि ॥

(१) सर्वेषामित्यादिश्लोकस्यार्थः ॥ सर्वेषां वस्तूनां भूतेन्द्रियदेवान्तःकरणकर्मकालमायास्वभावादीनां भावार्थः परमार्थः । भवद् ब्रह्म कारणम् । तस्मिन्भावार्थे भवति ब्रह्मणि स्थितः भगवान्कृष्णस्तस्य ब्रह्मणोऽपि कारणम् । तस्मादतत्कृष्णव्यतिरिक्तं किं वस्तु भवता रूप्यतां निरूप्यतामिति ॥

---

(क) आ० पु० भ० चेत्यादि इति पा०। (ख) आ० पु० भ० अर्थः इति पा० ।
(ग) आ० पु० भ० तद् इत्यधि० वर्त्त० ।

अत्र कारणकार्यशब्देन मणिप्रकाशन्यायेनाधाराधेयत्वं प्रतिपादितम्। तत्कुतः। तयोरेकत्वेन कारण(क)कार्याभावात्।

यदद्वैतं ब्रह्म यस्य तनुभेति कृष्णभेति श्रुतेः ॥

कृष्णस्य भा प्रभा कृष्णभा ब्रह्मेत्यर्थः। कृष्णा चासौ भा कृष्णभेति तु विरोधार्थः ॥

यस्य प्रभा प्रभवतो जगदण्डकोटि-
कोटिष्वशेषवसुधादिविभूतिभिन्नम्।
तद् ब्रह्मनिष्कलमनन्तमगाधबोधं
गोविन्दमादिपुरुषं तमहं भजामीति
चतुराननवाक्ये(ख)श्रुत्युपबृंहणात्(१)॥

तस्माद्यथा गङ्गायां गङ्गामूर्त्तिः। आकाशे आकाशमूर्त्तिः। आदित्यतेजसि तन्मूर्त्तिः। तथा ब्रह्मणि ब्रह्ममूर्त्तिस्तु श्रीकृष्ण एव।

(१) यस्य प्रभेत्यादिपद्यस्यार्थः ॥ तं गोविन्दमादिपुरुषमहमभजामि। तं कम्। तत्राह। यस्य प्रभवतो गोविन्दस्य या प्रभा तद् ब्रह्म। तमित्यर्थः। कीदृशं ब्रह्म। जगदण्डकोटिकोटिषु वसुधादिविभूतिस्ताद्भिन्नम्। यतो निष्कलम् पुनः किं विशिष्टम्। अगाधबोधम्। पुनः। अनन्तम् ॥

(क) आ० पु० स्त० कारणकारण इति पा०।
(ख) आ० पु० स्त० वाक्येन इति पा०।

बृहद्गुणत्वाद् ब्रह्मेति प्रोच्यते भगवान्परः ।
बृहन्तो ह्यस्मिन्गुणास्तद् ब्रह्मेति ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत

इति वेदवाक्याभ्यां द्वाभ्यां कृष्णपरत्वनिर्णयादलं विस्तरेण ॥ न चोपनिषदि तु गोपालो ब्रह्म कृष्णो ब्रह्मेत्यनेन ब्रह्मपरत्वमिति वाच्यम् । विशेष्यविशेषणभावात् ।यथा ब्राह्मणः श्याम इत्यलं विस्तरेण(क)॥ पुनः कीदृशो राधावल्लभः । सर्वशक्तिधरः । शक्तयस्तु पूर्वोक्ताः षोड़शैव । पुनः सर्वलोकाः पातालादयो वैकुण्ठान्ता अनित्याः । नित्याश्च तेषु लोका देहा अपि नित्यानित्यास्तेषामाविता रक्षकोऽप्याश्रयः ।

तमीश्वराणां परमं महेश्वरं
तद् दैवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ता-
द्विदाम देवं भुवनेशमीड्यमिति ॥

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मेति श्रुतेः ॥२१॥

(क) न चोपनिषदीत्यारभ्य इत्यलं विस्तरेणेत्येतत्पर्यं० भा० पु० स्त० ना० ।

सर्वकर्माश्रयः कर्मफलदस्तत्प्रवर्त्तकः ।
मायाकालाश्रयः शास्ता सच्चिदानन्दविग्रहः २२

पुनः किंविशिष्टः । सर्वकर्माश्रयः शुभाशुभमिश्रितकर्माश्रयः । कर्माध्यक्ष इति श्रुतेः । कर्मप्रवर्त्तकोऽपि फलदः । फलमत उपपत्तेरिति वेदान्तोक्तेः (१) ॥

फलमस्माद्बादरायणो दृष्टत्वादिति
शाण्डिल्यसूत्रोक्तेरपि (२) ॥

पुनः कीदृशः । तत्प्रवर्त्तकः । कर्मप्रवर्त्तकः ।

स श्रेयसामपि विभुर्भगवान्यतोऽस्य
भावः स्वभावविहितस्य सतः प्रसिद्धिः ।
देहे स्वधातुविगमेऽनुविशीर्यमाणे
व्योमेव तत्र पुरुषो न विशीर्यतेऽज
इति भागवतोक्तेः (३) ॥

---

(१) फलमत इत्यादिसूत्रस्यार्थः ॥ कर्मफलं त्वतः परमेश्वरात् । कुतः । यतस्तद्दातृत्वादीनां गुणानां तदुपपत्तेः ॥

(२) फलमस्मादित्यादिशाण्डिल्यसूत्रस्यार्थः ॥ कर्मफलं त्वस्माद् ब्रह्मणः सकाशात्प्राप्यते । राजादितोऽपरोक्षाभ्यामुचितफलप्राप्तेर्लोके दृष्टत्वादित्यर्थः । न तु जडरूपे तदनुकूलताप्रतिकूलते तत्तत्फलप्रदे तथा प्रचितकर्मापि ॥

(३) स श्रेयसामित्यादिपद्यस्यार्थः ॥ अस्य जीव-

पुनः किंविशिष्टः । मायाकालयोराश्रयः ।

परास्य शक्तिर्विविधैव श्रूयते

स्वाभाविकी ज्ञानक्रियाबलेति श्रुतेः ॥

मायया च निषेवित इति भागवतोक्तेरपि ।

कालाश्रयत्वेऽपि प्रमाणमाह ।

योऽयं कालस्तस्य तेऽव्यक्तबन्धो

चेष्टामाहुश्चेष्टते येन विश्वमिति

श्रीभागवतोक्तेः ।

पुनः कथम्भूतः । सच्चिदानन्दविग्रहः । यदात्मको भगवांस्तदात्मिका व्यक्तिः(क)। किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्मक इति श्रुतेः । श्रुत्यन्तरेऽपि ।

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।

नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ।

इत्यत्र स्वरूपशब्दो विग्रहप्रतिपादक एव ।

---

स्य प्रेयसां शुभकर्मणाम् । अपि शब्दादशुभमिश्रितानामपि स भगवान्विभुः फलदः । स कः । तत्राह । अस्य सतः कर्मणः यतः परमेश्वराद्भगवतः कर्मप्रवर्त्तकात्प्रसिद्धिः । कीदृशस्य । भावानां ब्राह्मणादीनां स्वभावैः शमदमादिभिर्विहितस्य । अस्य कस्य । तत्राह । स्वधातुविगमे भूतानां वियोगेऽनुविशीर्यमाणे देहे व्योमेव तत्र कः पु-

---

(क) भा० पु० स्त० शक्तिः इति पा० ।

ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः ।
अनादिरादिर्गोविन्दः सर्वकारणकारणमिति
ब्रह्माण्डपुराणोक्तेः ॥

आनन्दरूपममृतं यद्विभाति आभरणत्वात्सर्वमेवानन्दम् ।
तमेव गोविन्दं सच्चिदानन्दविग्रहम् ।
अतसीपुष्पसंकाशं नाभिस्थाने प्रतिष्ठितम् ।
दुर्दर्श(क)मतिगम्भीरमजं श्यामं विशारद-
मित्यादिश्रुतयोऽपि । तासामुपबृंहणं तु भागवते(ख)।

गोप्यस्तपः किमचरन्यदमुष्य रूपं
लावण्यसारमसमोर्ध्वमनन्यसिद्धम् ।
दृग्भिः पिबन्त्यनुसवाभिनवं दुराप-
मेकान्तधाम यशसः श्रिय ऐश्वरस्येति (१) ॥

रूपो न विशीर्यते । यतोऽजस्तेन देहेन सह न जातः ।
न जायते म्रियते वा कदाचि-
न्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे इत्युक्तेः ॥

(१) गोप्यस्तप इत्यादिश्लोकस्यार्थः ॥ भोः सख्यः गोप्यः किं तपः अचरन् । तत्कुशलाभिर्विचारणीयम् । येन तपसा अमुष्य व्रजेन्द्रनन्दनस्य रूपं दृग्भिः पिबन्ति।

क) आ० पु० स्त० दुर्दर्शं इति पा०। (ख) भा० पु० स्क० तथाथा इत्यभि० वर्ने

तदनुभवमाहुर्गोप्यः ।

का स्त्र्यङ्ग ते कलपदायतवेणुगीतं
संमोहितार्यचरितान्न चलेत् त्रिलोक्याम् ।
त्रैलोक्यसौभगमिदं च निरीक्ष्य रूपं
यद् गोद्विजद्रुममृगाः पुलकान्यबिभ्रन्निति(१)॥

किंविशिष्टम् । अनन्यसिद्धं नान्यैर्मायागुणैर्मायया वा सिद्धम् । नित्यं स्वतः सिद्धमित्यनेन सच्चिदानन्दत्वं जन्मविकारशून्यत्वमप्युक्तं भवति । पुनः कीदृशम् । दुरापं ब्रह्मादीनामनेनाविषयम् । तत्कृपासाध्यत्वादस्तिविकाररहितम् पुनः । असमोर्ध्वं समाधिकाभाववत्त्वम् । वृद्धिविकारातीतम् । न तत्समश्चाभ्यधिकश्च दृश्यत इति श्रुतेः । पुनः । अनुसवाभिनवमित्यनूतनम् । अपक्षयविकारवर्जितम् । पुनः कथंभूतम् । लावण्यसारम् । परिणामविकारशून्यम् । पुनः । यशसः श्रियोऽपि ऐश्वर्यज्ञानवैराग्यधर्मादीनामेकान्तधाम अव्यभिचारि अविनाशि धाम । मरणविकारातीतमित्यर्थः । अयं भावः । श्रीकृष्णस्य बाल्याद्यवस्था तु भक्तेच्छया चिच्छक्तेः सकाशाद् भवति । किशोरविग्रहस्तु नित्यः सदैकरसस्त एवानुवर्त्तितस्ताभिः ॥

(१) का स्त्र्यङ्गेत्यादिपद्यस्यार्थः ॥ अङ्ग हे त्रिलोकसुन्दर मधुराव्यक्तानि कलपदानि यानि तैरायतं ते

तद्देवोद्धववाक्येन द्रढ़यति ।

> यन्मर्त्यलीलौपयिकं स्वयोग-
> मायाबलं दर्शयता गृहीतम् ।
> विस्मापनं स्वस्य च सौभगर्द्धेः
> परं पदं भूषणभूषिता(क)ङ्गमिति (१) ॥

तव वेणुगीतं तेन सम्यक् मोहिता स्त्री या सा का त्रिलोक्याम् आर्यमार्गात् वेदमार्गान्न चलेत् । न कापीत्यर्थः । पुनः । इदं रूपं निरीक्ष्य देवासुरर्षिनागमनुष्येषु का या न चलेत् । कीदृशमिदम् । त्रैलोक्यसौभगम् । यद्येन रूपदर्शनेन गोद्विजमृगा द्रुमा अपि पुलकान्यबिभ्रन् । चकारादिदं स्पृष्ट्वा न चलेदिति किं वक्तव्यम् । अयं भावः । द्रुमादीनां शरीरे सात्त्विकभावोदयश्चैतन्यशरीरं विना न संभवति । यतोऽन्येषां विग्रहदर्शनेन पुलकाद्यभावात् ।

(२) यन्मर्त्येत्यादिश्लोकस्यार्थः ॥ स्वयोगमायाबलं कृपाबलं दर्शयता भगवता श्रीकृष्णेन यदिदं रूपं मनुष्यलीलायोग्यं गूढ़(ख)प्रकाशमयं सर्वदृष्टिगोचराहं गृहीतम् । यतः गूढ़प्रकाशाभावे दृष्टिविषयत्वाभावेन मनुष्यलीलायोग्यताभावात् । ज्ञानागोचरं त्वचैतन्यशरीरं चर्मचक्षुर्विषयीकृतमिदमेव कृपाबलम् । कीदृशम् ।

(क) भा० पु० ३स० भूषणभूषणाङ्गम् इति पा० ।
(ख) भा० पु० ३स० गूढम इति पा० ।

अतः श्रीकृष्णमोहजनकं चैतन्यविग्रहं विना न सम्भवति । तस्मात्कृष्णविग्रहश्चैतन्यनिधिरेव ।

अङ्गानि यस्य सकलेन्द्रियवृत्तिमन्ति
पश्यन्ति यान्ति कलयन्ति चिरं जगन्ति ।
आनन्दचिन्मयसमुज्ज्वलविग्रहस्य
गोविन्दमादिपुरुषं तमहं भजामीति
ब्रह्मसंहितोक्तेः ॥

नित्यावतारो भगवान्नित्यमूर्त्तिर्जगत्पतिः ।
नित्यरूपो नित्यगन्धो नित्यैश्वर्यसुखानुभूरिति
ब्रह्मवैवर्त्तोक्तेरपि ॥

न च घनश्यामविग्रहोऽपि प्राकृत एव । तत्त्यागेन तस्या धाम(क)गमनश्रवणात् । तदुक्तं शुकेन ।

यथाहरद् भुवो भारं तां तनुं विजहावजः ।
कण्टकं कण्टकेनैव द्वयं चापीशितुः सममिति (१) ॥

---

सौभगसंपत्तेः परं पदम् उत्पत्तिस्थानम् । पुनः । भूषणानां भूषणभूतान्यङ्गानि यस्मिंस्तद् भूषण(ख)भूषणाङ्गम् । पुनः । स्वस्य विस्मापनं श्रीकृष्णस्यापि विस्मयजनकम् । भगवान् सच्चिदानन्दोऽपि स्वस्वरूपं दृष्ट्वाष्टसात्त्विकभावयुक्तः प्रतिक्षणम्भवति ॥

(१) यथेत्यादिपद्यस्यार्थः ॥ यया तन्वा भुवो भार-

---

(क) भा० पु० स्क० तस्य स्वधाम इति पा० ।
(ख) भा० पु० स्क० भूषण इति पा० ।

एवमुक्त्वा दृष्टान्तेनाह ।

यथा मत्स्यादिरूपाणि धत्ते जह्याद्यथा नटः ।

भूभारः क्षपितो येन जहौ तच्च कलेवर-

मित्यादीनि बहूनि प्रमाणानीति वाच्यम् । तच्च-रित्रवैचित्र्यात् । श्लोकानामन्यार्थत्वाच्च । अर्थस्तु ।

स यावदुर्व्या भरमीश्वरेश्वरः स्वकालशक्त्या क्षपयंश्चरेद् भुवी-

त्युक्तं दशमे ब्रह्मणा । अतः कालशक्तिरूपया तन्वा भुवो भारमहरत्तां कालशक्तिरूपां तनुं जहौ । न तु घनश्यामाम् । यतोऽसुरा अपि कालांशाः ।

अन्ते त्वधर्महरमन्युवशासुराद्या

इति भागवतोक्तेः ।

अक्षरात्संजायते कालः कालाद्व्यापक उच्यते । व्यापको भगवान् रुद्र इति श्रुत्या रुद्रस्यापि कालांशत्वं ज्ञेयम् । मन्युवशा असुरास्तस्मात्तेषां कालांशत्वात्कण्टकं कण्टकेन यथा इति दृष्टान्तो योग्यः । यादवरूपां तनुं जहाविन्युक्ते तद्दृष्टान्ते देवांशानां भक्तयादवानाम् असुरतुल्यत्ववर्णनेन शास्त्र-विरोधापत्तिः । शास्त्रं तु ।

---

महरत्तां तनुमजः श्रीकृष्णो जहौ । यथैकेन कण्टकेन पदलग्नं कण्टकमुद्धृत्य तौ द्वावपि त्यजेत् तथा ॥

शय्यासनाटनालापक्रीडास्नानाशनादिषु ।
न विदुः सन्तमात्मानं वृष्णयः कृष्णचेतस इति ॥

द्वितीयश्लोकार्थस्तु । यथा । कालशक्तिरूपं कलेवरं जहौ तथा योगिनां प्राकृतदेहमोहत्यागायासुरमोहनाय च ब्राह्मणशापादरायापि यद् धृतं यादवनाशकाले मायाकपटशरीरं तदपि जहौ । तत्किं रूपम् । येनावशेषो यादवरूपो भूभारः क्षपितः । तदुक्तं भगवता (क) ।

एतदर्थोऽवतारो हि भूभारहरणाय मे ।
संरक्षणाय साधूनां कृतोऽन्येषां वधाय च ॥
अन्योऽपि धर्मरक्षार्थै देहः संभ्रियते मया ।
विरामायाप्यधर्मस्य काले प्रभवतः क्वचिदिति (१)॥

---

(१) अन्योऽपीत्यादिपद्यस्यार्थः ॥ अन्योऽपि देहः काले यादवनाशकाले । मया संभ्रियत इति वर्त्तमानक्रिया तु भविष्यार्थे । सम्भ्रियिष्यते(!) मया इत्यर्थः । अन्यथा श्लोकस्य व्यर्थत्वं स्यात् । तदा तदवतारद्वयाभावात् । भूतभविष्यकालयोरप्येकावतारनियमाभावादपि । कस्मै प्रयोजनाय । तत्राह । धर्मरक्षायै । योगिनां प्राकृतदेहमोहत्यागरूपो यो धर्मो ब्राह्मणशापादररूपश्च तद्रक्षायै । मां विना यादवानां सर्वे तद्द्वारा प्रभवतः अधर्मस्य विरामायेत्युक्तं भगवता ॥

---

(क) भा० पु० स्त० भागवते इति पा० ।

तस्माद्यादवविनाशकाले स्वचैतन्यशरीरमन्तर्धाय तत्सदृशमन्यच्छरीरं कृत्वा त्यक्तमिति भ्रमः कृतस्तेन हरिणा कृष्णेनेच्छाशरीरिणेत्युक्तेः। तस्य व्याख्या श्रीधरेण कृता। स्वशुद्धसत्त्वमयीन्निजाम्मूर्त्तिमन्तर्धाय तत्प्रतिकृत्यैव विडम्बनमात्रमेव। तदुक्तं सूतेन ॥

यदा मुकुन्दो भगवानिमां महीं
जहौ स्वतन्वा श्रवणीयसत्कथः।
तदाहरेवाप्रतिबुद्धचेतसा-
मभद्रहेतुः कलिरन्ववर्त्ततेति ॥

अस्यार्थमाह श्रीधरः। स्वतन्वा जहौ स्वतनोरेव वैकुण्ठारोहात्। अयं भावः। स्वघनश्यामतन्वा इमां महीं जहौ। न तु व्यापकमूर्त्त्या।

मया ततमिदं सर्वं जगदव्यक्तमूर्त्तिनेति
भगवदुक्तेः।

स्वतन्वा सहेमां जहावित्युक्ते त्वनर्थापत्तिः स्यात्। व्यापकरूपेण पृथिवीत्यागासंभवात्। अतस्तत्रैवास्यास्त्यागो न तु देहत्यागः। तदुक्तं च।

मदर्श्यात्मतपस्सम्भावितृप्रदर्शां मृगाणाम्।
आदायान्तरधाद्यस्तु स्वबिम्बं लोकलोचनमिति (१)॥

(१) मदर्श्येत्यादिश्लोकस्यार्थः॥ स्वबिम्बं स्वचैत-

अतः श्रीकृष्णविग्रहः सच्चिदानन्द एव । तदुक्तमुद्धवेन ।

नैवोपयन्त्यपचितिं कवयस्तवेश
ब्रह्मायुषापि कृतमृद्धमुदः स्मरन्तः ।
योऽन्तर्बहिस्तनुभृतामशुभं विधुन्व-
न्नाचार्यचैत्यवपुषा स्वगतिं व्यनक्तीति (१) ॥

ननु यदि समर्थो भगवांस्तर्हि तेन मायाकपटवपुषापि सह कथं स्वधामारोहणं न कृतम् । कस्मात् (क) त्यक्त्वैव गतः । तत्राह ।

तथाप्यशेषास्थितिसंभवाप्यये-
ष्वनन्यहेतुर्यदशेषशक्तिधृक् ।

न्यविग्रहं नेत्रा(ख)विषयमप्येतावन्तं कालमतप्ततपसामपि दर्शयित्वा तेषां लोचनमादाय यस्तद्बिम्बं चैतन्य(ग)मन्तर्हितवानिति श्रीधरोक्तेः ॥

(१) नैवेत्यादिपद्यस्यार्थः ॥ हे ईश कवयः सर्वज्ञास्तु ब्रह्मायुषापि तवोपकारस्य प्रत्युपकारं नैवोपयन्ति । कथंभूताः । तवोपकारं स्मरन्तः । तमेवोपकारमाह । यस्त्वं तनुभृतां बहिराचार्यवपुषा गुरुरूपेण त्वशुभं विधुन्वन्सन् हृदयान्तश्चैत्य(घ)वपुषा चैतन्यशरीरेण स्वगतिं व्यनक्तीत्यर्थः ॥

(क) भा० पु० स्त० मत् इत्यधि० वर्त्त० । (ख) भा० पु० स्त० नेत्रवि-षयांनिति पा० । (ग) भा० पु० स्त० विग्रह इत्यधि० वर्त्त० ।
(घ) भा० पु० स्त० चैतन्य इति पा० ।

नैच्छत्प्रणेतुं वपुरत्र शेषितं
मर्त्येन किं स्वस्थगतिं प्रदर्शयन्निति (१) ॥
तस्य सामर्थ्यन्तु परमाद्भुतं । तदेवोक्तं शुकेन ।
मर्त्येन यो गुरुसुतं यमलोकनीतं
त्वां चानयच्छरणदः परमास्त्रदग्धम् ।
जिग्येऽन्तकान्तकमपीशमसावनीशः
किं स्वावने स्वरनयन् मृगयुं स्वदेहमिति (२) ॥
लोकाभिरामां स्वतनुं धारणाध्यानमङ्गलाम् ।
योगधारणयाग्नेय्या दग्ध्वा धामाविशत्स्वकमित्युक्तेः ॥

---

(१) तथापीत्यादिश्लोकस्यार्थः ॥ यर्हि भगवान् उक्तप्रकारेणाशेषस्य जगतः स्थित्यादिषु करणादिनिरपेक्ष एव हेतुः कारणं स्वयमेव । यद्यस्मादशेषशक्तिधृक् तथापि यादवान्संहृत्य निजमायाकपटशरीरमत्रास्मिंल्लोके शेषितुं स्वलोके प्रणेतुमपि नैच्छत्तत्र हेतुः । मर्त्येन देहेन किं सुखं न किमपीति स्वस्थानामात्मनिष्ठानां योगिनां दिव्यां गतिमेव प्रकृष्टां दर्शयन् ॥

(२) मर्त्येनेत्यादिश्लोकस्यार्थः ॥ यमेन स्वलोकं प्रति नीतं गुरुसुतं यो भगवान्मर्त्येन तस्य गुरुपुत्रस्य तेनैव मर्त्यशरीरेण आनयत् आनीतवान् । यतः शरणदः शरणागतरक्षकः । त्वां च ब्रह्मास्त्रदग्धं यो रक्षितवान् योऽन्तकान्तकमप्यन्तकं रुद्रं बाणसंग्रामे जितवान् । मृगयुमपि

पुराणः पुरुषो नित्यो विगुणः सगुणोऽव्ययः ।
ब्रह्मात्मभगवच्छब्दैः शब्दितः पुरुषोत्तमः ॥२३॥

आग्नेय्या योगधारणया दग्ध्वेत्यर्थः । अदग्ध्वेत्यर्थो न वक्तव्यः । तद्विडम्बनमात्रत्वात् । यः कोऽपि श्रुतिस्मृतिनिर्णीतार्थमनादृत्य कृष्णस्य भौतिकं शरीरं वदति स श्रुतिस्मृतिभ्रष्टोऽघकिङ्करो ज्ञातव्यः । तदुक्तं बृहद्वामने ।

यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः ।
स सर्वस्माद् बहिः कार्यः श्रौतस्मार्त्तविधानतः ॥
मुखं तस्यावलोक्यापि सचैलं स्नानमाचरेदिति ॥

यतस्तस्य चाण्डालाधमस्वरूपत्वादित्यलं विस्तरेण ॥२२॥

पुनः कथंभूतो भगवान्पुराणः पुरुष आदिकारणमन्तर्यामीत्यर्थः । पुनः । नित्यः ।

नित्योऽव्यक्तो हि भगवानिति श्रुतेः ।

पुनः । विगतगुणः अगुणः(क) मायागुणातीतः । निर्गुणः केवलश्चेति श्रुतेः ।

एकस्त्वमात्मा पुरुषः पुराणः
सत्यं स्वयंज्योतिरनन्त आद्यः ।

---

सदेहं स्वः स्वर्गं योऽनयन्निन्ये । सोऽसौ श्रीकृष्णः स्वरक्षणे किमनीशोऽसमर्थः । समर्थोऽपि । सैव गतिस्तेन भगवता दर्शितेत्यर्थः ॥

---

(क) आ० पु० त्व० अगुणः इति ना० ।

नित्योऽक्षरोऽजस्रसुखो निरञ्जनः
पूर्णोऽद्वयो मुक्त उपाधितोऽमृत
इति भागवतोक्तेरपि (१)॥

(१) एकस्त्वमित्यादिपद्यस्यार्थः। त्वमेक एव श्रीकृष्ण आत्मा वेदविषयत्वात्। तदेवाहान्तर्यामिब्राह्मणे। वेत्थ तु त्वं कार्यान्तर्यामिणमित्युपक्रमः। एष ते आत्मान्तर्यामीत्युपसंहारः। एष ते आत्मेत्याद्येकविंशतिकृत्वोऽभ्यासः। अन्तर्यामित्वस्याप्राप्ततया अपूर्वता। स वै ब्रह्मविदित्यादि फलम्। तञ्चेत्त्वं याज्ञवल्क्य सूत्रमविद्वांस्तवान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते पतिष्यतीति निन्दारूपोऽर्थवादः। यस्य पृथिवी शरीरम्। यं पृथिवी न वेदेत्याद्युपपत्तिः। एवं षड्विधलिङ्गैर्यः प्रतिपादित आत्मा स त्वमेवैक इत्यर्थः। कीदृशः। आद्यः कारणम्। जन्मविकारातीतः। तत्कुतः। पुरुषः अन्तर्यामी अस्तिविकारवर्जितः। पुनः। अक्षरः अपक्षयविकाररहितः। पुनः किंविशिष्टः। पूर्णः वृद्धिविकारशून्यः। पुनः। मुक्त उपाधितः। परिणामाभाववान्। पुनः। नित्यः मरणविकारातीतः। तत्कुतः। यतः स्वयंज्योतिः। अतः सत्यः कालत्रयाबाधितः। यस्मादजस्रसुखोपेतः(क)। अद्वयोऽमृतश्च। एवं षोडशविशेषणैः सर्वपरत्वमुक्तं भवति॥

(क) सुखोतः इत्यादि० पु० अ० पा०।

पुनः कथम्भूतो राधिकावल्लभः। ब्रह्मादिभिः शब्दैः शब्दितः।

गूढं परं ब्रह्म मनुष्यलिङ्गमिति नारदोक्तेः।

तथा हि

अद्यैव त्वदृतेऽस्य किं मम न ते मायात्वमादर्शित-
मेकोऽसि प्रथमं ततो व्रजसुहृद्वत्साः समस्ता अपि।
तावन्त्येव चतुर्भुजास्तदखिलैः साकं मयोपासिता-
स्तावन्त्येव जगन्त्यभूस्तदमितं ब्रह्माद्वयं शिष्यते इति (१)॥

(१) अद्यैवेत्यादिपद्यस्यार्थः॥ त्वदृते त्वां विना अस्य विश्वस्य मायात्वं ते त्वया मम न दर्शितम्। दर्शितमेव। तत्किं मायात्वम्। तत्राह। प्रथमं तु त्वमेकः सपाणिकवलोऽसि। ततः समस्ता व्रजसुहृदो गोपकुमारा वत्साश्च। अपि शब्दाद्वेत्रवाद्योऽपि। पश्चात्ते सर्वे चतुर्भुजा आसन्। कथंभूताश्चतुर्भुजाः। मया साकमखिलैस्तत्त्वैर्मायादिभिरुपासिताः। ततः यावन्ति चतुर्भुजरूपाणि तावन्ति त्वं जगन्त्यभूः। तान्यपि न सर्वाणि समानि किन्त्वेकस्मादेकस्माद् द्विगुणद्विगुणमानानि। पुनः सर्वाणि रूपाणि संहृत्य ब्रह्मावशिष्यते। सपाणिकवलं ब्रह्म त्वमेवावशिष्टो भवसि। कीदृशं ब्रह्म। अमृतम्(क)। पुनः। अमितमित्यनेन ब्रह्मशब्देन श्रीकृष्ण एव शब्दितः॥

(क) भा० पु० स्त० अद्वयम् इति पा०।

परमात्मशब्देनापि ।

यदुवंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ।
यत्रावतीर्णो भगवान्परमात्मा नराकृतिरिति ॥

कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् ।
जगद्धिताय सोऽप्यत्र देहीवाभाति मायये-

त्यादिभ्यः परमात्मशब्देनापि कृष्णोऽनुवर्णितः ।

भगवच्छब्देन (क) ।

एते चांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् ।
इन्द्रारिव्याकुलं लोकं मृडयन्ति युगे युग इति (१) ॥

(१) एते चेत्यादिपद्यस्यार्थः ॥ एते पूर्वोक्ता मत्स्यादयस्तेषां मध्ये केचिन्मत्स्यादयस्तु पुंसः गर्भोदकशायिनो भगवतः अंशाः लीलावतारा विभवाः । केचिन्नारदादयः कला आवेशावताराः । कृष्णस्तु तुशब्दो भिन्नोपक्रमे ।

एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।
रामकृष्णाविति भुवो भगवानहरद्भर(ख)-

मित्यवतारेषु गणितोऽपि श्रीकृष्णः स्वयं भगवानवतारी । यो महदादिभिर्लोकसिसृक्षयादौ पौरुषं रूपं जगृहे । स एवेत्यर्थः । चकारः समुच्चयार्थे । कश्चिदेका-

(क) भा० पु० स्क० च इत्यधि० वर्ण० ।
(ख) भा० पु० स्क द्वार मिति पा० ।

पुनः कथम्भूतो राधिकावल्लभः । पुरुषोत्तमः अथै-वाङ्गिरसास्त्रिविधः पुरुषः । तद्यथा बाह्यात्मा । अन्तरात्मा । परमात्मा चेति श्रुतेः ।

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम

इति भगवदुक्तेरपि ॥२३॥

त्मावतारः । कश्चित्पुरुषावतारः । गुणावतारः पूर्णाव-तारो(क)ऽप्यावेशावतारश्च प्रकाशावतार एवं षड्विधा अव-तारा भवन्ति भगवतः कृष्णस्य । तत्र तत्समानाकारश-क्तिरेकात्मावतारः । स तु वासुदेवो भगवान् । समशक्ति-भिन्नाकारः पुरुषावतारः । स च क्षीरगर्भकारणोदकशा-यिरूपेणैकावतारः । सृष्टिस्थितिप्रलयकारी ब्रह्मविष्णु-शिवरूपो गुणावतारः । तत्र पूर्वोक्तरीत्या ब्रह्मरुद्रयोः कस्मिंश्चित्कल्पे आवेशावतारत्वम् । जीवत्वात् । क-स्मिंश्चिल्लीलावतारत्वम् । ईश्वरत्वात् । विष्णुस्तु स्वयं

(क) भा० पु० स्त० पूर्णावतारः इति ना० ।

भगवान्पूर्णः(क)। शक्तिभेद(ख)भिन्नाकारा लीलावतारा मत्स्यकूर्म्मवराहनृसिंहवामनरामचन्द्रबलरामादयस्तत्र तु-शब्दोऽप्यर्थे । तु रामोऽपि स्वयं भगवान् । (ग)तदुक्तं भगवता कृष्णेन ।

अन्तरङ्गस्वरूपा मे मत्स्यकूर्मादयस्त्वमी ।
सर्वात्मनायमत्रापि श्रीमद्दशरथात्मज इति ॥

अनुक्ते अपिशब्द इतिवचनेन तन्नियमाभावान्नृसिंहवामनादयोऽपि पूर्णाः । तदुक्तं च ।

सर्वे पूर्णाः शाश्वताश्च देहास्तस्य परात्मनः ।
हेयोपादेयरहिता नैव प्रकृतिजाः क्वचित् ॥
परमानन्दसन्दोहा ज्ञानमात्राश्च सर्वतः ।
सर्वे सर्वगुणैः पूर्णाः सर्वदोषविवर्जिता इति ॥

अत्र आवेशावतारं विना सर्वे पूर्णाः कृष्णरूपा एव ज्ञानकलादिशक्तिमन्तः । आवेशावताराः सनकादयः । नारदपृथुदत्तपरशुरामादयो बुद्धकल्क्यन्ता जीवाः। तत्र शुद्धाशुद्धमिश्रितभेदात् त्रिविधा आवेशावताराः ।

अनेकत्र प्रकटता रूपस्यैकस्य यैकदा ।
सर्वदा तत्स्वरूपैव स प्रकाश इतीर्यते

इति भागवतामृतोक्त्या ।

(क) अत्र भा० पु० स्त० विष्णुस्तु स्वयं भगवान् पूर्ण इति ना०।
(ख) भा० पु० स्त० शक्तिभेदेन इति पा० ।
(ग) भा० पु० स्त० अत्र विष्णुस्तु स्वयं भगवान्पूर्णः इति अधिकः

**ज्ञानी ज्ञानस्वरूपश्च विश्वात्मा विश्वभावनः ।**
**मायावी माधवो मानी मानदः कारणोत्तमः॥२४॥**

पुनः कीदृशो भगवान् । ज्ञानी ज्ञानगुणः । स सर्वज्ञ इति श्रुतेः ।

आनन्दमयोऽभ्यासादिति सूत्रोक्तेरपि ।

पुनः । ज्ञानस्वरूपः । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः ।

ज्ञानं विशुद्धं परमार्थमेक-
मनन्तरन्त्वबहिर्ब्रह्म सत्यम् ।
प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं
यद्वासुदेवं कवयो वदन्तीति ॥

भागवते भरतोक्तेः श्रुत्यर्थः सिद्धः । वासुदेवः परं ब्रह्मेति श्रुतेः । ज्ञानगुणज्ञानस्वरूपशब्दाभ्यां केवलं ज्ञानगुणवादिनां तार्किकाणां केवलं ज्ञानस्वरूपवादिनां मायावादाश्रितानां च सिद्धान्तो निरस्तः । पुनः कीदृशः । विश्वात्मा । पुनः । विश्वभावनः । पुनः किंविशिष्टः । मायावी । पुरुमायावीति श्रुतेः । पुनः । माधवः । श्रीश्च ते लक्ष्मीश्च पत्न्याविति श्रुतेः । पुनः कीदृशः । अमानी । कृष्णः पादावनेजने इति शुकोक्तेः । पुनः । मानदः ।

उवाह कृष्णो भगवाञ्छ्रीदामानं पराजित इति ।
तस्य मानं च बहुदादिति । मानमित्वा च मानद इति

'सर्वेदू विसृष्टानपि नो वनौकस-
श्चकार सख्ये बत लक्ष्मणाग्रज'

इत्यादिभ्यः । पुनः'कथंभूतः । कारणोत्तमः ।

जन्माद्यस्य यतोऽन्वयादितरतश्चार्थेष्वभिज्ञः स्वराट्
तेने ब्रह्म हृदा य आदिकवये मुह्यन्ति यत्सूरयः ।
तेजोवारिमृदां यथा विनिमयो यत्र त्रिसर्गो मृषा
धाम्ना स्वेन सदा निरस्तकुहकं सत्यं परं धीमहीति
भागवतोक्तेः (१) ॥

---

रासक्रीडायां वत्सक्रीडायां वत्सहरणे च नारदमोहने ऽपि । मिथिलादिषु प्रकाशावताराः । एवं षड्विधा अवताराः कृष्णस्यावतारीत्यर्थः ।

(१) जन्माद्यस्येत्यादिपद्यस्यार्थः । परं परमेश्वरं सविशेषं श्रीकृष्णं वय धीमहीति वैदिकप्रयोगः । ध्यायेम इत्यर्थः । न तु मायावादिनामिव निर्विशेषं चिन्मात्रम् । तत्कुतः । भेदावगमात् । परं वयमिति भेदः । ननु परशब्देन निर्विशेषं चिन्मात्रं ब्रह्म । मुक्तस्तस्मिन्नपि ब्रह्मसम्प्रदानामनिवृत्तिपर्यन्ता फलव्याप्तिनिषेधेन वृत्तिव्याप्तिः स्वीकृता शास्त्रकृद्भिरतो भेदादिति चेन्न । तत्प्रति-पाद्यपरदेवतानुस्मरणलक्षणमङ्गलमाचरतीति श्रीधरोक्तेः । परदेवताशब्देन सविशेषः श्रीकृष्ण एव ज्ञायते । न तु निर्विशेषस्तस्य पालनपूरणयोरिति धात्वर्थविरोधादित्यर्थः ।

ननु भागवतप्रतिपाद्यस्त्वाश्रय एव नवलक्षणलक्षितो। न तु श्रीकृष्ण इति चेत्सत्यम्। स एवाश्रयः श्रीकृष्ण एव।

विश्वसर्गविसर्गादिनवलक्षणलक्षितम्।
श्रीकृष्णाख्यं परं धाम जगद्धाम नमाम तदिति
तस्यैवोक्तेः॥

नमः कृष्णाय नित्यैकसच्चिदानन्दरूपिणे
जगत्सर्गविसर्गादिनानिरोऽनन्तशक्तये इति
हरिलीलामृते मधुसूदनोक्तेरपि॥

धीमहीति बहुवचनान्तं क्रियापदं बहुजीवाभिप्रायकम्। बहुजीवप्रतिपादनेनैकजीवमतं निरस्तम्। एकात्मवादे देवदत्तमानुभूतोऽर्थो विष्णुदत्तेन स्मर्यते। सौभरेर्बहुरूपत्वात्। पुनः गुरुशिष्यव्यवस्थापि न संभवति। पुनः सर्वमुक्तिप्रसङ्गोऽनिर्मोक्षप्रसङ्गश्च। तस्मिन्सति शुको मुक्तो वा वामदेव इति वेदवाक्य विरोधापत्तिः। तस्माज्जीवा अनन्ताः प्रतिदेह भिन्नाश्च। एवं बहुजीवप्रतिपादनव्याजेन स्वसंप्रदायस्यानामेकभजनीयत्वात्तस्य शुद्धिरपि दर्शिता। संप्रदायशुद्ध्यभावे तन्मतस्य प्रमाणाभावात्। वयं गुरुशिष्यादयः सर्वे विषयिमुमुक्षुमुक्ताः परं धीमहीत्यर्थः। कथंभूतं परम्। सत्यं कालत्रयाबाधितम्। सत्यमित्युपलक्षणम्। सत्यं ज्ञानमनन्तं ब्रह्मेत्यर्थः॥

सत्यव्रतं सत्यपरं त्रिसत्यं
सत्यस्य योनिं निहितं च सत्ये ।
सत्यस्य सत्यं ऋतसत्यनेत्रं
सत्यात्मकं त्वां शरणं प्रपन्ना
इति भागवते देवोक्तेः ॥

पुनः कीदृशम् । धाम्ना स्वेन सदा निरस्तकुहकम् । स्वेन धाम्ना स्वस्वरूपप्रकाशेन सदैव निरस्तं मायालक्षणं कुहकं कपटं ध्वान्तरूपं यस्मात् । सदेतिपदेनोदयाभावत्वमेवोक्तं भवति । यद्वा स्वेन धाम्ना अवताररूपेण स्वध्याननिष्ठानां भक्तानां निरस्तं कुहकं येन स तम् । तं कम् । तत्राह । यत्र त्रिसर्गो मृषा । यत्र यस्मिन्परे त्रयाणां मायागुणानां सत्त्वरजस्तमसां सर्गो देवेन्द्रियभूतरूपो मृषा न सत्य इत्यर्थः । अथ भावः । भगवद्रूपे न मायाकार्याणि माया वा । सच्चिदानन्दविग्रहत्वात् । न तत्र सूर्यो भाति न चन्द्रतारकमित्यादि श्रुतेः । किंतु तत्सम्बन्धी त्वमृषा सत्यः । मायाया नित्यत्वात् । ननु केचित्तु तस्मिंस्त्रिसर्गं सत्यमेवाहुः । ब्रह्मण एकदेशे मायानिवासत्वादिति चेत्तत्राह । तेजोवारिमृदां यथा विनिमयः तेजआदीनां विनिमयो व्यत्ययः । अन्यस्मिन्नन्यावभासः । तेजसि रविकरे मृगाणां बालानां जलबुद्धिः । वारिणि काचबुद्धिः । मृदि मृद्विकारे काचादावुदकमतिः । तथा मन्दानां तस्मिन्परे त्रिसर्गबुद्धिरित्यर्थः । तस्य प-

रथय लक्षणमाह । अर्थेषु कार्येषु चराचरेषु अन्वयादित-रतः अन्वयव्यतिरेकाभ्यामुपादाननिमित्तकारणाभ्यां प्र-कृतिपुरुषाभ्यां हेतुभ्यामस्य विश्वस्य यज्जन्मादि तद्यतः परमेश्वरात् । न तु केवलं प्रकृतिपुरुषाभ्याम् । तयोस्त-त्सत्ताकत्वाद्विश्वकारणत्वाच्च ।

कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षयेति श्रुतेः ॥
प्रकृतिः पुरुषोऽव्यक्तमात्मा भूतेन्द्रियाशयाः ।
शक्नुवन्त्यस्य सर्गादौ न विना यदनुग्रहादिति
भागवतोक्तेरपि ।

अत्र पक्षो विश्वो धर्मी । जन्मादि साध्यो धर्मः । अन्वयव्यतिरेकौ हेतू । ननु कार्येषु तत्सद्रूपेणान्वयाच्चैका-रादकार्येभ्यः खपुष्पादिभ्यस्तद्व्यतिरेकादित्युक्ते विवर्त्तोपा-दानकारणप्रतिपादनेन निमित्तकारणवादनिषेधादाश्रया-सिद्धहेत्वाभासलक्षणं दूषणं स्यात् । साध्यव्यतिरेकसंबन्धा-भावाश्रयस्य खपुष्पस्यासिद्धेः । तत्सत्ताकोऽतात्त्विकोऽन्य-थाभावो विवर्त्त इति लक्षणात् । नन्वन्वयशब्देनानुवृत्तिः । अनुवृत्तत्वाद्ब्रह्म कारणम् । मृत्सुवर्णादिवत् । इतरशब्देन व्यावृत्तिः । व्यावृत्तत्वाद्विश्वं कार्यम् । घटकुण्डलादिवदि-त्युक्तेः स्वरूपपरिणामाद्विकारप्रसङ्गः । रूपभङ्गप्रसङ्गत्वात् । पूर्वसिद्धस्य तात्त्विकोऽन्यथाभावः स्वरूपपरिणामः । यथा दुग्धस्य दधि । तस्मादुक्तार्थ एव शिष्टसंमतोऽ श्रीधरे-

णार्थद्वयपूर्वपक्षेण तृतीयोऽर्थः प्रतिपादितः । यतो जग-त्कारणौ प्रकृतिपुरुषौ । तयोरपि भगवान् कारणम् । अतः कारणोत्तमः । तं धीमहीत्यर्थः । तं कम् । तत्राह । यः अभिज्ञः ज्ञानवान् । तम् । न तु प्रधानं ध्येयम् । पुनस्तं कम् । यः स्वराट् यः (क) स्वनैव राजत इति स्वराट् । तम् । न तु जीवो ध्येयः । पुनस्तं कम् । यः आदिकवये चतुराननाय ब्रह्म वेदं हृदा मनसैव तेने विस्तारितवान् । तस्मै वेदांश्च प्राहिणोदिति श्रुतेः ।

प्रचोदिता येन पुरा सरस्वती
वितन्वताजस्य सतीं स्मृतिं हृदि ।
स्वलक्षणा प्रादुरभूत्किलास्यतः
स मे ऋषीणामृषभः प्रसीदतामित्युक्तेः ॥

अस्य प्रचोदितेत्यादिपद्यस्यार्थः ॥ ऋषीणां वेदवक्तॄणां मध्ये ऋषभः । वेदजनकत्वात् । स भगवान् प्रसीदताम् । स कस्तत्राह । येन नोदिता सरस्वती गायत्रीरूपा अज-स्य ब्रह्मण आस्यतः मुखात्प्रादुरभूत । कीदृशी । स्वलक्षणा स्वस्या लक्षणैः स्वाभि(ख)र्व्याहृतिभिः सहितेत्यर्थः । कीदृशेन येन । अजस्य हृदि सतीं स्मृतिं वितन्वता । कीदृशं ब्रह्म । यद्यस्मिन् वेदाख्ये ब्रह्मणि सूरयोऽपि ब्रह्मादयो मुह्यन्ति । देवतान्तरमन्त्रव्याकुल्यात् । परोक्षवादाच्च ।

(क) भा० पु० स्क० २ इति पा० । (ख) भा० पु० स्क० मित्युक्ति इति पा० ॥

शब्दब्रह्मणि दुष्पारे चरन्तमुरुविस्तरे ।
मन्त्रलिङ्गैर्व्यवच्छिन्नं भजन्तो न विदुः परमित्युक्तेः ।
बर्हिष्मन्नेतदध्यात्मं पारोक्ष्येण प्रदर्शितम् ।
यत्परोक्षप्रियो देवो भगवान्विश्वभावन
इति नारदोक्तेः ॥

अर्थावबोधं(क) ब्रह्म यस्तेने तं धीमहीत्यलं विस्तरेण । जन्माद्यस्येत्यनेन श्लोकेन वेदान्ताद्यानां चतुर्णां सूत्राणामर्थोऽपि प्रयुक्तः । सत्यं परं धीमहीत्यनेनाथातो ब्रह्मजिज्ञासेत्यस्य सूत्रस्यार्थः प्रयुक्तः । जन्माद्यस्य यत इत्यनेन जन्माद्यस्य यत इत्यस्य सूत्रस्य। अर्थेष्वन्वयादित्यनेन समन्वया दित्यस्य। तेने ब्रह्म हृदा य आदिकवये इत्यनेन शास्त्रयोनित्वादित्यस्य सूत्रस्यार्थ उक्तः। एवं सर्वेषां वेदान्तसूत्राणामर्थो भागवतश्लोकैर्ज्ञातव्यः । यतः श्रीमद्भागवतन्तु वेदान्तभाष्यमाहुर्मुनयः ।

भाष्योऽयं ब्रह्मसूत्राणां वेदार्थः परिबृंहित
इति गारुडोक्तेः ॥

ब्रह्मसूत्राणि वेदान्तसूत्राणि व्याससूत्राणि शारीरकसूत्राणीति पर्यायभेदाः । प्रथमश्लोकस्यान्वयकाठिन्यं तु नामविभक्तिवर्णनप्रसङ्गात् श्रीभागवतस्यानादित्वप्रतिपादनाय श्लोकादौ न कोऽपि कर्त्ता उक्तः ॥

(क) भा० पु० स्क० अर्थावबोधमिति पा० ।

**स्वतन्त्रो विनताधीनो राधिकावल्लभो हरिः ॥**
**रसो रसाश्रयोऽधीशः सर्वदोषविवर्जितः ॥२५॥**

तज्जलानिति श्रुतेरपि (१)। कारणकारणाधिप इति।

ईश्वरः परमः कृष्णः सच्चिदानन्दविग्रहः।
अनादिरादिर्गोविन्दः सर्वकारणकारणमिति
संहितोक्तेः॥

वेदान्तेऽपि जन्माद्यस्य यत इति ॥२४॥

पुनः कथंभूतो राधिकावल्लभः। स्वतन्त्रः।

स कारणं कारणकारणाधिपो
न चास्य कश्चिज्जनिता न चाधिप इति

श्रुतेः। पुनः। विनताधीनः। विनतानां प्रणतानामधीनः।

अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज।
साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रिय
इति श्रीभगवदुक्तेः (२)॥

(१) तज्जलानिति श्रुत्या अर्थः॥ तस्माज्जातन्तज्जन्तस्मिंल्लीयत इति तल्लन्तेनानिति प्राणिति चेष्टत इति वदन् इति तज्जलान्॥

(२) अहम्भक्तेत्यादिपद्यस्यार्थः॥ हे द्विजेत्यनादरे संबोधनम्। अयं भावः। विद्याध्ययनतात्पर्याभावेन भक्तापराधात्त्वं विप्रोऽसि। मे भक्ताधीनत्वमज्ञात्वा मल्लोकागमनार्थं न प्राप्तवानसि। केवलं द्विजोऽसीत्यर्थः।

पुनः किंविशिष्टः । रसः रसरूपः । तस्माद्वा एतस्माद् विज्ञानमयादन्योऽन्तरात्मा आनन्दमयस्तेनैव पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधतामन्वयं पुरुषविधस्तस्य प्रियमेव शिरो मोदो दक्षिणः पक्षः। प्रमोद उत्तरः पक्षः। आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठेति । रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवतीति श्रुतेः । पुनः । रसाश्रयः दशरसाश्रयः ।

---

अहं तु भक्तपराधीनः मद्भक्ता एव परा उत्कृष्टाः सेवनीया येषां ते भक्तपरास्तेषामाधीनस्तव रक्षणे न समर्थः। तेषामादेशाभावात् । ननु मम रक्षणे स्वनाम्नो वैकुण्ठस्य माहात्म्यरक्षणरूपो लाभः स्यात्तस्मात्सार्वभौमाखिलानां खण्डमण्डलेश्वराणामिव स्वतन्त्रो भूत्वा मे रक्षणं कुर्विति चेत्तत्राह । कीदृशोऽहम् । अस्वतन्त्र इव । तदनुरागे आत्मविक्रयित्वात् । ननु ततः पलायनं कृत्वा स्वाधीनः सन् मे रक्षणं कुर्विति चेत्तत्राह । साधुभिर्भक्तैर्ग्रस्तहृदयः । देहादिभिः परोपकारप्रियैर्मद्भक्तैः साधुभिर्ग्रस्तं हृदयं यस्य सोऽहम् । बन्धनच्छेदनेऽप्यसमर्थः । बहिर्बन्धनाभावात् । ननु त्वमपि दुःखग्रस्तोऽसि। पराधीनत्वाद् बन्धनदुःखाच्चेति चेत्तत्राह । कीदृशोऽहम् । भक्तजनप्रियः । भक्तजना मे बन्धनोपायविज्ञाः प्रिया यस्य सः । तस्माद् बन्धनाभावे तु दुःखानुभवः स्यात् । बन्धने तु परमानन्दः । स्वतन्त्रस-

मल्लानामशनिर्नृणां नरवरः स्त्रीणां स्मरो मूर्तिमान्
गोपीनां स्वजनोऽसतां क्षितिभुजां शास्ता स्वपित्रोः शिशुः।
मृत्युर्भोजपतेर्विराडविदुषां तत्त्वं परं योगिनां
वृष्णीनां परदेवतेति विदितो रङ्गङ्गतः साग्रज
इति भागवतोक्तेः (१) ॥

नात्। मम तु ते दया कुत्र स्थिता। तेन हृदा सह ग्रस्तेति भावः ॥

(१) मल्लानामित्यादि पद्यस्यार्थः ॥ एकोऽपि परमानन्दरसो व्यापकः श्रीकृष्णो जनानामानाभावेनानारूपान्तराभावेऽपि नानाविधो जनैर्विदितः। सर्वरसाश्रयत्वात्। तदेवाह। रामेण सह रङ्गङ्गतो नन्दनन्दनः श्रीकृष्णः स्त्रीणां संबन्धी मूर्त्तिमान्स्मरः शृङ्गाररसस्ताभिर्विदितोज्ञातः। गोपानां श्रीदामादीनां स्वजनो मित्रोत्तमः मूर्त्तिमान्हास्यरसः। पित्रोर्वसुदेवनन्दयोः। पिता च पिता च पितरौ। तयोः पित्रोरित्येकशेषः। न तु मात्रेति स्वरूपेणेति भावः। शिशुर्वात्सल्यात्मकः करुणरसः। असतां कृष्णविमुखानां राज्ञां शास्ता साक्षाद्वीररसः। मल्लानाञ्चाणूरादीनामशनिर्वज्रो रौद्ररसः। नृणां नरवरः। अयमप्यद्भुतात्मकउत्साहरूपो वीररसः। भोजपतेः कंसस्य सम्बन्धी। तेन मृत्युर्भयानकरसो विदितः। अविदुषां मीमांसकानां विराड् बीभत्सरसः। योगिनां यतीनां परन्तत्त्वं परब्रह्माख्यं प्रथमस्कन्धोक्तं शान्तरसः। वृष्णीनामुद्धवादीनां दा-

न च परमानन्दरसस्तु सर्वव्यापी । सर्वदेशित्वात् । समः । परब्रह्मत्वात् । अगोचरः । करणाविषयत्वात् । कथम् कृष्णः किशोराकृतिः परिच्छिन्न एकदेशी विषमो रस इति वाच्यम् । स एव सर्वविशेषणविशिष्टः श्रुतिस्मृतिसम्मतात् । यतस्तस्यापरिच्छिन्नत्वमाह शुकः ।

सानां परदेवता परमेश्वरः भक्तिरसः । एकस्मिन्नपि कृष्णे नानारसत्वदर्शनादस्माभिः स एवाद्भुतरसो विदित इति भावः । माधुर्यै परमैश्वर्यदर्शनात् । अतोऽद्भुतरसस्तु नन्दनन्दन एव पूर्णतां प्राप्तो मृत्तिकाभक्षणे उदरबन्धने च तस्मिंस्तद्दर्शनात् । सर्वशक्तिप्रादुर्भावाच्च । सर्वेऽवताराः सर्वशक्त्याश्रया अपि । सर्वशक्तीनां साक्षात्प्रादुर्भावस्तु तस्मिन्नेव । यतस्तद्रूपे यशोदया गर्भोदशायिनो रूपं दृष्टम् । अक्रूरेण क्षीरोदशायिनो विग्रहः । अर्जुनेन आदिनारायणस्य । ब्रह्मणा कारणार्णवशायिनो दृष्टो वत्सहरणे द्वारकायां च । तदुक्तं पाद्मे ।

एष ब्रह्माणमागत्येत्युपक्रम्य पठ्यते ।
अथ स्मृत्वा मुकुन्देन द्वारवत्यां द्रुत तदा ॥
स्मृता ब्रह्माण्डकोटिभ्यो लोकपालाः समागताः ।
अष्टवक्त्राश्चतुःषष्टिवक्त्राः शतमुखास्तथा ।
सहस्रवक्त्रा लक्षास्याः कोटिवक्त्रा विरञ्चयः ।
रुद्राश्च विंशतिमुखास्तथा पञ्चदशाननाः

न चान्तर्न बहिर्यस्य न पूर्वं नापि चापरम् ।
पूर्वापरं बहिश्चान्तर्जगतो यो जगच्च यः इति (१) ॥

एवं सच्चिदानन्दविग्रहस्य श्रीकृष्णस्यापरिच्छिन्नत्वमुक्त्वा तदनुभवमाह ।

यदासीत्तदपि न्यूनं तेनान्यदपि सन्दधौ(क) ।
तदपि द्व्यङ्गुलं न्यूनं यद्यदादत्त बन्धनम् ॥

शतवक्त्राः सहस्राक्षा लक्षबाहुशिरोभृत-

इत्यादिभ्योऽद्भुतः । गोलोकनाथे श्रीकृष्णे प्रकटैश्वर्यत्वाद्भुताभावान्न तस्य पूर्णत्वम् । नावतारान्तरेऽपि । यदवतारान्तरेऽपि भागवतास्तत्त्व वर्णयन्ति कृष्णाभेदाभिप्रायेणैव । यथा विकुण्ठायाः पुत्रस्य श्रीवैकुण्ठस्य भगवतो वक्षःस्थले भृगुपदाङ्किते सर्वावताराणां वक्षःस्थलं तदङ्कितमुपवर्णितन्तथात्रापि । अलं विस्तरेण ॥

(१) न चान्तरित्यादिश्लोकस्यार्थः ॥ यस्य श्रीकृष्णस्य नान्तर्न बहिश्च । अनावृतत्वात् अपरिच्छिन्नत्वाच्च । न पूर्वम् । नापि चापरम् । अनाद्यनन्तत्वात् । यः पूर्वापरं चान्तर्बहिरादिः सः । जगतो जडत्वात् । मायाकार्यत्वादपि । कार्यत्वाच्च । चकाराच्छ्रीकृष्णो जगद्भिन्नोऽपि यो जगदपि । जगत्तु न तद्भिन्नम् । स तु भिन्न इत्यर्थः ॥

(क) श्री० पु० स्त० सन्दधे इति पा० ।

स्वमातुः स्विन्नगात्राया विस्रस्तकवरस्रजः ।
दृष्ट्वा परिश्रमं कृष्णः कृपयासीत्स्वबन्धने इति (१) ॥

कृपयेत्यनेन नित्यापरिच्छिन्नस्य किशोराकृतेः विग्रहस्य तत्कृपयैव परिच्छिन्नानुभवः । यतस्तद्विग्रहस्य द्विरूपत्वं नित्यम् । तदेवाह महावाराहे ।

य एव विग्रहो व्यापी परिच्छिन्नः स एव हि ।
एकस्यैवैकदैवास्य द्विरूपत्वं विराजते ॥
देहदेहिविभागोऽयं(क) नेश्वरे विद्यते क्वचिदिति (२)॥

(१) यदासीदित्यादिपद्यद्वयस्यार्थः ॥ तदपि दाम न्यूनमासीत्तेनान्यदपि सन्दधे । तदपि द्व्यङ्गुलं न्यूनमेवेत्यनेन विग्रहपरिच्छिन्नवादिनां मतमपि निरस्तम् । एवं बन्धनाग्रहे स्वमातुः परिश्रमं दृष्ट्वा कृपया स्वबन्धने भगवानासीत् । कथंभूतायाः । स्विन्नगात्रायाः । पुनः । विस्रस्तकबरस्रज इत्यनेनापि द्व्यङ्गुलन्यूनस्यापि कारणे भक्तश्रमनिजानुग्रहे उक्ते भवतः ॥

(२) य एवेत्यादिश्लोकद्वयस्यार्थः ॥ यः कृष्णविग्रहो व्यापी अपरिच्छिन्नः स एव परिच्छिन्नः किशोराकृतिः । देहदेहिविभेदाभावात् । यत एकस्यैव कृष्णविग्रहस्य एकदैकस्मिन्काले द्विरूपत्वं परिच्छिन्नापरिच्छिन्नत्वं विराजते । बन्धनाबन्धनाभ्यां कृपागोचरत्वञ्च ।

(क) आ० पु० न० अत्र इति पा० ।

तत्प्रादुर्भावे नु सर्वेषु तत्कृपा भवत्येवेति सुमतं ज्ञातव्यम् । एवं तदपरिच्छिन्नत्वमुक्त्वा सर्वदेशीयत्वमाह शुकः ।

इत्याचरन्तं सद्धर्मान्पावनान्गृहमेधिनाम् ।
तमेव सर्वगेहेषु सन्तमेकं ददर्श ह इति (१) ॥

एवं तस्य सर्वदेशीयत्वमुक्त्वा समत्वमाह कुन्तीवाक्येन ।

नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः ।
तामृते परमात्मानं कः पश्येतामितं प्रभु-
मिति पूर्वोक्तश्रुतेः ॥

(१) इत्याचरन्तमित्यादिश्लोकस्यार्थः ॥ तमेव श्रीरुक्मिणीमन्दिरे स्थितमेकं श्रीकृष्णं सर्वगेहे सर्वासां पत्नीनां गृहेष्वन्तर्वर्त्त(क)मानं तत्रापि पूर्वोक्तप्रकारेण गृहमेधिनां सद्धर्मानाचरन्तं नानाकर्मयुक्तं ददर्श ह । एकमिति । यावत्यस्तत्पत्न्यस्तावद्रूपधर्मेकमपीत्यनेन गीतायां यदुक्तं भगवता । पश्य मे योगमैश्वरम् । तदैश्वर्ययोगस्त्वयमेव य एकोऽपि सर्वगेहे नानाकर्मयुक्तो नारदेन दृष्टः । यथा वनभोजने सर्वगोपकुमाराणां मण्डलाकारेण स्थितानामभिमुखो जातो भगवान् । तदुक्तम् ।

(क) भा० पु० स्त० सन्त वर्त० इति पा० ।

न वेद कश्चिद् भगवंश्चिकीर्षितं
तवेहमानस्य नृणां विडम्बनम् ।
न यस्य कश्चिद् दयितोऽस्ति कर्हिचिद्
द्वेष्यश्च यस्मिन्विषमा मतिर्नृणामिति (१)॥

तदेवाहाक्रूरोऽपि ।

न तस्य कश्चिद् दयितः सुहृत्तमो
न चाप्रियो द्वेष्य उपेक्ष्य एव वा ।

कृष्णस्य विष्वक् पुरुराजिमण्डलै
रभ्याननाः फुल्लदृशो व्रजार्भकाः ।
सहोपविष्टा विपिने विरेजु-
श्छदा यथाम्भोरुहकर्णिकाया इति ॥

(१) न वेदेत्यादिश्लोकस्यार्थः ॥ हे भगवन् अचिन्त्यैश्वर्यगुण नृणां विडम्बनं मनुष्यचरित्रं समीहमानस्य तव चिकीर्षितं कश्चिदपि न वेद । कस्य मम तत्राह । यस्य तव कर्हिचित्कश्चिदपि दयितः प्रियो नास्ति । न द्वेष्यश्चापि । तथापि भक्ताभक्तेभ्यस्तत्र लालनताडनदानाभ्यां यस्मिंस्त्वयि नृणां विषमा मतिर्भवति । अयं भावः । यथा भिषगुत्तमे गदनिवर्त्तके तत्कटुमधुरौषधदानाभ्यां मूर्खाणां विषमा मतिः स्यात्तस्यामयविनाशनिदानविदस्तु नौषधे कटुमधुरे दृष्टिः । किन्तु रोगनिवृत्तावेव तथा तवापि न ताडनलालनेषु दृष्टिः । किंतु तेषां संसारनिवृत्तावेवातो भगवान्समः ॥

तथापि भक्तान् भजते यथा तथा
सुरद्रुमो यद्वदुपाश्रितोऽर्थद इति (१) ॥

तदेवस्वसमत्वमाह स्वयं भगवान् ।

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहमिति(२)॥

एवं श्रुतिस्मृतिप्रतिपादितो रसः श्रीकृष्ण एव । नन्वेतादृशस्य परमेश्वरस्य प्रादुर्भावे किं प्रयोजनमिति शङ्कायां तदेवमाह शाण्डिल्यसूत्रेण ।

मुख्यं हि तस्य कारुण्यमिति (३) ॥

(१) न तस्येत्यादिश्लोकस्यार्थः ॥ तस्य श्रीकृष्णस्य न कदापि कुत्रापि दयिताद्यिताद्यः । तथापि यथा भक्तास्तं भगवन्तं भजन्ति तथा तानपि सोऽपि भजते । यद्वदुपाश्रितः कल्पवृक्षोऽर्थदो भवति । अतो न कल्पवृक्षे वैषम्यम् । किन्तु तदनुपासकेषु । तथा भगवति न तत्(क)। किन्तु विमुखे तदस्ति ॥

(२) समोऽहमित्यादिश्लोकस्यार्थः ॥ सर्वेषु भूतेषु समोऽहम् । द्वेष्यप्रियाभावात् । मे सर्वपालनशक्तिदर्शनाच्च । तथापि ये भक्ता मां भजन्ति तानहमपि भजामि । ते मयि वर्त्तन्ते तेष्वहमपीत्यर्थः ।

(३) मुख्यमित्यादिशाण्डिल्यसूत्रस्यार्थः ॥ भगवतः

(क) आ० पु० स० नेतरत् इति पा० ।

(क)तदेवाह नारदः ।

जीवस्य यः संसरतो विमोक्षणं
न जानतोऽनर्थवहाच्छरीरतः ।
लीलावतारैः स्वयशःप्रदीपकं
प्रज्वालयत्त्वा तमहं प्रपद्ये इति (१) ॥

तदेव द्रढयति शुकोऽपि ।

नृणां निःश्रेयसार्थाय व्यक्तिर्भगवतो नृप ।
अव्ययस्याप्रमेयस्य निर्गुणस्य गुणात्मन इति (२) ॥

---

प्रादुर्भावस्य भूभारहरणादीनि स्थूलदृष्ट्या नानाकारणानि मुनयो वदन्ति । मुख्यं तु तस्य कारुण्यमेव कारणम् । यतस्तदल्पकमार्थे भ्रूभङ्गेनानेकब्रह्माण्डोत्पत्तिपालनप्रलयकृतस्तस्य प्रादुर्भावासंभवात् ॥

(१) जीवस्येत्यादिश्लोकस्यार्थः ॥ तं त्वा त्वां श्रीकृष्णमहं प्रपद्ये शरणं व्रजे । तं कम् इत्याह । यस्त्वमविद्यान्धस्य जीवस्याविद्यातमोनिवृत्तये लीलावतारैर्मत्स्यादिभिः स्वयशःप्रदीपकं प्रज्वालयत् प्रदीपितवान् । कथंभूतस्य । संसरतः(ख) संसारिणः अतोऽनर्थवहाच्छरीरात्स्वदेहाद्विमोक्षणं विमोक्षणोपायमजानतः ॥

(२) नृणामित्यादिश्लोकस्यार्थः ॥ हे नृप श्रीकृष्णस्य व्यक्तिः एवम्भूताभिव्यक्तिः चैतन्यविग्रहेण प्राकट्य

---

(क) श्रा० पु० स्त० अनु० इत्यभि० वर्त्त० ।

(ख) श्रा० पु० स्त० संसरतः इति ना० ।

नन्वेवम्भूतस्तस्य माहात्म्यं सर्वे मुनयो विदुः किम्। नेत्याह नारदवाक्येन।

एवं(क) वै भगवान्साक्षात्प्रधानपुरुषेश्वरः।
योगेश्वरैर्विमृग्याङ्घ्रिर्लोको वै मन्यते नरमिति ॥

तदेवाह भगवानपि।

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरमिति ॥

तर्हि तत्प्रभावं को वेदेति शङ्कायां भीष्मवाक्येनाह।

अस्यानुभावं भगवान्वेद गुह्यतमं शिवः।
देवर्षिर्नारदः साक्षाद् भगवान्कपिलो नृपेति (१) ॥

केवलं नृणां निःश्रेयसाय मोक्षादिमङ्गलाय। कीदृशस्य। अप्रमेयस्य प्रमाणातीतस्य। यतो वाचो निवर्त्तन्ते अप्राप्य मनसा सहेति श्रुतेः। पुनः किंविशिष्टस्य। निर्गुणस्य मायागुणातीतस्य। सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतेः। पुनः। अव्ययस्येत्यनेन मुख्यरूपेणाविभागो हि युक्तः। सदैकरसत्वात्। पुनः कथंभूतस्य। गुणात्मनः आनन्दादिगुणाश्रयस्य।
आनन्दम्ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति(ख) श्रुतेः।

(१) अस्यानुभावमित्यादिश्लोकस्यार्थः ॥ हे नृप युधिष्ठिर अस्य तवोपश्रियतस्य श्रीकृष्णस्य प्रभावं भग-

(क) आ० पु० स्त० एष इति पा०।
(ख) आ० पु० स्त० कथमश्चनेति इति पा०।

नित्योऽणुश्चेतनो जीवो विज्वरादिगुणोऽव्ययः ।
कृष्णांशो हि भयातीतोऽक्षरो ज्ञानगुणाश्रयः॥२६॥

अतः शिवादिभी रसत्वेन भगवान् ज्ञातः । पुनः कथम्भूतो राधिकावल्लभः । अधीशः । सर्वाध्यक्ष इति श्रुतेः । पुनः सर्वदोषविवर्जितः । दोषास्तु । विष्णुयामले ।

मोहस्तन्द्रा भ्रमो रूक्षरसता काम उल्वणः (क) ।
लोलता मदमात्सर्ये हिंसा खेदपरिश्रमौ ॥
असत्यं क्रोध आकाङ्क्षा आशङ्का विश्वविभ्रमः ।
विषमत्वं परापेक्षा दोषा अष्टादशोदिता इति

तैर्विवर्जितः । तदुक्तं वैष्णवतन्त्रे ।

अष्टादशमहादोषै रहिता भगवत्तनुः ।
सर्वैश्वर्यमयी सत्यविज्ञानानन्दरूपिणीति ॥२५॥

एवं परमेश्वरविशेषणैः परमेश्वरस्वरूपमुक्त्वा जीवविशेषणैस्तद्रूपमाह द्वाभ्याम् । नित्य इति । जीवस्तु चेतनो ज्ञावान् शिवो वद । कीदृशम् । गुह्यतमं वदे गुह्यम् । परोक्षवादात् । परोक्षत्वं तु ।

आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यं च ।
हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन्निति॥

अस्यार्थः । आकाशमार्गे रजसोऽभावात्सुवर्णमयस्य

(क) रूक्षरसता कामश्च उल्वणः इत्यादि० पु० स्त० पा० ।

नस्वरूपः । न देहादिरूपो जडस्तस्माद् देवमनुष्यादिरूपचतुर्विधशरीरत्वं तस्य नास्ति । ममेदं शरीरमिति ममत्वास्पदत्वात् । न च राहोः शिर इतिवदौपचारिकभेदान्न तात्त्विकस्तयोर्भेद इति वाच्यम् । जातमात्रस्तन्यप्रवृत्तेर्जन्मान्तरीयसंस्काराश्रयत्वेन देहातिरिक्तात्मसिद्धेः । न च देहाद् भिन्नत्वेनात्मदर्शनाभावात्स एवात्मा । यतः पञ्चभूतसंयोगित्वं चेतनत्वम् । तद्वियोगित्वं जडत्वम् । तस्मादहन्तास्पदमेव शरीरम् ।

देहोऽपि ममताभाक् चेत्तर्ह्यसौ नात्मवत्प्रियः ।
यज्जीर्यत्यपि देहेऽस्मिञ्जीविताशा बलीयसीत्युक्तेः(१)॥

या बलीयसी जीविताशा सा आत्मगता (क)। तस्माद्

रथस्य प्रकाशकत्वात्कृष्णत्वाभावादपि रथस्य कृष्णेन रजसेति विशेषणयोरसंभवात् । आसमन्तात् कृष्णेन रञ्जकेन निमित्तेन प्रेरकेणान्तर्यामिणा सविता देवो यात्येवं परोक्षवादिनो वेदास्तस्मात्तेषु गुप्तं कृष्णप्रभावं नारदोऽपि साक्षाद्वेद । न तु शब्दानुमानाभ्याम् । भगवान्कपिलोऽपि । [illegible] तस्य माहात्म्यम् ॥

(१) देहोऽपीत्यादिश्लोकस्यार्थः ॥ अहन्तास्पदोऽयं देहः अपि निश्चयेन चेन्ममताभाक् ममतास्पदः तर्हि आत्मवत् प्रियो न भवेत् । स तु तद्वत्प्रिय एव । यद्यतो जीर्यति आसन्नमरणोऽपि दुःखग्रस्ते देहे या जीविताशा सा बलीयसी आत्मगता ॥

(क) श्री० पु० स्त० या इत्यारभ्य गता इति पर्यं टिप्पणमित्यासीत् ।

देह एवात्मा । देहनाश एव मोक्षः । यथेष्टाचरणमेव स्वधर्मः । शुभाशुभमिश्रितकर्मणां कल्पितत्वाल्लोकान्तरस्याप्यभावः । प्रत्यक्षमेव प्रमाणमिति वाच्यम् । व्युषितात्मजमरणश्रवणशोकेन भयश्रवणपलायनेन च शब्दज्ञानप्रामाण्यात् । शब्दस्तु ।

विलक्षणः स्थूलसूक्ष्माद् देहादात्मेक्षिता स्वदृक् ।
यथाग्निर्दारुणो दाह्याद् दाहकोऽन्यः प्रकाशक इति ॥

सुखदुःखादिवैचित्र्यात्कर्मणामपि सत्त्वम् । प्रेतादिश्रवणदर्शनाल्लोकान्तरमप्यस्त्येव । तस्माद् देहादात्मा भिन्नो विलक्षणश्च । तदन्वयाद् देहस्यापि चेतनत्वम् । न तु भूतसंयोगित्वात् । सर्वतत्त्वानां संयोगेऽपि नोदतिष्ठत्ततो विराडित्युक्तत्वात् । तथेन्द्रियप्राणमनोविज्ञानेभ्योऽपि भिन्नो विलक्षणश्च । चक्षुरादिभी रूपाद्यनुभवामीत्यबाधितभेदप्रतीतेः । योऽहं द्रष्टा स एवाहं शृणोमीति प्रतिसन्धातुरेकस्य प्रतिपन्नत्वाच्च । मनोऽपि नात्मा । मनसैव तत्राभिप्रायो मया ज्ञातो(क) यतो मे मनो निर्मलमिति तज्ज्ञानकारणत्वेन प्रतीतेः । एवं न प्राणोऽप्यात्मा । प्राणो मे गच्छतीत्यनुभवात् । अहमिदं जानामीति ज्ञातृधर्मतया प्रतीतेर्बुद्धिरपि नात्मा । तस्माद्वा एतस्मादन्नरसमयादन्योऽन्तरात्मा प्राणमय इत्यादिश्रुतिभ्यः । जडदेहादिभ्यः पृथग् आत्मा चेतन एव । यथा सैन्धवघनोऽनन्तरो बाह्यः कृत्स्नो रसघन एवमात्मानन्तरोऽबाह्यः कृत्स्नः

(क) आ० पु० स्त० मया ज्ञात इति ना० ।

मज्ञानघन एवात्रायं पुरुषः स्वयंज्योतिर्भवतीति श्रुतेः। पुनः किंविशिष्टः। अणुः। न तु विभुः। सर्वेषामात्मनां सर्वत्र सन्निधानाभावात्। न च तदणुत्वे देहव्यापि चैतन्यन्न स्यात् तद्गुणाश्रयत्वमपि न संभवति। देहपरिमाणत्वे मध्यमपरिमाणानां सावयवत्वेन नित्यत्वमसङ्गः स्यादतो जीवो विभुः। सर्वमूर्त्त(क)द्रव्यसंयोगित्वं विभुत्वमिति वाच्यम्। श्रुतिविरोधात्। विरोधस्तु। स यदास्माच्छरीरात्समुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति। स एवास्माल्लोकात्प्रैति। चन्द्रमसमेव ते सर्वे गच्छन्ति। तस्माल्लोकात् पुनरस्मै(ख) लोकाय कर्मण इति श्रुत्यर्थसिद्धये भवता कुत्र लोको विनिश्चितो न कुत्रापि दृश्यते। यतो ब्रह्माण्डव्यापकस्य तस्य ब्रह्माण्डान्तःस्थावरजङ्गमादिचतुर्दशभुवनसंयोगेषु तद्बाह्येऽपि सत्ता तदतिरिक्तस्थानाभावात्। नन्वणूपाधियोगेन तदप्युत्क्रान्तिगत्यागतीनां व्यवहारः सिद्ध्यति। यथा घटे गच्छति घटाकाशोऽपि गच्छतीति दृश्यते इति चेन्न। अनुभवाभावात्। इवकारात्तस्य गमनाभावात्। अन्यथा तदस्पृश्यत्वहानिः। विभुत्वस्यापि। पुनस्तस्याखण्डितत्वाद् बद्धस्य मोक्षप्रसङ्गः। मुक्तबन्धनं च। पुनस्तत्त्व एकस्य सुखदुःखादिप्रसङ्गः सर्वेषां भवितुमर्हति। परस्परव्यापकत्वात्। ज्ञानाविशेषत्वात्। नन्वणूपाधिभेदाश्रयस्य स तस्यैव। न त्वन्येषाम्। भानुप्रतिबिम्बकम्पादिवदिति चेन्न। तदाव-

(क) आ० पु० स्त० मूर्त्त इति पा०।

(ख) आ० पु० स्त० पुनरेतस्मै इति पा०।

रणाभावात्। तस्मिन्सति तदणुत्वमेव। तत्त्वं साधितं पूर्वपक्षसिद्धान्ताभ्यां भगवता सूत्रकारेण। तद्यथा।

नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् (१) ॥

जीव इत्येकवचनं जात्यभिप्रायकम्। एकजीवत्वे सर्वमुक्तिप्रसङ्गः। अनिर्मोक्षप्रसङ्गो वा। अविद्याया एकत्वबहुत्वप्रसङ्गात्। स चानन्त्याय कल्पत इति श्रुतेः। आनन्त्याय विभुत्वाय कल्पते इत्याग्रहेणानर्थो न वक्तव्यः। यतः विभुत्वानियम्यनियन्तृत्वव्यवस्थानुपपत्तेः। तदुक्तं च।

अपरिमिता ध्रुवास्तनुभृतो यदि सर्वगतास्तर्हि न शास्यतेति

(१) नाणुरित्यादिसूत्रस्यार्थः॥ जीवात्माणुर्न भवति। कुतः। अनणुत्वश्रुतेः। महानज आत्मेति श्रुत्या विभुत्वमेव। नाणुत्वमिति चेन्न। कुतः। इतरस्य परमात्मनो मुख्यतया प्रतिपाद्यत्वेनाधिकारात्। उक्तश्रुत्या तस्यैव महत्त्वोक्तेरिति भावः। इतोऽप्यात्माणुरेव। स्वशब्दोन्मानाभ्याम्। अस्य सूत्रस्यार्थः। स्वस्याणुत्वस्य शब्दात्। एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा विवेशेति श्रुतिशब्दादणुरेव जीवात्मा। श्रुत्यन्तरे।

बालाग्रशतभागस्य शतधा कल्पितस्य च।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते

इत्युन्मानादपि ॥

नियमो ध्रुव नेतरथा । अजनि च यन्मयं तदविमुच्य नियन्तृ भवेत्समनुजानतां यदमतं मतदुष्टतयेति श्रुत्या (१) ॥

सूक्ष्माणामप्यहं जीव इति भगवच्छब्दात् । इतोऽप्यात्माणुरेवेत्याह ।

तदभावे नाडीषु तच्छ्रुतेरात्मनि चेति सूत्रम् (२) ॥

(१) परिमिता इत्यादि श्रुतिस्तुतिपद्यस्यार्थः ॥ स्वभावतोऽपरिमिता अनन्ता ध्रुवा नित्या अविनाशिनस्तनुभृतो जीवा यर्हि सर्वगता विभवः स्युस्तर्हि तेषां समत्वाच्छास्यता न घटत इति कृत्वा हे ध्रुव परमेश्वर तेषां त्वया नियमो नियमनमपि न स्यात् । इतरथा तदणुत्वे तु घटेत । कथम् । यतो यन्मयं यत् कार्यमजनि जातं तस्य कार्यस्य तत्कारणं स्वकारणतया तदविमुच्य अपरित्यज्य नियन्तृ नियामकं भवेत् । तत् किं कारणम् । ममममनुस्यूतम् । ननु यतच्छब्दैः किं तज्ज्ञायते । तदिदमित्युच्यतामत आहुः । अनुजानतां यदमतममतदुष्टतया जानीम इति वदतां यन्मतं तदमतमविज्ञानप्रायम् । अनिश्चयत्वात् ।

यस्यामतं मतं तस्य मतं यस्य न वेद सः ।

अविज्ञातं विजानतां विज्ञातमविजानतामिति

श्रुतेः । ज्ञातस्य दुष्टतया दोषश्रवणात् । अतः कथमुच्यति इदमेवं कारणमिति तस्मादणुरेव जीवात्मा ॥

(२) तदभाव इत्यादि सूत्रस्यार्थः ॥ तदभावे स-

नन्वविद्यावृतो जीवात्माणुर्भवतु तन्मुक्तस्तु विभुरस्त्वेति चेन्न । वेदान्तविरोधात् । तथा सूत्रम् ।

मुक्तोपसृप्यव्यपदेशादिति (१) ॥

ननु तस्याणुत्वे देहव्यापि चैतन्यं न स्याद् । देहैकदेशनिवासत्वात् । तत्राह ।

गुणाद्वालोकवदिति (२) ॥

---

ज्ञानाभावे सुषुप्तौ नाडीषु आत्मनि च हृदयाकाशे ब्रह्मस्थाने शेते सुप्तो भवति जीवात्मा । तस्मिन्काले तत्तावत्प्रारब्धभोगान्तादित्यर्थः । तासु तदा नाडीषु सुप्तो भवति । ताभिः प्रत्यवसृप्य पुरीतति शेते । य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते इति श्रुतेः । यतो ब्रह्मस्थाने शेते तस्माद्धेतोः परमेश्वरात्पुनस्तस्य प्रबोधः ।

अतः प्रबोधोऽस्मादिति सूत्रोक्तेः । अस्य सूत्रस्यार्थः ॥ पुरीतति हृदयावेष्टनचर्मणीत्यर्थः । शयनादिव्यवहारस्तु विभुत्वे न सम्भवति । तस्मादणुरेवात्मा ॥

(१) मुक्तोपसृप्येत्यादिसूत्रस्यार्थः । तस्य विद्वान्नामरूपाद्विनिर्मुक्तः परात्परं पुरुषमुपैति दिव्यमिति । अविद्यादोषविनिर्मुक्तैरपि परमेश्वर उपसृप्यः प्राप्यः । तस्योपसृप्यत्वस्य निर्देशान्मुक्तजीवोऽप्यणुरेव ॥

(२) गुणाद्वेत्यादिसूत्रस्यार्थः ॥ वा शब्दश्चार्थे । यथा आलोको दीपादिः स्वप्रकाशगुणेन स्वसंसर्गि च गृह

नन्वसंमतो दृष्टान्तोऽयम् । यतः प्रभायास्तेजोविशेषरूपाया द्रव्यत्वेन गुणत्वासिद्धेरित्यत आह सूत्रम् ।

व्यतिरेके गन्धवदिति (१) ॥

ननु तर्केण तद्गुणव्यापकत्वं साधितम् । तत्राह ।

तथा च दर्शयतीति (२) ॥

कुतः श्रुतेस्तथार्थनिर्णयस्तत्राह ।

पृथगुपदेशादिति (३) ॥

---

भासयति । तेन गुणेन गृहव्यापको भवति । तथा जीवोऽप्यन्तःकरणे स्थितोऽपि स्वज्ञानगुणेन देहव्यापक इत्यर्थः॥

(१) व्यतिरेक इत्यादिसूत्रस्यार्थः ॥ यथा गुणत्वेन संप्रतिपन्नस्यापि गन्धस्य व्यतिरेको गुणिनमविहायान्यत्रावस्थितिः । दूरस्थेष्वपि कुसुमकस्तूर्यादिषु तदीयगन्धोपलब्धेः । तद्वद्गुणोः जीवस्य गुणभूतस्य ज्ञानस्य सर्वदेहव्यापित्वं स्यात् ।

(२) तथा चेत्यादि सूत्रस्यार्थः ॥ हृदयायतनत्वाणुत्वे उपक्रम्या लोमेभ्य आ नखाग्रेभ्य इति वदन्ती श्रुतिः चैतन्यगुणेनैव देहव्यापित्वमात्मनो वदतीति भावः ।

(३) पृथगित्यादिसूत्रस्यार्थः ॥ प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति इति श्रुत्या कर्तुर्जीवात्पृथक्त्वेन प्रज्ञाशब्देन करणस्य चैतन्यज्ञानगुणस्य निर्देशाज्ज्ञानगुणेनैवास्य शरीरव्यापित्वनिर्णय इति भावः॥

एकस्मिन्काले युगपत्सुखोपलब्धिस्तु हरिचन्दनवत् ।
अविरोधश्चन्दनवदिति सूत्रोक्तेः (१) ॥

अणुमात्रोऽप्ययं जीवः स्वदेहं व्याप्य तिष्ठति ।
यथा माप्यशरीराणि हरिचन्दनविन्दुवदिति
स्कान्दोक्तेरपि ॥

ननु तस्य जीवात्मनो जगद्व्यापित्वलक्षणविभुत्वमपि श्रूयते । तत्राह ।

तद्गुणसारत्वादिति सूत्रम् (२) ॥
तद्व्यपदेशः प्राज्ञवदिति (३) ॥

---

(१) अविरोध इत्यादि सूत्रस्यार्थः ॥ यथा कस्मिंश्चिदवयवे स्थितो हरिचन्दनविन्दुरन्येष्वपि अवयवेषु परम्परया संबद्धेषु(क) सुखस्य निमित्तं तथात्मापीन्द्रियगतस्य वृत्तिद्वारा युगपत् स्वसम्बन्धविषयान् गृह्णाति।

(२) तद्गुणेत्यादि सूत्रस्यार्थः ॥ तस्य जगद्व्यापित्वं तु तस्य गुणसारत्वात् अनावृतज्ञानगुणत्वात । यथा मण्डलस्थो भानुरनावृतप्रकाशगुणेन ब्रह्माण्डव्यापको भवति तथा जीवोऽप्यनावृतज्ञानगुणेन ब्रह्माण्डव्यापकः ॥

(३) तद्व्यपदेशेत्यादिसूत्रस्यार्थः ॥ सर्वव्यापकव्यपदेशः प्राज्ञवत् । यथा प्राज्ञो नित्यमुक्तजीवोऽनावृतज्ञानगुणेन सर्वव्यापी तथा ॥

---

(क) ग्रा० पु० स्त० संबन्धेषु इति पा० ।

न च तद्गुणसारत्वादुपाधिगुणत्वादणुत्वमुपाधिवियोगे तु विभुत्वमिति वाच्यम् । मुक्तोपसृप्यव्यपदेशादिति सूत्रोक्तेः । विभुत्वे तदीश्वरसृप्यत्वासंभवात्।मुक्तोपसृप्यव्यपदेशादित्यनेन जीवाणुत्वादप्रतिपादकानि सिद्धान्तभूतानि यानि सूत्राणि तानि यैः पूर्वपक्षे कथितानि तेषां सिद्धान्तोऽपि निरस्तः । तस्मिन्नणावात्मनि तद्गुणास्तु परमाणुरूपायां मह्यां गन्धगुण इव गन्धवती पृथिवीति लक्षणान्मनसि संकल्पविकल्पाविव(क) च । आधाराधेयभावेन तु परमाण्वाधारे न पृथिवी । तस्मादणुरेवात्मा । पुनः कथंभूतो जीवः । नित्यः । नात्मा श्रुतेः । नित्यत्वाच्चेत्युक्तेः (१) ॥

तदुत्पत्तिस्वीकारे कृतहानाकृताभ्यागमादिदोषः ।
न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे
इति श्रीभगवदुक्तेः ॥

पुनः कीदृशः । विज्वरादिगुणः जीवात्मा । विज्वरो विशोको विमृत्युरित्यादिश्रुतिभ्यः । पुनः । अव्ययः । पुनः किंविशिष्टः । कृष्णांशः तदीयस्तत्सत्ताकः । तदधीन इत्यर्थः । न तु विवर्तः प्रतिविम्बोऽवच्छिन्न आभासो वा । अंशो ना-

(१) नात्मेत्यादि सूत्रद्वयस्यार्थः ॥ जीवात्मा नोत्पद्यते । कुतः । तदुत्पत्तिश्रवणाभावात् । अतो नित्यः ।

(क) आ० पु० स्त० च इति ना० ।

नाव्यपदेशात् । ब्रह्मणोंऽशभूतस्तथेतरो भोक्तेति सूत्रश्रुतिभ्याम् (१) ॥

ममैवांशो जीवलोके जीवभूतः सनातन

इति भगवदुक्तेः ॥

गीतायां यः सिद्धान्तः कृतः स एव निगमागमानां सिद्धान्तः । यतो गीता तु निगमागमानां सारभूतैव ।

सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः ।
पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महदित्युक्तेः(क) ।

वेदजनकस्य वेदविदो भगवतः प्रवचनात् ।

किं विधत्ते किमाचष्टे किमनूद्य विकल्पते ।
इत्यस्या हृदयं लोके नान्यो मद्वेद कश्चन

इति भगवदुक्तेः (ख) ॥

(१) अंशो नानेत्यादिसूत्रस्य ब्रह्मणोंऽश इत्यादिश्रुतेश्चार्थः ॥ जीवात्मा परमात्मनोंऽशः । कुतः । नानाव्यपदेशात् । बद्धो नित्यबद्धो मुमुक्षुर्मुक्तो नित्यमुक्त इति नानाव्यपदेशात् । प्रतिबिम्बादिषु नानाव्यपदेशा बद्धमुक्तादयो न सम्भवन्तीत्यर्थः । श्रुत्यर्थस्तु । जीवात्मा ब्रह्मणोंऽशभूतस्तस्मात्कर्मफलभोक्ता । इतरः ईश्वरस्तु तद्रूपो न भोक्ता । सर्वसाक्षित्वात् ॥

(क) मा० पु० न्त० एष श्लोको ना० ।
(ख) मा० पु० न्त० एष श्लोको ना० ।

अतोऽन्यत्र प्रतिबिम्बादिप्रतिपादिकानि वाक्यानि दृश्यन्ते तानि पूर्वपक्षदृढ़कराणि ज्ञातव्यानि। मनो ब्रह्म उपासीतेतिवत्। गीतायामनुक्तत्वात्। पुनः कीदृशो जीवः । भयातीतः कालभयातीतः । यतोऽक्षरः । न क्षरतीत्यक्षरः ।

न जायते म्रियते वा विपश्चि-
न्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो
न हन्यते हन्यमाने शरीरे इति श्रुतेः ॥

कूटस्थोऽक्षर उच्यते इति भगवदुक्तेः।

पुनः कथंभूतः । ज्ञानगुणाश्रयः । आत्मायं विज्ञानमय इति श्रुतेः । श्रुत्यन्तरेऽपि ज्ञानगुण इति । तस्माज्जीवात्मा ज्ञानगुणः ज्ञानस्वरूपश्च । पूर्वोक्तसूत्रश्रुतिनिर्णयात् । यथा तेजोरूपस्यापि सूर्यादेः प्रभाश्रयत्वम् तथा ज्ञानस्वरूपस्याप्यात्मनो ज्ञानाश्रयत्वमतो ये केवलं ज्ञानगुणात्मानमाहुः केवलं ज्ञानस्वरूपं च ते सर्वे अवैदिकाः । अतस्तेषां सिद्धान्तो नादरणीयः । स्वरूपभूतज्ञानं त्वात्माहमिति स्वस्मै स्वात्मानं प्रकाशयति । नान्यस्मै। तस्मादहमर्थः स्वरूपवाची। यतः स द्विविधः । मायिकः । मायातीतश्च। देहोऽहमित्यादि मायिकः । आत्माहमिति मायातीतः । धर्मभूतज्ञानं तु देहव्यापकं विषयप्रकाशकत्वेनानुभवकारकमिति तयोर्भेदः । एवमुभयरूपत्वम् । केवलं ज्ञानगुणत्वे जडत्वापत्तिः। ज्ञानस्वरूपत्वे सुखानुभवानुपपत्तिः ॥२६॥

**अजन्मा मागुणातीतो दुःखातीतः स्वरूपतः।**
**कृष्णाभक्तिकृतास्तस्मिन्क्लेशास्त्वागन्तुका हि ते २७**

पुनः कथंभूतः। अजन्मेत्युपलक्षणम् । षड्विकारातीत इत्यर्थः। विकाराभावे षडूर्मीणामप्यभावः । विकारास्तु। जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीति देहधर्माः। नात्मनः। ऊर्मयस्तु । क्षुधापिपासाशोकमोहजरामरणानि। पुनः। मागुणातीतो मायागुणातीतः। अतो दुःखातीतः स्वरूपतः।

य आत्मापहतपाप्मा विज्वरो विशोको विमृत्युरिति श्रुतेः।

जीवस्वरूपे दुःखाद्यनर्थानामभाव एव । ननु तस्मिन्दुःखादयो दृश्यन्त इति चेत्तत्राह। कृष्णेति । तस्मिन् जीवे ये क्लेशास्ते कृष्णाभक्तिकृतास्तस्मादागन्तुकाः। न स्वाभाविकाः। ननु

देशतः कालतो योऽसाववस्थातः स्वतोऽन्यतः।
अविलुप्तावबोधात्मा स युज्येताजया कथमि- (१) ॥

(१) देशतः कालत इत्यादिश्लोकस्यार्थः॥ देशतः दीपप्रभाया इव यज्ज्ञानस्य लोपो नास्ति । अनावृतज्ञानगुणत्वात्। न कालतः। विद्युत इव। नित्यत्वात्। नावस्थातः। स्मृतिवत्। अखण्डज्ञानत्वात्। न स्वतः। स्वप्नवत्। कालत्रयाबाधत्वात्। नान्यतः। घटादिवत्। अक्षरत्वात्॥

**माया तु द्विविधा नित्या चिच्छक्तिश्च गुणात्मिका।**
**चिद्रूपा तत्प्रिया चाद्या द्वितीया विश्वकारिणी २८॥**

त्यादिना कृष्णाभक्त्यापि जीवस्य क्लेशाश्रयत्वं न घटेतेति वाच्यम् ।

सेयं भगवतो माया यन्न येन विरुध्यते ।
ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥

यदर्थेन विनामुष्य पुंस आत्मविपर्ययः ।
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिकमित्युक्तेः(२) ॥२७॥

एवं जीवस्वरूपमुक्त्वा मायास्वरूपमाह । मायां तु प्रकृतिं विद्यादिति श्रुतेः। या मा सा माया । मा निषेधार्थे । इति कल्पितार्थः शिष्टापरिग्रहोऽतो नादरणीयः ।सा द्विविधा। एका तु चिच्छक्तिः ।

(१) सेयम्भगवत इत्यादिपद्यद्वयस्यार्थः ॥ ईश्वरस्य समर्थस्य जीवस्य कथङ्कार्पण्यं विमुक्तस्य तस्य कथं बन्धनमिति तर्केण यद् विरुद्ध्यते भगवतोऽचिन्त्यशक्तेः परमेश्वरस्य सैव माया । माया मोहितैरेव तर्क्यते । सिद्धान्ते तु तस्य जीवस्य स्वरूपे दुःखाभावेऽप्यनादिसान्ता कृष्णाभक्तिर्यावत्तावत्तया स(क) दुःखादिकमवाप्नोति ।

(क) आ० पु० स्त० सुख इति पा० ।

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानक्रियाबले(क)ति।

तासु ह्लादिनी गरीयसीति श्रुतेः । द्वितीया गुणात्मिका।

अजामेकां लोहितकृष्णशुक्लां बह्वीं प्रजां जनयन्तीं स-रूपामिति(ख) श्रुतेः ॥

तयोराद्या चिद्रूपा तु तत्तस्य भगवतः प्रिया। श्रीराधा-रमाजानकीरूपा। श्रीश्च ते लक्ष्मीश्च ते पत्न्याविति श्रुतेः। द्वितीया गुणात्मिका विश्वकारिणी।

मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति भगवदुक्तेः।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥
अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्।
जीवभूतां महाबाहो ययेदं धार्यते जगदिति

भगवद्वचनात्। गुणात्मिकेत्यनेन विद्याविद्याङ्गोक्ता।

विद्याविद्ये मम तनू विद्ध्युद्धव शरीरिणाम्।
बन्धमोक्षकरी आद्ये मायया मे विनिर्मिते

इति भगवदुक्तेः।

जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्मभिः।
यद्यचिन्त्यमहाशक्तौ भगवत्यपराधिन इत्युक्तेः।

(क) श्वेताश्वतरपाठस्तु ज्ञानबलक्रिया चेति।

(ख) श्वेताश्वतरपाठस्तु अजामेकां लोहितशुक्लकृष्णां बह्वीः प्र-जाः सृजमानां सरूपा इति।

**भूतादिव्यवहारस्य हेतुः कालोऽव्ययो बली ।**
**बृहदण्वादिभेदेऽपि ह्येको वै गुणचालकः ॥२६॥**

विद्या तु भगवदुपासना । ब्रह्मविद्या ब्रह्मोपासनेत्युक्तेः । कर्मात्मिका अविद्या कृष्णानुपासना पञ्चपर्वा ।

अन्धं तमः प्रविशन्ति योऽ(क)विद्यामुपासते ।
विद्ययामृतमश्नुते इति श्रुतेः ॥

अतः कृष्णोपासना मुक्तिदा । अनुपासना संसारदेत्यर्थः । ते उभे नित्ये । अनाद्यनन्तत्वात् ॥२८॥

एवं मायास्वरूपं निरूप्य कालस्वरूपमाह । भूतादीति । आदिपदेन भूतभविष्यवर्त्तमानस्य व्यवहारस्य यो हेतुः स कालः कीदृशः । अव्ययः । पुनः । बली । सर्वनाशकः ।

स कालः परमाणुर्वै यो भुङ्क्ते परमाणुताम् ।
सतो विशेषभुग्यस्तु स कालः परमो महानिति ॥

बृहदण्वादिभेदेऽपि एकः । हि निश्चयार्थे । पुनः । गुणचालकः गुणक्षोभकः ।

---

**तस्माद्यथामुष्य स्वप्नोपद्रष्टुः पुंसः स्वप्नदोषेण यावत्स्वप्नं तावदर्थेन शिरश्छेदनादिना विनाप्यात्मविपर्ययः शिरश्छेदनादिकं प्रतीयते ॥**

---

(क) अ॰ पु॰ त॰ योऽबुध इति पा॰ । (ख) ईशावास्योपनिषत्पाठस्तु अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते ।

महतो जन्महेतुर्वै यस्तत्कर्म प्रकीर्त्तितम् ।
पृथक् पृथग्घि जीवानां यत्कर्म तत्ततः पृथक् ॥३०॥
माया कालः स्वभावश्च कर्मजीवेश्वराश्च वै ।
षडेतेऽनाद्यनन्तास्ते व्यासेन प्रतिपादिताः ॥३१॥

कालाद् गुणव्यतिकरः परिणामः स्वभावत इत्युक्तेः ।
अनादिनिधनः काल इति वचनात्स नित्यः ॥२९॥

एवं कालस्वरूपमुक्त्वा कर्मस्वरूपमाह । महत इति । महतो महत्तत्त्वस्य यो जन्महेतुस्तदेवकर्म प्रकीर्त्तितम् ।

कर्मणो जन्म महत इति भागवतोक्तेः ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञित
इति भगवदुक्तेः ।

पृथक् पृथग्जीवानां यत्कर्म तत्तु ततः तस्मान्महत्तत्त्वजन्महेतोः कर्मणः पृथक् । यतस्तत्त्वनाद्यनन्तम् । इदं त्वनादिसान्तमग्रे वक्ष्यमाणत्वात् ॥ ३० ॥

एवं परमेश्वरादीनि तत्त्वानि निरूप्य तेषां नित्यत्वमाह । मायेति । मायाकालादय ईश्वरान्ताः षडेते पदार्थास्त्वनाद्यनन्ता आद्यन्तशून्याः । मायाकालकर्मस्वभावानां चिद्विशेषणाभावे ते चत्वारो जडा अप्यनाद्यनन्तत्त्वेन श्रीव्यासेन प्रतिपादिताः ॥३१॥

जीवभोगार्थमेवेदं करोति भगवान्विभुः ।
विश्वं मायादिभिस्तत्त्वैर्लीलया परमेश्वरः॥३२॥

तैर्मायादिभिस्तत्त्वैरिदं विश्वं परमेश्वरो लीलया करोति । कस्मै प्रयोजनाय । तत्राह जीवभोगार्थमेव । यतो भगवान् । ऐश्वर्यदः । पुनः । विभुः । लीलयेति प्रयत्नप्रयासशून्य इच्छामात्रेण तद्रचयति ।

स एवेदं ससर्जाग्रे भगवानात्ममायया ।
सदसद्रूपया चासौ गुणमय्यागुणो विभुः ॥

स वै किलायं पुरुषः सनातनो
य एक आसीदविशेष आत्मनि ।
अग्रे गुणेभ्यो जगदात्मनीश्वरे
निमीलितात्मन्निशि सुप्तशक्तिषु ।
स एव भूयो निजवीर्यचोदितां
स्वजीवमायां प्रकृतिं सिसृक्षतीम् ।
अरूपनामात्मनि रूपनामनी
विधित्समानोऽनुससार शास्त्रकृदित्यादिभ्यः(१)॥

(१) स वै किलेत्यादिपद्यद्वयस्यार्थः ॥ निशि प्रकृते रात्रौ प्रलये जीवानां सुप्तासु शक्तिषु जगदात्मनि जीवे ईश्वरे निमीलितात्मनि सति । निमीलितात्मन्निति लुप्तसप्तम्यन्तं पदम् । गुणेभ्यः अग्रे गुणक्षोभात्पूर्वं

भूयः प्रकृतिं ससारेत्यनेन मायया नित्यत्वमुक्तम् । अग्रे इत्यनेन कालस्य तत्त्वम् । रूपनामनी विधित्समान इत्यनेन कर्मणो नित्यत्वम् । जीवेश्वरयोर्नित्यत्वं तु मन्दा(क)-मन्दैरपि उक्तम् । एवं षड्व पदार्था नित्या अनाद्यनन्ता इत्यर्थः ॥ ३२ ॥

गुणसाम्यावस्थायामविशेषे आत्मनि ब्रह्मणि स्वःशरीरे य एक आसीत् सोऽयमेव श्रीकृष्णः । अयमित्यङ्गुल्या निर्दिशति । वै निश्चये । किल अवधारणे । कथंभूतो-ऽयम् । पुरातनः पुरुषः । पुरुषोत्तम इत्यर्थः । भूयोऽपि सोऽयं श्रीकृष्णः अप्रच्युतैश्वर्यः प्रकृतिं मायां ससार अ-धिष्ठितवान् । कीदृशीं प्रकृतिम् । निजवीर्येण कालेन प्रेरिताम् । पुनः कथंभूताम् । स्वांशभूतानां जीवानां मायां मोहिनीम् ।

यया संमोहितो जीव आत्मानं त्रिगुणात्मकम् ।
परोऽपि मनुतेऽनर्थं तत्कृतं चाभिपद्यते इत्युक्तेः ।

पुनः किंविशिष्टाम् । सिसृक्षतीं स्रष्टुमिच्छतीम् । कीदृशः सः । अनामरूपात्मनि जीवे रूपनामनी विधि-त्समानः विधातुमिच्छन्नित्यर्थः । पुनः कीदृशः । आ-ऋतुत् जीविकाप्रदः पालक इत्यर्थः ॥

(क) भा० पु० स्क० मन्दा इति ना० ।

शुभाशुभानि कर्माणि जीवानां त्रिगुणानि तु।
ज्ञेयान्यनादिसान्तानि मुख्यकर्मेतराणि च॥३३॥

ननु मायाकर्मस्वभावानामनाद्यनन्तत्वे जीवानिर्मोक्षप्रसङ्गः। अनादिबन्धनान्ताभावादिति शङ्कायामाह। शुभाशुभानीति। जीवानां त्रिगुणानि शुभाशुभमिश्रितानि कर्माणि तु अनादिसान्तानि ज्ञेयानि। न त्वनाद्यन्तानि। कीदृशानि। मुख्यकर्मेतराणि अनाद्यनन्तस्य मुख्यकर्मण इतराणि पृथक् पृथग् जीवस्य कर्माणीत्यर्थः। कर्मणः अनादित्वादीश्वरेऽपि न वैषम्यनैर्घृण्ये। तदुक्तं वेदान्ते।

वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयति (१)॥

(१) वैषम्येत्यादिसूत्रस्यार्थः॥ ननु लीलयेदं विश्वं करोति भगवानित्युक्तं भवता। अतः प्रयोजनमनुद्दिश्य जगत्सर्जनादिकं कर्म कुर्वति भगवति वैषम्यनैर्घृण्यताप्तिः। सृष्टौ सुरासुरादिविषमसर्गात्प्रलये सर्वनाशकत्व(क)गुणाच्च। स्थितौ सत्सुखदुःखादिवैचित्र्यादपीति शङ्कायामाह। न कदापीश्वरे वैषम्यनैर्घृण्ये। कुतः। सापेक्षत्वात्। जीवानां कर्मसापेक्षत्वात्। अतो यस्य पूर्वसञ्चितं देवयोनिकारणं कर्म तेन कर्मणा ईश्वरेण देवः कृतः। असुरयोनिकारणेन कर्मणा असुरः। तथा हि श्रु-

(क) भा० प० त्व० त्व इति ना०।

ननु सदसत्कर्मकारायिताऽपि परमेश्वर एव । एष उ एव साधु कर्म कारयति । एष उ एवासाधु कर्म कारयतीति श्रुतेः । उ वितर्के । एवकारोऽन्यव्यावृत्त्यर्थे । एष परमेश्वर इत्यर्थः । अतः कर्मसापेक्षत्वं सदसंमतमेव । तदेवाह ।

न कर्माविभागादिति चेन्नानादित्वात् (१) ॥

अतः समाधिकनिषेधार्थमेवैकमेवाद्वितीयं ब्रह्मेत्युक्तम् । न तु भेदानिषेधाय । इदं विश्वं सदेवासीदित्युक्तेनैव भेदम-

निर्दर्शयति । पापं पापेन कर्मणा भवति । पुण्यं पुण्येन कर्मणा भवतीत्यादिना । अतो भोक्तुः कर्मैव सुखदुःखादिनियामकम् । न तु कर्त्तुरीश्वरस्य रागद्वेषादिः ॥

(१) न कर्मेत्यादिसूत्रस्यार्थः ॥ सृष्टेः प्राग् न कर्म येन वैषम्यादि परिह्रियेत । कुतः अविभागात् । सदेव सोम्येदमग्र आसीत् । एकमेवाद्वितीयं ब्रह्मेत्यादिभ्यो द्वैतावधारणादिदं कर्म । अयमीश्वरः । अयं जीवः । अदमिति विभागो नास्तीति चेन्न । अनादित्वात् कर्मणोऽनादित्वात् । सृष्टिप्राक्कालवृत्तित्वादित्यर्थः । प्रलये कर्मादीनां सदात्मकत्वात्ततो भिन्नदृश्यत्वा(क)भावेन सदेव सोम्येदमग्र आसीदित्युक्तत्वादित्यर्थः । अन्यथा कृतहानाकृताभ्यागमप्रसङ्गः ॥

(क) आ० पु० न्त० स्व इति ना० ।

तीतेः । अत ईश्वरस्तु पूर्वकर्मानुरूपं कर्म कारयति तत्फलमपि ददाति । ननु कथं कर्मणोऽनादित्वमिति चेत्तत्राह ।

उपपद्यते चाप्युपलभ्यते च (१) ॥

एवं जीवानां प्राचीनकर्मानुरूपं कर्मकारयितृत्वेऽपि तत्तत्फलदातृत्वेऽपि न कदापीश्वरस्य कर्मसापेक्षाधीनत्वम् । यतः स्वभक्तहितविधाने स्वतन्त्रत्वात् । तदुक्तं भगवता ।

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहमिति ॥

अनेन भाग्यहीनेभ्यो द्रव्यादिदानेन तद्रक्षणेन च निजस्वतन्त्रत्वं कर्माध्यक्षत्वं चोक्तम् । तदनुभवमाह ।

सर्वभूतात्मदृक् साक्षी तस्यागमनकारणम् ।
विप्रायाचिन्तयन्नायं श्रीकामो माभजत्पुरा ॥

(१) उपपद्यत इत्यादिसूत्रस्यार्थः ॥ पूर्वसृष्टिकाले कर्मकर्तृत्वादेव सुखदुःखादिवैचित्र्यमन्यथा त्वनुपपत्तेः । तस्माद्वैचित्र्यात्कर्मणोऽनादित्वमुपपद्यते । सृष्टेरप्यनादित्वमुपलभ्यते च(क)। सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदित्यादिना । भागवतेऽपि ।

यथेदानीं तथा चाग्रे पश्चादप्येतदीदृशमिति ॥

(क) श्रा। पु० स्त। च इति ना०।

पत्न्याः पतिंव्रतायास्तु सखा प्रियचिकीर्षया ।
प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभा इति(१)॥
तस्माद् भगवान्स्वतन्त्रो न कर्माधीनस्तदेवाह सुदामा ।
नूनं बतैतन्मम दुर्भगस्य शश्वद्दरिद्रस्य समृद्धिहेतुः ।
महाविभूतेरवलोकतोऽन्यो नैवोपपद्येत यदूत्तमस्य ॥

(१) सर्वभूतेत्यादिपद्यद्वयस्यार्थः ॥ श्रीकृष्णस्तस्य सुदाम्न आगमनकारणं विज्ञायाचिन्तयत् । तत्किं कारणम् । तत्राह । पतिव्रतायाः पत्न्याः प्रियचिकीर्षयापि तया नोदितो मम सखा परमनिष्कामोऽपि द्रव्यकामः सन् मां प्राप्त इति । किमचिन्तयत्तत्राह । अयं सुदामा पुरा श्रीकामः द्रव्याद्यैश्वर्यकामः सन्मा मां नाभजत् । तस्मादस्य भाग्ये द्रव्याभाव एव वर्त्तते । तथापि अमर्त्यदुर्लभाः देवोत्तमदुर्लभाः संपदो दास्यामीति साभिमानवाक्यं तु कर्मानादरे । भगवता विचारितमिदम् । भाग्याभाववते परमैश्वर्यदानेन कर्मसेतुभङ्गप्रसङ्गः । कर्मादरे स्वस्वतन्त्रत्वहानिरिति विचार्य स्वाभाविकागन्तुकधर्मविचारेण स्वाभाविकस्य स्वतन्त्रत्वस्यादराय दास्यामीत्युक्तम् । एवं निश्चित्य ददावित्यर्थः । अस्येति षष्ठ्यन्तस्यायं भावः । तस्मिन् सुदाम्नि मित्रराजभावनया निजवैभवं तस्यैव मत्वा निजरूपे तदधीनानुसंधानात् । चतुर्थ्यनादरेण षष्ठीप्रयोगः ॥

नन्वब्रुवाणो दिशते समक्षं याचिष्णवे भूर्यपि भूरिभोजः ।
पर्जन्यवत्तत्स्वयमीक्षमाणो दाशार्हकाणामृषभः सखा मे(१)॥

भगवान्स्वतन्त्र एवेति श्लोकतात्पर्यार्थः । प्रारब्धनाशकगुणत्वात् । यमजरादक्षाणां शापेभ्यो नारदस्यैकत्र वासाभाववति प्रारब्धेऽपि ॥

गोविन्दभुजगुप्तायां द्वारवत्यां कुरूद्वह ।
अवात्सीन्नारदोऽभीक्ष्णं कृष्णोपासनलालस

इत्यादिना द्वारवत्यां चिरकालनिवासः श्रूयते । तथा तच्छापभावेऽपि वज्रोद्भवादीनां मुशलास्पर्श एव श्रूयते॥३३॥

(१) नूनमित्यादिश्लोकद्वयस्यार्थः ॥ बत हर्षे । दुर्भगस्य मे एतत्समृद्धिहेतुः समृद्धेः कारणं यदूत्तमस्य श्रीकृष्णस्यावलोकतोऽवलोकादन्यो मम सुकृतादिकं नैवोपपद्येत । यतो जन्मान्तरेऽस्मिञ्जन्मनि वा ऐश्वर्यार्थे नाराधितो मया भगवान् ।

वर्त्तमानोऽन्ययोः कालो गुणाभिज्ञापको यथा ।
एवं जन्मान्ययोरेतद्धर्माधर्मनिदर्शनमित्युक्तेः ॥

प्राश्वद्दरिद्रस्य प्रारब्धमन्यथा कर्त्तुं स एव समर्थः । अतस्तस्यैवेदं कारणम् । कथम्भूतस्य । महाविभूतेः महती विभूतिरैश्वर्यं यस्य सः । परात्परं ब्रह्म च ते विभूतय इत्युक्तेः । ब्रह्मादिविभूतिर्वा । अस्य श्लोकस्यार्थस्तु पूर्वकृतोऽपि प्रसङ्गात्पुनरप्यनुवर्णितः ॥

कर्मणां संचितादीनां जीवोऽधीनस्तथापि च ।
स्वतन्त्रः क्रियमाणो वै कृतो भगवता विदा॥३४॥

नन्वस्तु भगवतः स्वातन्त्र्यं निगमागमनिर्णीतत्वात् । किञ्च । कर्माण्यनादिबान्तानि जीवानामिति यदुक्तं भवता तत्र तेषां व्यन्तस्तु न संभवति । यतो जीवस्तु संचितकर्मानुरूपं क्रियमाणं कर्म कुरुते । न तु प्रारब्धानुरूपम् । यस्मात्तत्तु शुभाशुभभोगसंयोगदम् । न तु क्रियमाणकर्मकारयितृ ।

कर्मणा जायते जन्तुः कर्मणैव विलीयते ।
सुखं दुःखं भयं क्षेमं कर्मणैवाभिपद्यत

इति भगवदुक्तेः ।

कर्मणेति प्रारब्धकर्मणेत्यर्थः । अतः परिभ्रमणदुःखे । तत्तु शुभाशुभार्थव्यवस्थावर्जितं पर्यटनमात्रं कारयति । ततः सदसत्सङ्गाभ्यां तत्तदर्थाटनाभ्यां तत्तत्सञ्चयो भवति । अन्यथा सर्वमुक्तिप्रसङ्गः स्यात् । प्रारब्धस्य भोगादेव क्षय इति वचनात् । तथा न जीवः क्रियमाणं स्वेच्छानुरूपं कुरुते । सुखेच्छत्यपि तस्मिन्दुःखदर्शनात् । शुभकर्मण्यप्यशुभोद्भवश्रवणादपि ॥

सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यती-

ति भगवदुक्तैरपि ।

स कर्त्ता यः क्रियां साक्षादुत्पादयाति सर्वतः ।
तत्कर्म क्रियया यद्वै विषयीक्रियतेतराम् ।

**शास्त्राणां शासनं तस्मादुपपन्नं विदुर्बुधाः ।**
**व्यर्थत्वमन्यथा तस्य नानायोनिगतेरपि ॥ ३५ ॥**

क्रिया निष्पाद्यते येन करणं तदुदाहृत-

मित्युक्तेरपि । न स्वतन्त्रः । स तु तत्कर्त्ता । अतः संचितकर्माधीनोऽयं तदनुरूपं शुभाशुभमिश्रितकर्मोत्पादनेन न वै कर्मनिवर्त्तककर्म कर्त्तुं समर्थः ।

पापं पापेन कर्मणा भवति पुण्यं पुण्येनेति श्रुतेः ।

तस्मात्तथाभूतानि न वक्तव्यानीति शङ्कायामाह । कर्मणामिति । संचितमारब्धक्रियमाणानां कर्मणामधीनोऽपि जीवः क्रियमाणे गुणकर्मनिवर्त्तके भागवतकर्मणि ह्यन्यस्मिन्नपि विदा भगवता स्वतन्त्रः कृतस्तस्मात्तत्सत्ताकः कृतिस्वाधीनो न तु स्वसत्ताकः ।

असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यत

इत्यादिना परमार्थे प्रयत्नप्राधान्येन तत्स्वतन्त्रत्वमाविष्कृतं भगवता ।

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिना-

वित्युक्तम् । निग्रहः किं करिष्यतीत्युक्त्वेत्यनेनापि तस्य तत्त्वम् ॥ ३४ ॥

यतः क्रियमाणे कर्मणि स्वतन्त्रो जीवो भगवतः कृतः

अतः श्रीभगवद्भक्त्या त्रिगुणानां तु कर्मणाम् ।
विनाशे कृष्णसामीप्यन्न जीवस्य पुनर्भवः ॥३६॥

अतः पापप्रणाशाय कर्मनिवर्त्तये(!) च। ब्राह्मणो न सुरां भक्षेदिति । अतौ भार्यामुपेयादिति । तद् ब्रह्म विजिज्ञासस्वेति । अथातो ब्रह्मजिज्ञासेति ।

ज्ञानविज्ञानसंपन्नो भज मां भक्तिभावित

इत्यादिकं शास्त्राणां शासनं बुधा उपपन्नं योग्यं विदुः । अन्यथा कर्माधीनत्वेन स्वतन्त्रत्वाभावे तस्य शासनस्य व्यर्थत्वं स्यात् । तेन तेपामप्यसर्वज्ञत्वप्रसङ्गः । नानायोनिगतेरपि तत्त्वम् । स्वकर्मगतेरन्यगतिजनककर्मोत्पत्त्यभावात् । तस्मिन्नसत्यपि तेपां स एव प्रसङ्गः ॥ ३५ ॥

अतो जीवस्वतन्त्रत्वाद् भगवद्भक्त्या त्रिगुणात्मकानां कर्मणां विनाशे श्रीकृष्णसामीप्याज्जीवस्य न पुनर्भवः न संसार इत्यर्थः ॥

योगस्य तपसश्चैव न्यासस्य गतयोऽमलाः ।
महर्जनस्तपः सत्यं भक्तियोगस्य मद्गति-
रिति श्रीभगवदुक्तेरपि (१) ॥

(१) योगस्य तपस इत्यादिपद्यस्यार्थः ॥ योगस्य निष्कामकर्मयोग्यस्य अट्धर्मादेः तपसो वानप्रस्थधर्मस्य कृच्छ्रचान्द्रायणादेः । चकारादष्टाङ्गयोगस्य । न्यासस्याभेदज्ञानयोगस्य । गतयः अमला रजस्तमोमलशून्याः ।

भक्तियोगं विना न कदापि कर्मविनाशः ।

एवं मनः कर्मवशं प्रयुङ्क्ते
अविद्ययात्मन्युपधीयमाने ।
प्रीतिर्न यावन्मयि वासुदेवे
न मुच्यते देहयोगेन तावदिति
भागवते ऋषभोक्तेः (१) ॥

अनुष्ठानतारतम्येन महर्जनस्तपःसत्यलोकरूपा अपि नाविनाशिन्यः ।

आ ब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुनेत्युक्तेः ।

ननु ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति(क)

श्रुत्या सत्यलोकगतानामनावृत्तिरेव श्रूयते इति चेत्सत्यम् । किंतु परमेश्वराभेदेन हिरण्यगर्भोपासनया सिद्धकामया सत्यलोकप्राप्तास्तत्र स्थिताः सन्तो भक्तिपरिपाकेन तेन सह मुच्यन्ते । तत्र स्थितानामप्यन्येषां तु पुनरावृत्तिः । यद्वा यदा नारायणो ब्रह्मत्वं प्रतिपद्यते तदा तु तेन सह सर्वे मुच्यन्ते । यदा जीवस्तद्रूपो भवति तदा सत्यलोकनिवासिनां पुनरावृत्तिः । एवं योगादीनां गतयः । भक्तियोगस्य तु मद्गतिर्मम पदगतिः ॥

(१) एवम्मन इत्यादिपद्यस्यार्थः ॥ आत्मनि स्व-

(क) इत्योक्तयोत्तराई मा० पु० ८० ना० ।

एवमुक्तप्रकारेण ज्ञातव्यः परमेश्वरः ।
कर्मजीवोऽपि माया च स्वभावः काल एव च ॥३७॥

अतः कर्मतमोनाशिका तु भक्तिप्रभैव ॥३६॥

उक्तप्रकारेणैवं सर्वेश्वरत्वेन भजनीयत्वेनापि परमेश्वरो ज्ञातव्यः। तत्तद्रूपेण कर्मादीनि तत्त्वान्यपि ज्ञातव्यानि।

धर्मस्य ह्यापवर्ग्यस्य(क) नार्थोऽर्थायोपकल्पते ।
नार्थस्य धर्मैकान्तस्य कामो लाभाय हि स्मृतः ।
कामस्य नेन्द्रियप्रीतिर्लाभो जीवेत यावता ।
जीवस्य तत्त्वजिज्ञासा नार्थो यश्चेह कर्मभिरित्युक्तेः(१)॥

---

जीवतत्त्वेऽविद्यया कर्मण्युप(ख)धीयमाने मनस्तस्मिन्नावेशं कृत्वा तत्कुरुते । पुनस्तदेव बद्धमूलं कर्तृभूतं कर्मभूतं मनः स्ववशं प्रयुङ्क्ते कर्मनिष्ठं करोति। एवं भगवति वासुदेवे प्रीतिर्भक्तिर्यावन्न जायते तावत् कर्मफलेन देहयोगेन न मुच्यते ॥

(१) धर्मस्य ह्यापवर्ग्यस्येत्यादिश्लोकद्वयस्यार्थः ॥ धर्मस्तु पूर्वोक्तरीत्या द्विविधः। आगन्तुकः स्वाभाविकः। तयोरपवर्गमभिव्याप्यापवर्ग्यं तस्य मोक्षपर्यन्तस्य सर्वत्र हेयाभावस्य स्वाभाविकस्य भागवतधर्मस्य अर्थाय फलत्वाय अर्थो द्रव्यं नोपकल्पते योग्यो न भवति । तस्य तु भक्तिरेव फलम् ।

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे इत्युक्तेः ।

---

(क) भा० पु० स्त० वर्गस्य इति पा० । (ख) भा० पु० स्त० कर्माय इति पा०।

सिद्धान्ते द्विविधं तत्त्वं चिदचिच्च तथापि वै।
तस्य तस्य विभेदेन विविधं मुनयो विदुः ॥३८॥

अतः सद्गुणशालिनां तु तत्त्वजिज्ञासैव परो लाभस्ततो भक्तिलाभात् ॥ ३७ ॥

एवमीश्वरादीनि पुराणोक्तानि षट् तत्त्वानि उक्त्वा तन्निर्णयमाह । सिद्धान्ते इति । सिद्धान्ते तु चिदचिदिति द्विविधमेव तत्त्वम् । न च जीवेश्वरयोः किमौपाधिको भेदः स्वाभाविको वा । नाद्यः । भेदव्यपदेशादिति सूत्रोक्तेः । ऋतं पिबन्तौ सुकृतस्य जीवेश्वराविति ।

तदवान्तरफलस्य धर्मैकान्तस्यार्थस्य कामोऽपि लाभो न हि स्मृतो मुनिभिरिति शेषेणार्थः । तस्य त्वेकस्मिन् धर्मे चैवान्तः लाभः । तथार्थस्यावान्तरफलस्य कामस्य विषयसेवनस्यापीन्द्रियप्रीतिर्लाभो न भवति । किंतु यावता कामेन जीवेत देहनिर्वाहो भवेत्तावानेव कामस्य लाभः । अयं भावः । क्षुन्निवृत्तिस्तु शुष्कान्नमापि दिव्यान्नेन च भवेत् । शीतादिनिवृत्तिरपि कुचेलेन च कौशेयस्वर्णतैलं चाभत्वा दिव्याम्बरार्थे द्रव्यव्ययो न कार्यस्तस्य तु धर्मार्थ एव स्युक्तः । जीवस्य जीवनस्यापि तत्त्वजिज्ञासैव फलम् । न तु कर्मभिरिह योऽर्थः ॥

द्वा सुपर्णा सयुजौ सखायौ समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीती-

त्यादिश्रुतिभ्यः। वास्तवभेदात्तु तत्त्वत्रयमेव। बाह्यात्मा अन्तरात्मा परमात्मेति श्रुतेरिति भाष्यम्। श्रुतिपूर्वपक्षसिद्धान्तनिर्णयात्। प्राकृतदिव्यकालाचित्तत्त्वानां वास्तवभेदेऽप्यचिदेकमेव तत्त्वं भवता स्वीकृतम्। तथा तयोरपि स्वाभाविकभेदेऽपि चिदेकमेवाहुर्मुनयः।

*चेत्यचितोर्न तृतीयमिति शाण्डिल्यविद्यायाम् (१)॥

ननु तयोः सम्बन्धस्तृतीय एवेति चेन्न। मिथोऽपेक्षणादुभयमित्युक्तेः (२)॥

यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम्।
क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभेति।

अणुर्बृहत्कृशः स्थूलो यो यो भावः प्रसिध्यति।
सर्वो ह्युभयसंयुक्तः प्रकृत्या पुरुषेण चे-

(१) चेत्येत्यादिशाण्डिल्यविद्यासूत्रस्यार्थः॥ चेतयितुं योग्यं चेत्यमचित्तत्त्वमित्यर्थः। चिच्चेतन्यं ताभ्याम् तयोर्वा न तृतीयम्॥

(२) मिथ इत्यादिशाण्डिल्यसूत्रोपरि स्वप्नेश्वरभाष्यम्। ब्रह्म प्रकृतिश्च उभयमपि कारणम्। परस्परं

*सूत्रपाठस्तु चेत्याचितोर्न तृतीयमितीदृशः॥

स्याभ्याम् । अजामेकाम् । अजो ह्येक इत्यादिश्रुतेः।
अन्यथा सर्वत्र तन्नियमाभावात् । ईश्वरदेहे तत्त्वत्रयेऽनीश्वरत्वप्रसङ्गः । तद्विशेषाभावाद् । अतो नियमाभाव एव । यत्तत्तस्य ।

चितोऽचितो विभेदेन मुनयो विविधं विदुः ॥
नैतदेवं यथात्थ त्वं यदहं वच्मि तत्तथा ।
एवं विवदतां हेतुः शक्तयो मे दुरत्यया इत्युक्तेः ॥

विविधं तु चित्तत्त्वमपि द्विविधम् । आत्मानात्माणुबृहद्दादिविद्भेदात् । अनात्मनमपि द्विविधम् । ईश्वरपरमेश्वरभेदात् । यतः परमेश्वराभेदेश्वरस्वीकारं विनैकोऽहं बहु स्यामिति श्रुत्या द्वैतावधारणाद्वैकुण्ठादीनामनित्यत्वप्रसङ्गोऽतस्तत्त्वम् ।

ब्रह्मणोऽशभूतस्तथैनरो भोक्तेति श्रुतेः (१) ॥

चेतनाचेतनाभ्यां स्वज्ञानाय स्वशक्तिविषयाय चापेक्षितत्वात् किं कस्यापेक्षकमितीति(क) ॥

( वस्तुनि द्वैरूप्यस्यासिद्धेः उभयोः प्रकृतिपुरुषयोः सम्बन्धस्य चित्त्वमचित्त्वं वा आस्थेयम् । तथा सति सम्बन्धेन न तृतीया जातिः क्वचित् ) (ख) ॥

(१) ब्रह्मण इत्यादिश्रुतेरर्थः ॥ ब्रह्मणः परमेश्वर-

( क ) आ० पु० स्त० एतद्भाष्यन्नैव दृश्यते ।
(ख) कोष्ठकान्तर्गतमाद० पु० स्त० मा० ।

परमेश्वरस्तु श्रीकृष्णो ब्रह्मादिशब्दैरनुशब्दित एक एव ।

कृष्णो ह परो देवः षडैश्वर्यपूर्ण इति ।

कृष्णो वै ब्रह्म(क) शाश्वतमिति

सच्चिदानन्दरूपाय कृष्णायाक्लिष्टकारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे इति ।

योऽसौ श्रीकृष्णः पूर्वतोऽनुवर्त्तत इत्यादि श्रुतिभ्यः ॥
ईश्वरोऽपि द्विविधः । स्वतन्त्रपरतन्त्रभेदात् । स्वतन्त्र ईश्वरस्तु प्रकृतिनियन्ता पुरुषः । नारायणाख्यो वा । नारायण एक एवाग्र आसीन्न ब्रह्मा नेशान इति श्रुतेः ॥ परतन्त्रेश्वरतत्त्वं चतुर्विधम् । श्रीसंकर्षणाजभवभेदात् । तत्र पूर्वोक्तरीत्या चतुराननपञ्चाननयोस्तु क्वचित्परतन्त्रेश्वरत्वं क्वचिज्जीवत्वम् । यदा यस्मिन्कल्पे ब्रह्मत्वभवत्वयोग्यपुण्यजीवाभावे तत्तद्रूपो नारायणो भवति तदा परतन्त्रेश्वरत्वम् । यर्हि यस्मिन् कल्पे जीवौ ब्रह्मरुद्रौ भवतस्तदा तयोरावेशावतारत्वं जीवत्वमित्यर्थः । गुणावृतं चित्तत्त्वं तु जीवः । स तु त्रिविधः । बद्धमुमुक्षुमुक्तभेदात् । बद्धस्तु त्रिविधः । नित्यबद्धबद्धविषयिभेदात् । नित्यबद्धस्तु नित्यसंसारी ।

---

स्यांशभूतो जीवस्तु कर्मफलभोक्ता । इतरस्तु ईश्वरस्त्वभोक्ता । परमेश्वराभेदत्वादित्यर्थः ॥

---

(क) आ० पु० न० ब्रह्मैव इति पा० ।

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिमिति
भगवदुक्तेः ॥

तल्लक्षणमाह ।
देहे यस्यात्मबुद्धिश्च देहधीश्चिति चात्मनि ।
स एवागमसिद्धान्तैः(क)र्नित्यबद्ध इति स्मृत इति ॥
त्वामात्मानं परं मत्वा परमात्मानमेव च ।
आत्मा पुनर्बहिर्मृग्य अहोऽज्ञजनताज्ञतेति
श्रीभागवतोक्तेः (१) ॥
देहात्मध्यानयोगेन शिश्नोदरपरायणः ।
स बद्धः कथितः सद्भिः सत्सङ्गादास्तिको भवेदिति

तयोर्भेदः ।
देहात्मवादिनां पुंसामपि राजन्यसत्तम ।
यथा देहः प्रियतमस्तथा न ह्यनु ये च तमित्युक्तेः ॥

विपर्यिणां लक्षणमाह ।
इष्ट्वेह देवता यज्ञैर्गत्वा रंस्यामहे दिवि ।
तस्यान्त इह भूयास्म महाशाला महाकुला इति

कृतनिश्चयाः। लोकान्तरे आस्तिकबुद्ध्या विपर्यिण इत्यर्थः॥

मुमुक्षुर्जीवतत्त्वमपि चतुर्विधम् । कर्मामिश्रवैराग्य-
मिश्रज्ञानमिश्रशुद्धभक्त्याश्रयभेदात् । तल्लक्षणम् ।

(१) त्वामात्मानमित्यादिश्लोकस्यार्थः॥ [illegible]

(क) आ० पु० स० सिद्धान्ते इति पा० ।

ब्रह्मादिस्तम्बपर्यन्तं ब्रह्माण्डं निरयोपमम् ।
मत्वा कृष्णं भजेत्सोऽयं मुमुक्षुः कथितो बुधैरिति ।
यो दुस्त्यजान्दारसुतान्सुहृद्राज्यं हृदिस्पृशः ।
जहौ युवैव मलवदुत्तमश्लोकलालस इत्युक्तेः ॥
तत्र मार्कण्डेयादयः कर्ममिश्रभक्त्याश्रयाः ।
एवं तपःस्वाध्यायपरो वर्षाणामयुतायुतम् ।
आराधयन्हृषीकेशं जिग्ये मृत्युं सुदुर्जय-
मिति सूतोक्तेः ।
मुचुकुन्दादयो वैराग्यमिश्रभक्त्याश्रयाः ।
तस्माद्विसृज्याशिष ईश सर्वतो
रजस्तमःसत्त्वगुणानुबन्धनाः ।
निरञ्जनं निर्गुणमद्वयं परं
त्वां ज्ञप्तिमात्रं पुरुषं व्रजाम्यहमिति
तस्योक्तेः । एवं ज्ञानगुणं मायिकं मत्वा ज्ञप्तिमात्रं

---

योगिन(क)मात्मानं(ख) परं देहादिकमेवात्मानं मत्वा पुनस्तैरात्मा बहिर्मृग्यो भवति । अहो आक्रोशे । यतो यथादित्ये राहोरध्यासं राहावादित्याध्यासं कृत्वा पुनरादित्यं मृगयतां स कदापि साक्षात्कारो न भवति तथा तैः परस्पराध्यासेन न कदापि कुत्रापि चात्मा लभ्यते । अहो नित्यबद्धाः ॥

---

(क) आ० पु० न्त० योगिनाम् इति पा० ।
(ख) आ० पु० न्त० परं देहादिकं मत्वा इत्यधि० वर्त्त० ।

ज्ञानरूपमेव शुद्धं ब्रह्म ज्ञात्वा तद्देहेऽपि वैराग्यम् । तेन दोषेण तस्य मुचुकुन्दस्य नरकवासो युक्तः(क) ।

योऽनादृतो नरकभाग्भिरसत्प्रसङ्गैरित्युक्तेः(ख) ।

तथापि(ग) दयासिन्धुना भगवता निजदर्शनफलं दर्शयता गर्भवासो दत्तः । ज्ञानमिश्रभक्त्याश्रयाः प्रह्लादादयः ।

ततो हरौ भगवति भक्तिं कुरुत दानवाः ।
आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे इति

तस्यैवोक्तेः । शुद्धभक्त्याश्रया मुमुक्षवस्तु तस्मिन्नेव जन्मनि श्रीकृष्णसाक्षात्कारात्कृतार्था भवन्त्यतो मया न निरूपितास्तेषां तु भगवद्वियोगश्रवणेन प्राणत्याग एव श्रूयते ।

पृथाप्यनुश्रुत्य धनञ्जयोदितं
नाशं यदूनां भगवद्गतिं च ताम् ।
एकान्तभक्त्या भगवत्यधोक्षजे
निवेशितात्मोपरराम संसृतेरित्युक्तेः ।

मुक्तजीवतत्त्वमपि त्रिविधम् । नित्यमुक्तमुक्तकैवल्यमुक्तभेदात् । कैवल्यमुक्तजीवास्तु पूतनाघासुरबकासुरादयः । द्वेषभयादिभ्यो भगवत्यावेशितधियस्तमसः पारे कैवल्यनाम्नि कालपुरुषस्थाने जन्ममरणातीता भगवत्साक्षात्कारानन्दवर्जिता मोदयुक्ता निवसन्ति । मुक्तास्तु चतुर्विधाः । पूर्वोक्तरीत्या कर्ममिश्रादिभक्त्याश्रयभेदात् । तेषां सामान्यलक्षणम् ।

(क) आ० पु० स्त० अपि इत्यधिकं वर्त्तते । (ख) आ० पु० स्त० एतच्छ्लोकार्द्धं ना० । (ग) आ० पु० स्त० तथापि इति ना० ।

न मनो भगवद्रूपाद् देहादौ कुत्र कर्ह्यपि ।
यस्य याति स वै मुक्तो मुक्तिदः कृष्णवल्लभ इति ।

कर्ममिश्रभक्त्याश्रयास्तु जनकादयः ।

कर्मणैव हि संसिद्धिमास्थिता जनकादय
इति श्रीभगवदुक्तेः ।

वैराग्यमिश्रभक्त्याश्रया दत्तात्रेयादयः ।

न ह्यङ्गाजातनिर्वेदो देहबन्धं जिहासति इति ।
एवं संजातवैराग्यो विज्ञानालोक आत्मनि ।
विचरामि महीमेतां मुक्तसङ्गोऽनहङ्कृतिरिति तदुक्तेः ॥

ननु स तु देवोऽवतारेषु गणितः ।

षष्ठमत्रेरपत्यत्वं वृतः प्राप्तोऽनसूययेत्युक्तेः ।

कथं मुक्तजीवेषूच्यत इति चेन्सत्यम् । किन्त्वावेशावतारः । अतस्तस्मिन् जीवत्वन्नेश्वरत्वम् ।

तृष्णया भववाहिन्या योग्यैः कामपूरया ।
कर्माणि कार्यमाणोऽहं नानायोनिषु योजित इति

तस्यैवोक्तेः । ज्ञानमिश्रभक्त्याश्रयास्तु सनकसनातनादयः ।

तत्त्वन्नरेन्द्र जगतामथ तस्थुषां च
देहेन्द्रियार्थधिषणात्मभिरावृतानाम् ।
यः क्षेत्रवित्तपतया हृदि विष्वगाविः
प्रत्यक् चकास्ति भगवांस्तमवेहि(क) सोऽस्मीति
तदुक्तेः ।

(क) व्या० पु० न्त । मवैहि इति पा० ।

शुद्धभक्त्याश्रयाः शुकोद्धवादयः ।

इत्थं स्म पृष्टः स तु बादरायणि-
स्तत्स्मारिताभन्तहृताखिलेन्द्रियः ।
कृच्छ्रात्पुनर्लब्धवहिर्दृशिः शनैः
प्रत्याह तं भागवतोत्तमोत्तमामिति सूतोक्तेः ॥

शुद्धभक्तियोगं विना शुकस्य तादृश्यवस्था न संभवति ।

नमोऽस्तु ते महायोगिन्प्रपन्नमनुशाधि माम् ।
यथा त्वच्चरणाम्भोजे रतिः स्यादनपायिनीति
ज्ञानमाप्त्यनन्तरमुद्धवोक्तेः (१)॥

ननु शुद्धभक्त्याश्रयास्तु व्रजजना इति चेत्सत्यम्। किंतु ते(क) नित्यसिद्धास्तेषां प्रादुर्भावस्तु भगवत्प्रादुर्भाव इवातस्तेषां भाग्यं त्वनिर्वचनीयं वाचोऽगोचरत्वात् ।

(१) नमोऽस्त्वित्यादिश्लोकस्यार्थः ॥ हे महा-योगिन् योगिनां मोहकारक ते नमोऽस्तु । अन्यसेवाश्रत्त्वभावात् । यत्त्वयोक्तं मया ज्ञानं श्रुतं तत्त्वन्यबोधाय । न तु तेन किमपि मे प्रयोजनम् । यर्हि त्वं मां निजभृत्यम्मन्यसे तर्हि यथा त्वच्चरणाम्भोजेऽनपायिन्यविनाशिनी रतिर्भक्तिः स्यात्तथा प्रपन्नं मामनुशाधि शिक्षय मे तु भक्तिरेव परमार्थं इति भावः ।

(क) म्रा० पु० न्त० मु इत्यधि० वर्त्त० ।

यत्पादपांशुर्बहुजन्मकृच्छ्रतो
धृतात्मभिर्योगिभिरप्यगम्यः ।
स एव यद्दृग्विषयः स्वयं स्थितः
किं वर्ण्यते दिष्टमहो व्रजौकसामिति (१) ॥

व्रजौकसामिति सामान्यपदेन गवादीनामपि ग्रहणं सुखविशेषाभावात् । तत्रापि गोपिकानां सुखं तु रमादिभिरप्यलभ्यम् ।

(१) यत्पादेत्यादिश्लोकस्यार्थः ॥ यद्यस्य श्रीकृष्णस्य पादपांशुः पादरजः । पांशुरित्येकवचनम् । योगिभिरिति बहुवचनान्तं पदम् । यत्पादपांशुर्योगिभिरप्यलभ्यः । ननु तदणुत्वादलभ्यत्वेन न तन्माहात्म्यमधिकं जातम् । न च योगिनां न्यूनत्वं स्थूलत्वात् । यथा शर्कराकणस्य(क) सूक्ष्मत्वान्मृगयतां गजानां तदलभ्यत्वेन न माहात्म्यहानिस्तत्राह । कथंभूतैर्योगिभिः । बहुजन्मकृच्छ्रतो धृतात्मभिः बहुजन्मसु तपःसमाध्यसङ्गकृच्छ्रतो धृतश्चासावात्मा मनो यैस्तैस्तेषां परमाणुभिर्मनोभिरलभ्य इत्यर्थः । स एव श्रीकृष्णः यद् येषां व्रजौकसां दृग्विषयः चर्मचक्षुर्गोचरो जातः । किं तेषां प्रयत्नाधिक्यात् । न हि न हि । स्वयं स्थितः स्वयमेव कृष्णो दृग्विषयः स्थितस्तेऽष्वनुरागात्तत्तस्माद्भाग्यं किं वर्ण्यते ॥

(क) पा० पु० ण० स्य इति ना० ।

नेमं विरञ्च्यो न भवो न श्रीरप्यङ्गसंश्रया ।
प्रसादं लेभिरे गोपी यत्तत्प्राप विमुक्तिदादित्युक्तेः ।

न केवलं यशोदया तस्मात्स प्राप्तः किन्तु सर्वाभिर्व्र-
जवनिताभिः ।

नायं श्रियोऽङ्ग उ नितान्तरतेः प्रसादः
स्वर्योषितां नलिनगन्धरुचां कुतोऽन्याः ।
रासोत्सवेऽस्य भुजदण्डगृहीतकण्ठ-
लब्धाशिषां य उदगाद् व्रजवल्लवीना-
मित्युक्तेः (१) ॥

नित्यमुक्तास्तु गोलोकवैकुण्ठवासिनः श्रीदामसुदामवि-
ष्वक्सेनादयो दासदासीभावगताः । न कदापि तेऽविद्यावृता
जाताः । जयविजययोः पतनं तु रमावैकुण्ठाद् । द्वाःस्थौ कृतौ
तेन रमाप्रियेणेति कार्त्तिकमाहात्म्योक्तेः । न तु नित्यवैकु-
ण्ठाद् । यतो बलिबन्धनप्रसङ्गे श्रीवामनपरिचर्यायां तयोः श्र-
वणम् । अतस्तन्नामानः षोडशषोडशपार्षदाः क्षीरोदश्वेतद्वी-
पवैकुण्ठादिष्वासते । नित्यवैकुण्ठे सर्वेषामपि गत्यभावाद्रमा-
वैकुण्ठादेव तथोस्तत्त्वं ज्ञातव्यम् ।

(१) नायमित्यादिपद्यस्यार्थः ॥ अस्य श्रीकृष्णस्य भुजदण्डगृहीतकण्ठलब्धाशिषां व्रजवल्लवीनां यः प्रसाद उदगादाविर्बभूव सोऽयमित्यर्थः । अन्यत्स्पष्टम् ॥

रमया प्रार्थ्यमानेन वैकुण्ठो येन निर्मित इत्युक्तेः ।
नित्यवैकुण्ठवासिनां प्रादुर्भावस्तु भगवता सह ॥

यथा भगवतः । अचित्तत्त्वमपि त्रिविधम् । प्राकृतकाल-दिव्याचिद्भेदात् । दिव्यं भगवल्लोकस्थ(क)वृक्षादिभेदेऽप्येक-विधम् । यतश्चैतन्यायते । विशुद्धसत्त्वात्मकत्वात् । माया-गुणातीतत्वाच्च । कालाचिदपि स्थूलसूक्ष्ममध्यभूतवर्त्तमान-भविष्यशुभाशुभमिश्रितभेदेऽप्येकविधं विभुत्वात् । प्रकृतौ भवं प्राकृतम् । प्रकृतेरिदं वा प्राकृतम् । तदपि सप्तविधम् । पृथि-व्युदकानिलानलाकाशाहङ्कारमहत्तत्त्वभेदात् । प्रकृतिस्तु माया । मायां तु प्रकृतिं विद्यादिति श्रुतेः । सा विद्याविद्याङ्गा गु-णात्मिका महत्तत्त्वादीनां कारणभूतैकविधा विभ्वी चित्ता-त्मिका । गुणास्तु कर्मस्वभावात्मकाः सत्त्वादयः । महत्त-त्त्वमप्येकविधं । सत्त्वप्रधानं बुद्धिदैवत्यम् । अहङ्कारस्तु त्रि-विधः वैकारिकतैजसतामसभेदात् । करणेशा देवास्तु वैकारि-काः । मनोऽपि । कर्मज्ञानमयानीन्द्रियाणि तु तैजसानि । बु-द्धिश्च । भूतानि पृथिव्यन्तानि तामसानि । पृथिव्यपि द्विधा । अणुबृहद्भेदात् । बृहत्त्रिधा । देहेन्द्रियविषयभेदात् । एवं वाय्वन्तानि भूतानि ज्ञेयानि । आकाशस्तु विषयेन्द्रियभेदेऽ-प्येकविध एव विभुत्वात् । पञ्चीकरणादुत्पत्तिलयाच्च । स्थू-लदृष्ट्याणुत्वप्रतीतेऽपि विभुरेव । अव्यक्तद्रव्यत्वात्सर्वव्याप-

(क) आ० पु० न० । लोकस्थ इति पा० ।

कत्वाच्च । पृथिव्यादीनि तत्त्वानि दशोत्तराधिकानि मकृत्यन्तानि ज्ञातव्यानि ।

पृथिवी त्वेकोनपञ्चाशत्कोटियोजनविस्तृता ।

तेषां लक्षणानि भागवते ।

यत्तत्सत्त्वगुणं स्वच्छं शान्तं भगवतः पदम् ।
स्वच्छत्वमविकारित्वं शान्तत्वमिति चेतसः ।

वृत्तिलक्षणमिति ।

द्रव्यस्फुरणविज्ञानमिन्द्रियाणामनुग्रहः ।
संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ।
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितः पृथगिति ॥
कर्तृत्वं करणत्वं च कार्यत्वं चेति लक्षणम् ।
शान्तघोरविमूढत्वमिति वा स्यादहङ्कृतेरिति (१) ॥
अर्थाश्रयत्वं शब्दस्य द्रष्टुर्लिङ्गत्वमेव च ।
तन्मात्रत्वं च नभसो लक्षणं कवयो विदुरिति ॥
भूतानां छिद्रदातृत्वं बहिरन्तरमेव च ।
प्राणेन्द्रियाणां धिष्णत्वं नभसो वृत्तिलक्षणमिति ।
मृदुत्वं कठिनत्वं च शैत्यमुष्णत्वमेव च ।
एतत्स्पर्शस्य स्पर्शत्वं तन्मात्रत्वं नभस्वत इति ॥

(१) कर्तृत्वमित्यादिश्लोकस्यार्थः ॥ त्रिगुणात्मकोऽहङ्कारस्तस्मात्सत्त्वाच्छान्तत्वम् । इन्द्रियदेवरूपेण कर्तृत्वं च । रजसो घोरत्वमिन्द्रियरूपेण करणत्वं च । तमोगुणान्मूढत्वं देहरूपेण कार्यत्वमपीत्यर्थः ॥

चालनं व्यूहनं प्राप्तिर्नेतृत्वं द्रव्यशब्दयोः ।
सर्वेन्द्रियाणामात्मत्वं वायोः कर्माभिलक्षणमिति ॥
द्रव्याकृतित्वं गुणता व्यक्तिसंस्थात्वमेव च ।
तेजस्त्वं तेजसः साध्वि रूपमात्रस्य वृत्तय इति ॥
द्योतनं पाचनं पानमदनं हिममर्दनम् ।
तेजसो वृत्तयस्त्वेताः शोषणं क्षुत्तृडेव चेति ।
कषायो मधुरस्तिक्तकट्वम्ल इति नैकधा ।
भौतिकानां विकारेण स एकोऽपि विभिद्यत इति ।
क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोन्दनम् ।
तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमा इति ॥
करम्भपूतिसौरभ्यशान्तोग्राम्लादिभिः पृथक् ।
द्रव्यावयववैषम्याद् गन्ध एको विभिद्यत इति ॥
भावनं ब्रह्मणः स्थानं धारणं सद्विशेषणम् ।
सर्वसत्त्वगुणोद्भेदः पृथिवीवृत्तिलक्षणमिति (१) ॥

ब्रह्माण्डोत्पत्तिस्तु । प्राकृतप्रलयान्ते सृष्ट्यादावीश्वरात्पृथग्दृश्याभावे स ईश्वरः स्वात्मानमसन्तमिव मन्यमानः अकामयत् । एकोऽहं बहु स्यामिति । यदैवमकामयत्तदैव त-

(१) भावनमित्यादिश्लोकस्यार्थः ॥ ब्रह्मणः भावनं प्रतिमादिरूपेण साकारतापादनम् । स्थानं ब्रह्मादिविलक्षणतया निरपेक्षेण स्थितिः । धारणमुपलक्षणाधारत्वमित्यर्थः ॥

स्मान्मायाकालकर्मस्वभावजीवा भिन्ना जातास्तत ईश्वराधिष्ठितात्कालान्मायागुणानां क्षोभः। ततः क्षुब्धगुणायां मायायां स एवेश्वरो वीर्यवाञ्चिद्रूपं वीर्यमाधत्त । जीवेनात्मना प्रविश्य नामरूपे व्याकरवाणीति श्रुतेः । ततः पुरुषाधिष्ठितात्स्वभावतस्तस्य वीर्यस्य रूपान्तरापत्तिः। तत ईश्वराधिष्ठितात्कर्मणो महत्तत्त्वस्य जन्म । ततस्त्रिविधोऽहङ्कारः । सात्त्विको राजसस्तामसः। तामसाच्छब्दः। तस्मा(क)च्छब्दवन्नभस्तस्मात्स्पर्शवान्वायुः। एवम्भूतोत्पत्तिः । तस्माद् ब्रह्मणोऽव्यक्तमेवाक्षरम्। तस्मादक्षरान्महन्महतो वै अहङ्कारः। तस्मादेवाहङ्कारात्पञ्च तन्मात्राणि । तेभ्यो भूतानीति श्रुतेः ।

मम योनिर्महद् ब्रह्म तस्मिन्गर्भं दधाम्यहम् ।
संभवः सर्वभूतानां ततो भवति भारतेति

श्रीभगवदुक्तेरपि ॥

एवं यस्माद्यस्माद्यस्य यस्योत्पत्तिस्तस्मिंस्तस्मिंस्तत्तल्लयात्प्रलयः। सोऽपि चतुर्विधः । नित्यनैमित्त्यप्राकृतात्यन्तिकभेदात् । जीवस्य जाग्रदभावो नित्यप्रलयः। देहान्तरूपश्चापि। ब्रह्मणोऽह्नोऽभावो नैमित्त्यम् । ब्रह्मणः शतवार्षिकः प्राकृतः। भगवद्भक्त्या विवेकोद्भव आत्यन्तिकः । पुनर्जन्माभावात् । ननु सदैव( ख ) सौम्येद( ग )मग्र

(क) तामसा इति भाँ० पु० स्त० पा० । (ख) सदेव इति तु भ० ति० पा० । (ग) सोम्येद इति तु भ० पा० ।

आसीदिति श्रुत्याऽद्वैतावधारणान्न हि चैतन्याचैतन्ये तत्त्वे। तत्त्वन्त्वेकमेव ब्रह्म। एकमेवाद्वितीयं ब्रह्मेति( क ) श्रुतेः सजातीयविजातीयस्वगतभेदनिषेधाद्विति चेन्न । पूर्वोक्त्या तदा विश्व( ख )सदात्मकत्वात्तद्भिन्नदृश्याभावात्सदेव सौम्येदमग्र आसीदित्युक्तत्वात् । इदं सदेवासीदित्युक्तेनैवाद्वैताभावमेवोक्तं भवति। तत्समा(ग)धिकयोर्निषेधार्थमे(घ)वाद्वितीयं ब्रह्मेत्युक्तम्। अन्यथा सृष्ट्यादौ मायोत्पत्तिस्वीकारे त्वनिर्मोक्षप्रसङ्गः स्यादतश्चैतन्याचैतन्ये उभे तत्त्वे नित्ये।

प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ।
विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवानिति

भगवदुक्तेः (१) ॥

नन्वनादिं प्रकृतिं विद्धीत्यनेनानादिसान्ता ज्ञेया। न त्वनाद्यनन्ता चेन्न। अनाद्यनन्तव्यवहारदर्शनात्। अन्यथा सहपाठात्पुरुषान्तत्वप्रसङ्गेन देहात्मवादोपपत्तिः । अतोऽनादी-

(१) प्रकृतिमित्यादिपद्यस्यार्थः ॥ प्रकृतिरचित्तत्त्वम्पुरुषश्चित्तत्त्वं ताविमौ प्रकृतिपुरुषावनादी त्वं विद्धि। गुणांश्च सत्त्वादीन्विकारान् विषयेन्द्रियादींस्तु प्रकृतिसंभवान्विद्धि । यद्वा तानप्यनादीन्विद्धि ॥

(क) आ० पु० स्त० श्रुतेः इति पा०। (ख) आ० पु० स्त० विश्वस्य इति पा०। (ग) आ० पु० स्त० समाना इति पा०। (घ) आ० पु० स्त० मेकमे इति पा०।

त्युपलक्षणम् । अनाद्यनन्तां प्रकृतिं विद्धीत्यर्थः । तेषु पूर्वोक्ततत्त्वेषु । अशितमन्नं त्रिधा( क ) विधीयते । तस्य यः स्थविष्ठो धातुस्तु(ख) पुरीषं भवति। यो मध्यमः स मांसम् । योऽणिष्ठस्तन्मनः । पीता आपस्तस्य यः स्थविष्ठो धातुस्तन्मूत्रः ( ग ) । यो मध्यमस्तल्लोहितम् । योऽणिष्ठः स प्राणः । अशितन्तेजस्त्रि(घ)धा विधीयते । तस्य यः स्थविष्ठो धातुरस्थि । मध्यमो मज्जा । अणिष्ठो वागिति च्छान्दोग्यश्रुत्याकाशानिलयोरुत्पत्त्यश्रवणादन्नापस्तेजआत्मभेदाच्चतुर्विधं तत्त्वमाहुः केचित् । केचिदात्मपरमात्मभेदेन पञ्चविधम् । केचित्तस्माद्वा एतस्मादात्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी। पृथिव्या ओषधयः । ओषधिभ्योऽन्नमिति श्रुत्या पञ्चभूतात्मभेदात्षड्विधम् । केचिदात्मपरमात्मभेदेन सप्तविधं माहुः । अपरे आत्मनस्तत्त्वाश्रयत्वं मत्वा पूर्वोक्ताष्टप्रकृतिरेवाष्टतत्त्वानि । केचिद् भूरापस्तेजोऽनिलाकाशदिक्कालात्ममनोभेदान्नव तत्त्वानि । अपरे तानि परमात्ममिलितानि दश तत्त्वानि आहुः । केचित्पञ्चभूतपञ्चविषयात्मभेदादेकादश तत्त्वानि । अपरे मनोमिलितानि तानि द्वादश तत्त्वानि । केचिदात्मपरमात्मभेदात् त्रयोदश तत्त्वानि । एवं केचित्केचित् षोडशसप्तदशचतुर्विंशतिपञ्चविंशतिषड्विंशतिसप्तविंशत्य-

(क) श्रु० पा० त्रेधा इति । (ख) श्रु० पा० धातुस्तत् इति ।
(ग) श्रु० पा० मूत्रमिति । (घ) श्रु० पा० त्रेधा इति ।

भक्तिरूपगुणाङ्गानि वितन्वन्तु सतां हि शम् ।
वर्णितान्यपि दासेन प्रियाया भक्तिमद्धियाम्॥३६॥

इति श्रीसुसिद्धान्तोत्तमे प्रियादासाचार्य-
विरचिते द्विविधभक्तिवर्णनो नाम
द्वितीयो विश्रामः ॥२॥

ष्टाविंशतिषट्त्रिंशति(?) तत्त्वानि प्राहुः सिद्धान्ते तु द्विविधमेव तत्त्वम् ॥ ३८ ॥

भक्तितत्त्वमुपसंहरति । भक्तिरूपगुणाङ्गानीति ॥३९॥

इति श्रीअनुत्तमायां प्रियादासाचार्यविरचितायां
द्वितीयो विश्रामः ॥ २ ॥

श्रीहरये नमः ॥



श्रीहरये नमः ॥

ज्ञात्वैवं परया भक्त्या सेव्यो वै भगवान्परः ।
साद्भिर्मुमुक्षुभिर्भक्तैस्तत्कामैः कामवर्जितैः ॥१॥
कामशोकमदक्रोधलोभमोहादयः खलाः ।
तत्सेवाबाधकास्ते तु तस्माद्धेया विदूरतः ॥२॥

श्रीराधावल्लभो जयति ॥

(क) जीवो वै भगवद्दासः सर्वावस्थासु नित्यशः ।
तदेवास्मिंस्तु तत्त्वं हि विश्रामे तस्य कथ्यते(ख) ॥

ज्ञात्वैवमिति द्वाभ्याम्(ग) । एवं पूर्वोक्तप्रकारेण ज्ञात्वा मुमुक्षुभिर्भगवान्परः परया भक्त्या सेव्यः । नापरया । नान्यो देवोऽपीत्यर्थः । कथंभूतैः । तत्कामैः भगवत्कामैः । अतः कामवर्जितैः । काम इत्युपलक्षणम् । कामादिभिर्विवर्जिता ये तैः सद्भिः ॥ १ ॥

कुतः । यतः कामादयः खलाः । तत्तस्य भगवतः सेवाबाधकाः । तस्मात्ते विदूरतो हेयाः त्याज्याः । तेषां बाधकत्वमाह भागवते । तावत् कामस्य दोषं माहुर्देवाः ।

---

(क) भा० पु० त्व० द्वितीये विश्रामे भक्तितत्त्वं निरूपयेदानीं कर्तव्यतामाह इत्यपि० वर्ति० । (ख) भा० पु० त्व० अयं श्लो० ना० । (ग) भा० पु० त्व० द्वाभ्याम् इति ना० ।

सत्यं दिशत्यर्थितमर्थितो नृणा-
न्नैवार्थदो यत्पुनरर्थिता यतः ।
स्वयं विधत्ते भजतामनिच्छता-
मिच्छापिधानं निजपादपल्लवमिति (१) ॥

न केवलं सकामा याचकतुल्याः । किन्तु परमनिन्द्या इत्याह स्वयं भगवान् ।

मां प्राप्य मानिन्यपवर्गसंपदं
वाञ्छन्ति ये संपद एव तत्पातिम् ।

(१) सत्यं दिशतीत्यादिश्लोकस्यार्थः ॥ तदुपासनयार्थितः प्रार्थितो भगवान्नृणामर्थितं स्त्रीपुत्रादिकं दिशति ददातीति सत्यम् । किं तु स भगवानार्थदः परमार्थदो न भवति । य(क)त्प्राप्त(ख)कामात्पुनरर्थिता नित्ययाच्ञा(ग) भवति । अयं भावः(घ)। द्रव्यलाभे स्त्र्यर्थं भगवन्तं प्रार्थयते । तल्लाभे पुत्रायैवं भगवानपि कामयाचकत्वं दत्वा कामानार्थिनं करोति । ननु नार्थितश्चेत्किमपि न दद्यादित्याशङ्क्याह । अनिच्छतां तत्पदाम्बुजसाक्षात्कारमप्यनिच्छतान्तु निजपादपल्लवं स्वयं भगवान्परमौत्सुक्येन हठेनापि विधत्ते । कथंभूतम् । इच्छापिधानम् इच्छानामाच्छादनम् । सर्वकामदं कल्पवृक्षमित्यर्थः ॥

(क) द०पु० स्त० यतो इति पा०। (ख) आ० पु० स्त० प्राप्ति इति पा०। (ग) आ०पु० स्त० याची इति पा०। (घ) आ० पु० स्त० यत् इत्यधि० वर्त०।

ते मन्दभाग्या निरयेऽपि ये नृणां
मात्रात्मकत्वान्निरयः सुसङ्गमः (१) ॥

अतः परमभागवतास्तु किमपि नेच्छन्ति । तदनुभवमाह प्रह्लादवाक्येन ।

यदि रासीश मे कामान्वरांस्त्वं वरदर्षभ ।
कामानां हृद्यसंरोहं भवतस्तु वृणे वरमिति (२) ॥

(१) मां प्राप्येत्यादिश्लोकस्यार्थः ॥ हे मानिनि भैष्मि मां परमेश्वरं प्राप्य प्रसाद्य ये केवलं संपदो मत्सेवां मां च भगवत्परिचर्यामपि विहाय विषयान्वाञ्छन्ति ते मन्दभाग्या ज्ञेयाः । यतो ये विषयाः शब्दस्पर्शरूपरसगन्धात्मका निरये नरकेऽपि श्वविड्वराहखराजयोनावपि स्युः । तत्र स्त्रीपुत्रादयोऽप्यत्र सिद्धा इत्यर्थः । तस्मात्तैः सह(क) (ख)मात्रात्मकत्वा(ग)त्सुसङ्गमः । यतः निरयः निरयतुल्यः । दुःखप्रदत्वात् । तेषां मन्दभाग्यत्वमाविष्कुरुते स्वविशेषणेन । कीदृशं माम् । तत्पतिं सर्वसंपदां पतिम् । यतोऽपवर्गसंपदमपवर्गेण सह संपदो यस्मिंस्तं मां पुरमसुधानिधिं प्रसाद्य विषयगरलं स्पृहयन्तीत्यर्थः ॥

(२) यदीत्यादिपद्यस्यार्थः ॥ हे वरदर्षभ वरदश्रेष्ठ वरदानां ब्रह्मादीनां पते यदि मे कामान्वरान्दित्सयाभिल-

(क) भा० पु० वि० तैः सह इति ना० । (ख) भा० पु० स० तेषाम् इत्यधि० वर्त० । (ग) भा० पु० स० विषयात्मकत्वात् इत्यधि० वर्त० ।

नन्वङ्कुरोत्पत्तौ को दोषः तत्राह ।

इन्द्रियाणि मनः प्राणा आत्मा धर्मो धृतिर्मतिः ।
ह्रीः श्रीस्तेजः स्मृतिः सत्त्वं यस्य नश्यन्ति जन्मनेति(१)॥

यथानन्दान् रासि ददासि । तर्हि हे ईश भवतः सका-
शात्कर्तुमकर्तुमन्यथाकर्तुं समर्थात्तु कामवृक्षाणां हृद्य-
ङ्कुराभावं वरं वृणे । नान्यमित्यर्थः । यतोऽन्यदेवा अ-
न्यवरं दातुं समर्था अपि कामवृक्षमूलबद्धहृदयाः । अत-
स्तच्छेदने तु अप्रभवः ॥

(१) इन्द्रियाणीत्यादिश्लोकस्यार्थः ॥ यस्य विष-
यसक्तस्य कामस्य जन्मना जन्ममात्रेणापीन्द्रियादयो
नश्यन्ति । इन्द्रियाणि सदाचारभ्रष्टान्यसन्मार्गप्रियाणि
भवन्ति। कामप्राप्तिप्रयत्नश्रमात् सत्त्वं बलमपि(क)। मन
आधिग्रस्तम् । तत्संकल्पविकल्पैः क्षुत्तृडादिपीडिताः प्रा-
णास्तदाहुतिदानावकाशाभावात् । आत्मा देहो दुर्बल-
स्तत्काले स्वाहाराभावात् । धर्मो गतप्रायः । कृ साक्षा-
रसंभवाद्देशकालादीनामनादरात् । धृतिः रजोगुणनिष्ठा-
व्यभिचारिणी । कामाप्राप्तेः । मतिः नानादेवमनुष्या-
श्रया भवति । ह्रीस्तु समूला गतप्राया । तत्प्राप्त्यर्थं ज-
नप्रार्थनया । श्रीः शोभां कामामयग्रस्ता । तेजो भानुस्त-

(क) सत्त्वं बलमपि इति पा० पु० स० ना० ।

तेषामिन्द्रियादीनां सर्वेऽपि ते कामादयः खला न सुखदा इत्याह ।

राय: कलत्रं पशव: सुतादयो
गृहा मही कुञ्जरकोशभूतयः ।
सर्वेऽर्थकामाः क्षणभङ्गुरायुषः
कुर्वन्ति मर्त्यस्य कियत्प्रियं चलाः ॥

धनं हि पुरुषो लोके पुरुषं धनमेव च ।
अवश्यमेकं त्यजति तस्मात्किं धनतृष्णयेति (१) ॥

---

द्रूपराहुग्रस्तः । स्मृतिः स्वरूपानुसन्धानरूपा तु विनाश-प्रायैवं सर्वाणि कर्माणि नश्यन्ति ।

सङ्गात्संजायते कामः कामात्क्रोधोऽभिजायते ।
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः ॥
स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यतीति
गीतोक्तेः ॥

(१) राय इत्यादिश्लोकस्यार्थः ॥ रायो द्रव्याणि मर्त्यस्य कियत्प्रियं कुर्वन्ति न किंचिदपि । किन्त्वल्पसु-खव्याजेन भूरि दुःखमेव स्वरक्षणनाशाभ्याम् । कलत्रं स्त्री अपि बलपौरुषविवेकादीनाच्छिद्य दुःखमेव प्रयच्छति । एवं सर्वेऽर्थकामा अपि यर्हि स्वल्पविषयसुखं कुर्वन्त्यपि, पु-रुषस्तु क्षणभङ्गुरायुः । तस्य क्षणभङ्गुरायुषो नाशं कर्तुं समर्थाः । प्रत्युत परमक्लेशदा एव । तस्माद्रायाद्यासक्ताः पुरुषाः घोरापत्समुद्रे मज्जन्ति ॥

तेषु स्त्र्यासक्तस्य तु सर्वाणि साधनोत्तमानि विफलान्येव भवन्तीत्याहैलवाक्येन ।

किं विद्यया किं तपसा किं त्यागेन श्रुतेन च ।
किं विविक्तेन मौनेन स्त्रीभिर्यस्य मनोहृतमिति (१)॥

तत्रापि पुरुषगामिनस्त्वसुराः पापमूर्त्तयो ज्ञातव्याः। तदेवाह ब्रह्मा भगवन्तं प्रति ।

(१) किं विद्ययेत्यादिश्लोकस्यार्थः । स्त्रीभिरिति बहुवचनोक्तं पदम् । मन इत्येकवचनान्तम्(क)। अयं भावः। स्वस्वमार्गं प्रति बहुभिराहृतं वस्तु एकम् । तस्य विलुण्ठनाद् दुर्दशैव भवति । तथा यस्य पुरुषस्य स्त्रीभिर्मनो हृतं तस्य विद्यया ब्रह्मोपासनया वैश्वानराद्युपासनया कि फलम् । न किमपि । मनसः स्त्र्याकारवृत्तेः । तपसा स्वधर्मेण कृच्छ्रचान्द्रायणादिना किम्। तत्स्त्रीसङ्कामात्। त्यागेन संन्यासेन किं सुखम् । नाल्पमपि । योषित्स्पर्शदोषानुसङ्गात् । सर्वसाधनहेतुना श्रवणेन वा किम् । न किमपि । मननाभावात् । विविक्तेन एकान्तवासेनापि। मनोवृत्यनैकान्तत्वात् । मौनेन वा किम् । सर्वसाधनानि फलानि च स्त्रैणस्य व्यर्थानि एव भवन्ति । यथा वारस्त्रीनटयोः ॥

(क) आ० पु० त० इति इत्यधि० वर्त्त०।

ता इमा यभितुं पापा उपाक्रामन्ति मां प्रभो इति (१)॥

ननु द्रव्यादिषु सुखानुभवो भवति। कथं दुःखमेवोच्यते। तत्राह प्रबुद्धवाक्येन।

नित्यार्त्तिदेन वित्तेन दुर्लभेनात्ममृत्युना।
गृहापत्याप्तपशुभिः का प्रीतिः साधितैश्चलैरिति (२)॥

ननु स्वर्गे तु नित्यविहारादिकं सुखमस्ति किम् नेत्याह।

(१) ता इमा इत्यादि श्लोकार्द्धस्यार्थः॥ ता इमाः प्रजा असुररूपाः पापा मां यभितुं मैथुनेन धर्षितुमुपाक्रामन्ति। तस्माद्धेतोः(क) हे प्रभो मां त्राहि॥

(२) नित्यार्त्तीत्यादिश्लोकस्यार्थः॥ उपार्जनरक्षणविनाशैर्नित्यमार्त्तिं पीड़ां ददातीति नित्यार्त्तिदं तत्। तेन वित्तेन द्रव्येण का प्रीतिः सुखानुभवः। न कापि। कीदृशेन। आत्ममृत्युना वणिक्सेवकचौराणामिवोपार्जनादावात्मनो मृत्युरूपेण। तत्रापि दुर्लभेन साधनमाध्याभावेन प्रारब्धाधीनेनेत्यर्थः। तथा गृहादिभिरपि। कथंभूतैः। साधितैः। अनश्वरैरनित्यैः। कार्यत्वात्। यद्यत् कार्यं तदनित्यं घटवदिति वचनात्। ते सर्वे दुःखान्ताः प्राणोपतापका एव। तदनुभवसामान्यात्।

(क) भा० पु० रत० हेतो इति ना०।

एवं लोकं परं विद्यान्नश्वरं कर्मनिर्मितम् ।
सतुल्यातिशयध्वंसं यथामण्डलवर्त्तिनामिति (१) ॥

तदेवाह श्रीभगवानपि ।

कर्मणां परिणामित्वादाविरञ्च्यादमङ्गलम् ।
विपश्चिन्नश्वरं पश्येददृष्टमपि दृष्टवदिति (२) ॥

(१) एवमित्यादि श्लोकस्यार्थः ॥ एवमुक्तप्रकारेण स्वर्गमपि नश्वरं विद्यात् । यतः कर्मनिर्मितं कर्मकार्यत्वादनित्यमेव । ननु सुकृतावधि तु स्वर्गसुखमस्ति किम् । नेत्याह । तुल्यातिशयध्वंसैः सह वर्तमानम् । तैर्दूषितमित्यर्थः । यद्वा तुल्यातिशयाभ्यां यो ध्वंसः पुण्यविनाशस्तेन सह । अयं भावः । सुखसमाधिकयोर्मत्सरेण सुकृतनाशात्तस्मात्पतनमित्यर्थः । यथा मण्डलवर्त्तिनां राज्ञां परस्य(क) मत्सरात् ॥

(२) कर्मणामित्यादि श्लोकस्यार्थः ॥ विरञ्च्यमभिव्याप्य आविरञ्च्यम् तस्माद्धैरण्यगर्भमपि(ख) लोकं विपश्चिन्नश्वरममङ्गलं पश्येत् । विषयबैभत्सविनाशाभ्याम् । यच्चादृष्टं स्वर्गमपि देहादिकं नष्टं दृष्टं तद्वत् । कुतः । तत्कर्मणां परिणामित्वात् रूपान्तरत्वात् कार्यत्वादित्यर्थः ॥

(क) आ । पु० स्त० परस्पर इति पा० ।
(ख) आ० पु० स्त० तम् इत्यधि० वर्त्त० ।

एवं कामनामदनयोर्दोषमुक्त्वा क्रोधस्य तमाहुः कामादयः ।

क्षुत्तृट्त्रिकालगुणमारुतजैह्वशैश्ना-
नस्मानपारजलधीनतितीर्य्य केचित् ।
क्रोधस्य यान्ति विफलस्य वशं पदे गो-
र्मज्जन्ति दुश्चरतपश्च वृथोत्सृजन्तीति (१) ॥

अतः क्रोध एव नरकद्वारम् । तदेवाह स्वायम्भुवः ।
अलं वत्सातिरोषेण तमोद्वारेण पाप्मना ।
येनोपसृष्टात्पुरुषाल्लोक उद्विजते भृशमिति ॥

एवं क्रोधस्य दोषानुक्त्वा लोभस्य हरिसेवाबाधकत्वमाह ॥

(१) क्षुत्तृडित्यादि श्लोकस्यार्थः ॥ केचिद्दुरादयोऽस्मान्दुष्पूरानपारजलधीन्समुद्रानतितीर्य्य फलशून्यस्य क्रोधस्य वशं यान्ति । क्रोधलक्षणे गोष्पदे मज्जन्ति । शापादिना तपोऽपि वृथोत्सृजन्ति त्यजन्ति ॥ यथा जले मज्जन्तो विवशाः सन्तो मस्तकारोपितं भारम् । केचिदिति रुद्राभि(क)प्रायेणोक्तम् । कीदृशान् । क्षुत्तृट्त्रिकालादीन् क्षुत्तृडादीन् / त्रिकालगुणांश्च शीतोष्णवर्षाणि मारुतः प्राणः जैह्वाञ्जिह्वोपभोगान्मधुराम्लादीन् शैश्नान्गुह्योपभोगान्स्त्रीसङ्गादीन् ॥

(क) भा० पु० स्त० ८स्क० पाठ इति पा० ।

यशो यशस्विनां शुद्धं श्लाघ्या ये गुणिनां गुणाः ।
लोभः स्वल्पोऽपि तान्हन्ति श्वित्रं रूपमिवेप्सितमिति(१)॥

एवं लोभस्य दुर्गुणमुक्त्वा मदस्य दोषमाह नारदः ।

न ह्यन्यो जुषतो जोष्यान्बुद्धिभ्रंशो रजोगुणः ।
श्रीमदादाभिजात्यादिं यत्र स्त्रीद्यूतमासव इति (२) ॥

एवं श्रीमदस्य बुद्धिनाशकत्वमुक्त्वा द्रोहस्य दोषमाह वासुदेववाक्येन ।

---

(१) यश इत्यादिश्लोकस्यार्थः ॥ यशस्विनां शुद्धं यशो गुणिनो येऽमानित्वादयः श्लाघ्या गुणास्तान् सर्वान्स्वल्पोऽपि लोभो हन्ति । तच्छ्रुतिस्मृतिबाधकत्वेन दुर्गुणायशउत्पादकत्वात् । यथा स्वल्पमपि श्वित्रं कुष्ठमीप्सितं रूपं नाशयति ॥

(२) नहीत्यादिश्लोकस्यार्थः ॥ जोष्यान् जुषतो विषयान्सेवतः पुरुषस्य श्रीमदादन्यः कोऽपि बुद्धिभ्रंशरूपो न भवति । स एव बुद्धिभ्रंशस्तद्रूपो रजोगुणोऽपि न बुद्धिं भ्रंशयति द्रव्याभावात् । नाभिजात्याद्यपि । तदभावादेव । किंतु श्रीमद एव बुद्धिनाशकः ज्ञाननाशक इत्यर्थः । यतो यत्र श्रीमदे मदिरास्त्र्यादयो नित्यं तिष्ठन्ति तत्र तेषां परमनिवासत्वात् ।

तस्मान्न कस्यचिद् द्रोहमाचरेत्स तथाविधः ।
आत्मनः क्षेममन्विच्छन्द्रोग्धुर्वै परतो भयमिति (१) ॥

एवं कामादय इन्द्रियादिनाशकत्वेन भगवत्सेवाबाधका भवन्ति । तस्माद्विनोविदूरतः तत्कारणा(क)स्पर्श(ख)त्वेन हेयास्त्वसाड्याः । इन्द्रियानुकूलविषयाभिलाषोद्भवः कामः । तद्विघातकासहनशीलत्वं(ग) क्रोधः । प्राप्तविषयाभिमानो मदः। धर्माधर्मविवेकानादरेण विषयप्राप्तिसाधनप्रियो लोभः । तद्व्ययबाधकत्वाद्विषयत्यागासहनशीलत्वमेव मोह इत्येते षड-रयः प्रसिद्धास्तस्मात्तेषां त्यागेनैव निर्विघ्नं भगवद्भजनं भवतीति भावः॥ न च(घ) सर्वथा त(ङ)त्यागे कथं देहनिर्वाह इति वाच्यम्(च) । (छ)तावता देहनिर्वाहस्तु प्रारब्धाधीनो न तु

(१) तस्मादित्यादि श्लोकस्यार्थः ॥ स्वकर्मणैव शत्रुमित्रोदासीनाः सर्वे जीवाः स्वस्वकार्ये भवन्तीति शास्त्रसिद्धान्तः । तस्मात्तथाविधो जीवः कस्यचिद् द्रोग्धुरपि द्रोहन्नाचरेत् । यतो द्रोग्धुः पुरुषस्य परतोऽस्मिंल्लोके तु राज्ञः सकाशाल्लोकान्तरे यमाद्भयम्भवति ॥

(क) आ० पु० स्त० कारण इति पा० ।
(ख) आ० पु० स्त० स्पर्शक इति पा० ।
(ग) आ० पु० स्त० शील इति पा० ।
(घ) आ० पु० स्त० तत् इति पा० ।
(ङ) आ० पु० स्त० तत इति पा० ।
(च) इति वाच्यम् इति आ० पु० स्त० ना० ।
(छ) आ० पु० स्त० तत्राह इत्यधि० पाठः ।

**यतो भिन्नो हि जीवात्मा देहेभ्योऽतिविलक्षणः।**
**तद्धर्मादपि गोभ्यश्च विषयेभ्यश्च नित्यशः॥३॥**

प्रयत्नस्य। स(क) तु परमार्थे प्रधानः(ख)। प्रयत्नाधीनानामपि प्रियपदार्थाप्राप्तेः। तन्निर्वाहाभावेऽपि न कापि चिन्ता ॥२॥

तदेवाह। यत इति(ग)। यतो जीवात्मा स्थूलसूक्ष्मकारणादेहेभ्यो भिन्नोऽपि विलक्षणः। तत्तेषां देहानां जन्मादिधर्मेभ्यश्चेन्द्रियेभ्यो विषयेभ्योऽपि नित्यशः।

विलक्षणः स्थूलसूक्ष्म(घ)देहादात्मेक्षिता स्वदृग्।
यथाग्निर्दारुणो दाह्यात् दाहकोऽन्यः प्रकाशक इत्युक्तेः॥

देहधर्मगोविषयेभ्यो विलक्षणभिन्नत्वेऽप्युदाहरणमाह भगवद्वाक्येन।

निषेकगर्भजन्मानि बाल्यकौमारयौवनम्।
वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव (१)॥

(१) निषेकेत्यादिश्लोकस्यार्थः॥ निषेकाद्यवस्था नव तनोर्देहस्य नत्वात्मन इत्यर्थः॥

(क) आ० पु० स्त० सत् इति पा०।
(ख) आ० पु० स्त० प्राधान्यम् इति पा०।
(ग) तदेवाह। यत इति आ० पु० स्त० ना०।
(घ) आ० पु० स्त० सूक्ष्मात् इति पा०।

नात्मा जजान न मरिष्यति नैधतेऽसौ
न क्षीयते सवनविद् व्यभिचारिणां हि ।
सर्वत्र शश्वदनपाय्युपलब्धिमात्रं
प्राणो यथेन्द्रियबलेन विकल्पितं सत् ॥

नात्मा वपुः पार्थिवमिन्द्रियाणि
देवा ह्यसुर्वायुर्जलं हुताशः ।
मनोऽन्नमात्रं धिषणा च सत्त्व-
महङ्कृतिः खं क्षितिरर्थसाम्यमित्यादिभ्यः(१) ॥

(१) नात्मेत्यादि श्लोकद्वयस्यार्थः ॥ असावात्मा देहेन सह न जजान न जातः। अतो न मरिष्यति । नैधते न तेन सह वर्धते । नापि क्षीयते । यतस्तेषमागमापायिनां व्यभिचारिणां जन्मादीनां तत्तत्कालवित् । सर्वत्र सर्वदानपायित्वात् । उपलब्धिमात्रं ज्ञानमात्रम् । गत्रगोचरत्वात् । नन्वेव तर्हि कथं जन्मादिरूपत्वेन प्रतीयते । तत्राह । यथेन्द्रियबलेनैकोऽपि प्राणः प्राणोऽपानो व्यान उदानः समानः नागः कूर्मः कृकलो देवदत्तो धनञ्जय इति दशविधः कल्पितः। तथा सदपि चैतन्यं जीवतत्त्वमपि विवेकाभावेन देहादिधर्मत्वेन विकल्पितम् । तथात्मा न देहादिरूपोऽपि तदेवाह । नात्मेति(क) ॥

(क नथारमन्था । नात्मेति पद्य । भा० ७ । स्क । ना० ।

ननु देहादिभ्यो जीवात्मा भिन्न इति कथं ज्ञायते।
स्वानुभवेनेत्याह स्वयं भगवान्।

यो जागरे बहिरनुक्षणधर्मिणोऽर्था-
न्भुङ्क्ते समस्तकरणैर्हृदि तत्सदृक्षान्।
स्वप्ने सुषुप्त उपसंहरते स एकः
स्मृत्यन्वयात्त्रिगुणवृत्तिदृगिन्द्रियेश इति(१)॥३॥

(१) यो जागर इत्यादि श्लोकस्यार्थः॥ यो जीवात्मा जागरे जाग्रदवस्थायां समस्तकरणैः सर्वेन्द्रियैर्धर्मिणोऽर्थान् श्रोत्रादीनां शब्दादीन् विषयान्बहिर्भुङ्क्ते स्वप्नेऽपि तत्सदृशानर्थान्मनसा ह्यन्तःकरणे भुङ्क्ते। बहिरिन्द्रियलयात्।सुषुप्तौ तान्सर्वान्(क) संहरते स विश्वतैजसप्राज्ञाख्यैर्नामभिर्भिन्नत्वेन प्रतीतावप्येक एव।

बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः।
घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्थितः।
दक्षिणाभिमुखो विश्वो मनस्यन्तस्तु तैजसः।
आकाशे च हृदि प्राज्ञो धाम देहे व्यवस्थितिः।
विश्वो हि स्थूलभुङ्नित्यं तैजसस्तु(ख) विविक्तभुक्।
आनन्दभुक्तथा प्राज्ञ इति श्रुतेः।

तत्तन्नामभिस्तत्तद्विषयभोक्तैक एव जीवात्मा। कुतः। स्मृत्यन्वयात्।

(क) आ० पु० न० अर्थानित्यधि० वर्त्त०।
(ख) आ० पु० न० सः प्र इति पा०।

ज्ञात्वैवं विषयान्सर्वांस्त्यक्त्वा प्राज्ञोऽखिलेश्वरम् ।
भजेद् भूतानुकूल्येन चिदचिद्विग्रहं हरिम् ॥४॥

एवमुक्तप्रकारेण देहेभ्यो देहधर्मेभ्यश्चात्मा भिन्नो विलक्षणश्च ज्ञात्वा प्राज्ञस्तु सर्वान्विषयांस्त्यक्त्वा भूतानुकूल्येनाखिलेश्वरं भगवन्तं भजेत् । भूतानुकूल्याभावे तत्कृपोदयाभावात् ।

अहमुच्चावचैर्द्रव्यैः क्रिययोत्पन्नयानघे ।
नैव तुष्येऽर्चितोऽर्चायां भूतग्रामावमानिनः ।
आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ।
तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्वणमित्यादिभ्यः ॥

अतो भूतानुकूल्यं भजनं वरम् ।

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।
अर्हयेद् दानमानाभ्यां मैत्र्याऽभिन्नेन चक्षुषेति ।

---

नेत्रस्थं जाग्रतं विद्यात्कण्ठे स्वप्नं विनिर्दिशेत् ।
सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितमिति

श्रुतिप्रसिद्धानां मध्ये जाग्रत्स्वप्नसुषुप्त्यवस्थानां स्थितेरन्वयः सम्बन्धः । तत्तदवस्थायाः सुखदुःखानुभवादित्यर्थः । तदपि कुतः । यतः त्रिगुणवृत्तिभुक् त्रिगुणानां सत्त्वरजस्तमसां वृत्तयो जाग्रत्स्वप्नसुषुप्तयस्तासां द्रष्टा । यत इन्द्रियेश इन्द्रियाणां श्रोत्रादीनामीशः । अतो धर्मधर्मिभ्यां भिन्नः ॥

तत्फलमाह मनुः ।

तितिक्षया करुणया मैत्र्या चाखिलजन्तुषु ।
समत्वेन च सर्वात्मा भगवान्संप्रसीदति ।
किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने ।
तथापि तत्परा राजन्न हि वाञ्छन्ति किंचनेति ।

कुतः । यतः निःस्पृहत्वमेव भगवत्प्रियं भक्तिसाधनं च भवति ।

नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेदित्युक्तेः(१)॥

अतस्तदानुकूल्येन तं सेवेत्। कथंभूतम्। चिदचिद्विग्रहं हरिं चिच्चाचिच्च चिदचितौ। तौ चिदचितौ विग्रहौ यस्य स चिदचिद्विग्रहः । चिद्विग्रहस्तु सूज्ज्वलश्यामो द्विभुजश्चतुर्भुजश्च । अचिद्विश्वमित्यर्थः । तच्चिद्विग्रहमाह ब्रह्मा ।

अस्यापि देववपुषो मदनुग्रहस्य
स्वेच्छामयस्य न तु भूतमयस्य कोऽपि ।

---

(१) नैरपेक्ष्यमित्यादि श्लोकस्यार्थः ॥ निरपेक्षस्य भावो नैरपेक्ष्यमेव परं निःश्रेयसं प्राहुर्नारदाद्य इति शेषार्थः । कीदृशम् । अनल्पकं निःश्रेयसां समुद्रम् । तस्मान्निराशिषः निःस्पृहस्य भक्तस्य मयि भक्तिर्भवेत् । निरपेक्षस्य ममापि तस्मिन्नित्यर्थः । यद्वा निरपेक्षस्य मम भक्तिर्भगवत्संबन्धिनी भागवती भक्तिरित्यर्थः ॥

नेशे महि(क) त्ववसितुं मनसान्तरेण
साक्षात्तवैव किमुतात्मसुखानुभूतेः (१) ॥

एवं चतुर्भुजाष्टभुजसहस्रभुजानि शरीराण्यपि(ख) चैतन्यानि।
तत्र चतुर्भुजाश्चैतन्यविग्रहा दृष्टा ब्रह्मणा। तदेवाह शुकः।

(१) अस्यापीत्यादि श्लोकस्यार्थः ॥ भो देव अचिन्त्यालौकिकक्रीडापर अस्यापि मम दृष्टिगोचरस्य पौगण्डस्य सगुणस्य मायागुणातीतस्य तव वपुषः शरीरस्य महि महिमानमवसितुं ज्ञातुं कोऽपि कः ब्रह्माणमपि। अन्तरेण निरुद्धेन मनसापि न ईशे न समर्थः न शक्नोमि च। कथंभूतस्य। मदनुग्रहस्य ममानुग्रहो यस्मात्तस्य। पुनः कीदृशस्य। स्वेच्छामयस्य स्वीयानां भक्तानां यथा यथेच्छा तथा भवतः। यतो न तु भूतमयस्य विशुद्धसत्त्वात्मकस्य। ननु तर्हि मे निर्गुणस्य वपुषो महिमा(ग) किं ज्ञातुं योग्यम्। नेत्याह। आत्मसुखानुभूतेरपि। उताप्यर्थे। यद्वा तव सगुणनिर्गुणयोरेवम्। पुनः साक्षात्तव नित्यकिशोरस्य(घ) परमसगुणस्य चैतन्यवपुषो महिमानं कोऽपि नेशे इति किं वक्तव्यमिति। ब्रह्मानन्दैकविषय इति श्रुतेः ॥

(क) भा० पु० स्क० महि इति पा०।
(ख) भा० पु० स्क० विग्रहा अपि इति पा०।
(ग) भा० पु० स्क० महिमानम् इति पा०।
(घ) भा० पु० स्क० नित्यकिशोरस्य इति पा०।

तावत्सर्वे वत्सपालाः पश्यतोऽजस्य तत्क्षणात् ।
व्यदृश्यन्त घनश्यामाः पीतकौशेयवाससः ।
चतुर्भुजाः शङ्खचक्रगदा राजीवपाणयः ।
किरीटिनः कुण्डलिनो हारिणो वनमालिनः ।
श्रीवत्साङ्गददोरत्नकम्बुकङ्कणपाणयः ।
नूपुरैः कटकैर्भाताः कटिसूत्राङ्गुलीयकैः ।
सत्यज्ञानानन्तानन्दमात्रैकरसमूर्त्तयः ।
अस्पृष्टभूरिमाहात्म्या अपि ह्युपनिषद्दृशा-
मित्युक्तेः ॥ तथान्यान्यपि तद्रूपाणि ।

जगृहे पौरुषं रूपं भगवान्महदादिभिः ।
संभूतं षोड़शकलमादौ लोकसिसृक्षयेति (१) ॥

पश्यन्त्यदो रूपमदभ्रचक्षुषा
सहस्रपादोरुभुजाननाद्भुतम् ।
सहस्रमूर्द्धश्रवणाक्षिनासिकं
सहस्रमौल्यम्बरकुण्डलोल्लसदिति ॥

(१) जगृहे इत्यादि श्लोकस्यार्थः ॥ आदौ सृष्ट्या-दौ भगवान्महदादिभिर्लोकसिसृक्षया पौरुषं रूपं ज-गृहे । कथम्भूतम् । सम्भूतं नित्यसिद्धम् । यतः षोड़श-कलं षोड़शकलाः शकलाः(क) शक्तयो यस्मिंस्तत् ॥

(क) भा० पु० म० शकला इति मा० ।

अदो रूपमदभ्रचक्षुषा ज्ञानचक्षुषा पश्यन्तीत्यनेन चैतन्यरूप(क)मुक्तं भवति ॥

अचिद्विग्रहमाह ब्रह्मा ।

भूर्लोकः कल्पितः पद्भ्यां भुवर्लोकोऽस्य नाभितः ।
हृदा स्वर्लोक उरसा महर्लोको महात्मनः ।
ग्रीवायां जनलोकश्च तपोलोकः स्तनद्वयात् ।
मूर्द्धभिः सत्यलोकस्तु ब्रह्मलोकः सनातनः ।
तत्कट्यां चातलं क्लृप्तमूरुभ्यां वितलं विभोः ।
जानुभ्यां सुतलं शुद्धं जङ्घाभ्यां तु तलातलम् ।
महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम् ।
पातालं पादतलत इति लोकमयः पुमानिति ॥

अग्निर्मूर्द्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ।

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायतेति श्रुतेः ॥

न च विश्वस्तु विराजो विग्रहो न तु कृष्णस्येति वाच्यम् ।

एष ह्यशेषसत्त्वानामात्मांशः परमात्मनः ।
आद्योऽवतारो यत्रासौ भूतग्रामो विभाव्यत
इति भागवतोक्तेः (१) ॥

(१) एष हीत्यादि श्लोकस्यार्थः ॥ एष हृषिकेशो-

(क) आ० पु० स० रूपत्वम् इति पा० ।

तदंशत्वाज्जीवोऽपि भगवतश्चिाद्विग्रहः । य आत्मनि तिष्ठ-तीत्यनया श्रुत्या तद्विग्रहत्वेन जीवः प्रतिपादितः । तस्माद्वि-राजो जीवस्य शरीरं विश्वं श्रीकृष्णशरीरमेव । विराड्देह-तज्जीवतदन्तर्यामिणामभेदमारोप्योपासनं कर्त्तव्यमित्याश-येनाह ।पातालमिति श्रीधरोक्तेः । सर्वं खल्विदं ब्रह्मेति श्रुतेः।

भजनीयेनाद्वितीयमिदं कृत्स्नस्य तत्स्वरूपत्वादिति
शाण्डिल्यविद्योक्तेरपि (१) ॥

तस्माद्विश्वविग्रहोऽपि दानमानाभ्यां सेव्यो न तु त-दाकारवृत्त्या ।

अथ मां सर्वभूतेषु भूतात्मानं कृतालयम् ।
अर्हयेद् दानमानाभ्यां मैत्र्याभिन्नेन चक्षुषा ।

---

यो विराट् पुरुषः शुद्धजीवः अशेषसत्त्वानामात्मा । यतः परमात्मनोंऽशः । कीदृशः । आद्योऽवतारः । आ-वेशावतारे आद्यस्तज्जीवत्वात् । आद्योऽवतारस्तु पूर्वो-क्तः पुरुष एव । स कस्तत्राह । यत्र विराजि भूतग्रामो विभाव्यते ॥

(१) भजनीयेनेत्यादि शाण्डिल्यविद्यासूत्रस्यार्थः ॥ भजनीयेन पुरुषोत्तमेन सहेदं विश्वमद्वितीयं पुरुषोत्तमा-त्मकमेव । कुतः । कृत्स्नस्य सर्वस्य जगतस्तत्स्वरूप-त्वाद्विग्रहत्वात् ॥

मनसैतानि भूतानि प्रणमेद् बहु मानयन्।
ईश्वरो जीवकलया प्रविष्टो भगवानितीत्युक्तेः (१) ॥

एवं दानमानमैत्र्यादिभिर्विश्वविग्रहस्य भजनम्। न तु तदासक्तबुद्ध्या।

स सर्वधीवृत्त्यनुभूतसर्व आत्मा यथा स्वप्नजनेक्षितैकः।
तं सत्यमानन्दनिधिं भजेत नान्यत्र सज्जेद्यत आत्मपात
इत्युक्तेः (२) ॥

---

(१) अथ मामित्यादि श्लोकद्वयस्यार्थः ॥ अथ भक्त्यधिकारप्राप्त्यनन्तरं सर्वभूतेषु कृतालयं मां दानमानाभ्यामर्हयेत्। कथंभूतम्। भूतात्मानम्। तत्राप्यभिन्नेन चक्षुषा देहिदेहयोरभेदान्वयेन। तथा सर्वेषां सुहृत्त्वेन स्वपरभेदाभावत्वेन। तत्रापि मैत्र्या। न तु मद्राज्ञाभङ्गभयेन। तदपि नाज्ञानदृष्टेरित्याह। जीवरूपेणानुप्रविश्य नामरूपे व्या(क)करवाणीति श्रुत्या जीवकलया ईश्वरो भगवानेव भूतेषु प्रविष्ट इति ज्ञात्वा मनसैतानि भूतानि बहु मानयन् सम्प्रणमेत्। न तु केवलं तेषु प्रवर्तयः स्वसाधुत्वमाविष्कर्तुम्।

(२) सं सर्वधीत्यादि श्लोकस्यार्थः ॥ स विश्वविग्रहध्याननिष्ठः पुरुष आसक्तबुद्ध्या तु तमेव चिद्विग्रहं भगवन्तं भजेत्। नान्यत्र विश्वविग्रहे सज्जेत्। कुतः।

---

(क) व्या० पु० अ० (ख्या) इति पा०।

यं यं चापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदातद्भावभावित इत्युक्तेः (१) ॥४॥

यतो विश्वविग्रहाकारबुद्धेरात्मपातो भवति(क)। तस्मात्तमेव भगवन्तं सेवेत। कथंभूतम्। सत्यं कालत्रयाबाधितम्। यत आनन्दसमुद्रम्। दुःखाभावात्। सदानन्दात्। सच्चिदानन्दम् इत्यर्थः। तं कमित्याह। सर्वधीवृत्त्यनुभूतसर्वः देवतिर्यङ्मनुष्यादीनां बुद्धिवृत्तिभिरनुभूतं तस्य तस्य भावाभावं सर्वं येन सः। यत आत्मा सर्वान्तर्यामी। एकस्य तत्तदिन्द्रियैः सर्वानुभूतौ यथानुरूपनिदर्शनम्। यथा स्वप्नजनेक्षिता स्वप्ने जनान्नानाजीवानीक्षते पश्यति यः स पुरुष एकोऽपि कदाचिद् बहून्देहान्प्रकल्प्य तत्तदिन्द्रियैस्तेषां तेषां सर्वाभिप्रायं पश्यति। तद्वत्। जीवस्त्वविद्यया तत्तदिन्द्रियैरहमेव पश्ये इति न वेद। व्याघ्रदर्शनेन पलायनश्रवणात्। परमेश्वरस्तु सदैवानावृतया चिच्छक्त्या वेत्तीति भावः॥

(१) यं यमित्यादि श्लोकस्यार्थः॥ यं यं भावं पदार्थं देवासुरमनुष्यकीटपतङ्गादिकं स्मरन्देहान्ते कलेवरं यस्त्यजति स तन्तमेवैति प्राप्नोति। एवकाराञ्चान्यमित्यर्थः। ननु तच्च यं जीवस्तत्काले देवोत्तमान्कथं न

(क) भा० पु० स्क० धमेव यं यमित्यादि टीकार्द्धपूर्वं तस्यार्थरूपा टिप्पणी चोल्लिखिता ततस्तस्मात्तमेवेत्यादि टिप्पणीसंघ दृश्यते।

यत्सुखं नरकेऽपि स्याच्छब्दस्पर्शादिकं चलम् ।
तत्को वाञ्छेत सारज्ञो भयदं पापकृत्प्रियम् ॥५॥

एवं ज्ञात्वा को भगवन्तं विहाय प्राज्ञो विषयसुखमिच्छेदित्याह । यदिति । आदिपदेन यच्छब्दस्पर्शरूपरसगन्धात्मकं सुखं नरकेऽपि स्यात् । तत्सारज्ञः को वाञ्छेत । कीदृशम् । भयदं परिणामे भयदम् । आगमापायित्वात् । अघजन्यत्वाच्च । पुनः किंविशिष्टम् । पापकृतां प्रियम् । पुनः । चलं कर्मकार्यत्वात् । तस्मात्तदभिलाषाभावेन सुधीभिर्भगवान्भक्त्या भजनीयः ॥

तस्यैव हेतोः प्रयतेत कोविदो
न लभ्यते यद् भ्रमतामुपर्यधः ।
तल्लभ्यते दुःखवदन्यतः सुखं
कालेन सर्वत्र गभीररंहसेत्युक्तेः (१) ॥

---

स्मरति तत्राह । कथंभूतः । सदा तद्भावभावितः यस्मिन्यस्मिन्पदार्थे सदानुरागोऽस्ति तस्य तस्य देहान्ते स्मरणं भवति । तस्मात्तमेति । अतो नानाभूतावेशेन देहान्ते तत्तत्स्मरणात्तत्प्राप्तेरात्मपातः ।

(१) तस्यैवेत्यादि श्लोकस्यार्थः ॥ कोविदो हिताहितवित्तु तस्यैव भगवत्प्राप्तिकारकस्य भक्तियोगस्य हेतोः प्रयतेत प्रयत्नं कुर्यात् । न कदापि विषयप्राप्तये ।

तामात्मनो विजानीयात्पत्यपत्यगृहादिकम् ।
दैवोपसादितं मृत्युं मृगयोर्गायनं यथेत्युक्तेः ॥

अतो विपयसुखनाम्ना दुःखमेव । परिणामे तस्मिन्दुःखानुभवादपि मन्दानां तत्र सुखबुद्धिरेव ।

अर्वाक्स्रोतस्तु नवमः क्षत्तरेकविधो नृणाम् ।
रजोऽधिकाः कर्मपरा दुःखे च सुखमानिन इत्युक्तेः ॥

तस्मात् प्राज्ञस्तु तदेव तद्रू(क)पं मत्वा चिद्विग्रहं श्रीकृष्णं भजेत् । न च कथं स एवोक्तप्रकारः । केचित्कलावतारं कृष्णं प्राहुः ।

पुरग्रामेष्वाग्रयणैरिन्द्रियैश्च महोत्सवैः ।
बभौ भूः पक्कशस्याढ्या कलाभ्यां नितरां हरेरिति (१)॥

---

यतो यद्भक्तिसुखम् । उपर्यधो भ्रमतां स्वर्गनरकेषु(ख) भ्रमद्भिर्न लभ्यते । षष्ठी तु तृतीयार्थे ॥ तत्सुखं विषयात्मकं तु सर्वत्र श्वखराजयोनिषु अन्यतः स्वकर्मणः दुर्निवारवेगेन कालेन लभ्यते । दुःखवत् । अयं भावः । दुःखमनिच्छता पुरुषेण तन्निवारणपरेणापि कर्मणा सर्वत्र तदनुभूयते । तथा सुखमपि । अतस्तदर्थं न प्रयतेत प्रत्युतात्मनो मृत्युरूपन्तत्पश्येत् ॥

( १ ) पुरग्रामेष्वित्यादि श्लोकस्यार्थः ॥

---

(क) आ० पु० म० तद् इति पा० ।
(ख) आ० पु० म० स्वर्गनरकमध्येषु इति पा० ।

द्विजात्मजा मे युवयोर्दिदृक्षुणा
मयोपनीता भुवि धर्मगुप्तये ।
कलावतीर्णाववनेर्भरासुरान्
हत्वेह भूयस्त्वरयेतमन्तिमे इत्यादिभ्यः (१) ॥

आग्रयणैर्नवान्नप्राशनार्थैर्वैदिकोत्सवैरिन्द्रियार्थैर्लौकिकैश्च महोत्सवैः । गृहे गृहे चोपलेपनमार्जनवादित्रध्वजपताकादिभिर्भूर्बभौ शुशुभे । कथंभूता भूः । हरेः श्रीकृष्णस्य कला शक्तिरित्यर्थः । अत(क) आभ्यां रामकृष्णाभ्यां भितरां बभौ ॥ मुख्यार्थस्तु । हरेः श्रीकृष्णस्य कलाभ्यां नृत्ययुद्धकलाभ्यामति शुशुभे । विचित्रपदपङ्क्तिललामैरित्यर्थः ॥

(१) द्विजेत्यादि श्लोकस्यार्थः ॥ द्विजात्मजा ब्राह्मणपुत्रा मे भुवि मत्स्थाने मयोपनीताः । उपायान्तरैस्तव दर्शनाभावान्निषिद्धकर्मापि कृतमिति भावः ।

तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्ययेत्युक्तेः ।

कीदृशेन मया । युवयोर्दिदृक्षुणा धर्मगुप्तये कलावतीर्णौ कलाभिर्विमलादिभिः षोडशशक्तिभिः सहावतीर्णौ ॥ ये त्वसुरा नवद्रूपां कृतास्ते तु मां प्राप्ताः संसाराद्विमुक्ताः । भूयः पुनरपि । अवनेर्भरासुरान् हत्वा युवां मेऽन्ति मत्समीपे त्वरेयेतं त्वरां कारयेतं प्रेरयेतमित्यर्थः । मे का-

(क) भा० पु० म्ना० स्वर्येति इति पा० ।

केचिन्नराग्रजावतारं तमाहुः ।

तāविमौ वै भगवतो हरेरंशाविहागतौ ।

भारव्ययाय च भुवः कृष्णौ यदुकुरूद्वहावित्युक्तेः(१)॥

अपरे चांशावतारं माहुः ।

यदोश्च धर्मशीलस्य नितरां मुनिसत्तम ।

तत्रांशेनावतीर्णस्य विष्णोर्वीर्याणि शंस न इति (२)॥

---

लावतीर्णौ इत्युक्ते युवयोर्दिदृक्षुणा मयेति विशेषणे विरुद्धापत्तिः । मेऽन्ति त्वरया इतमित्युक्तेः । द्विजात्मजा मयोपनीता इति तेषां महत्प्रयोजनं विना हरणे ब्रह्मण्यदेवनाम्नोऽपहानिः । एवं ज्ञात्वार्थान्तरयोजना कदापि न कर्त्तव्या । तस्मिंस्तद्वन्दनादिकं तु । यथा गोवर्धने ।

मद्दर्शनार्थं ते बाला हृतास्तेन महात्मना ।

विप्रार्थमेष्यते कृष्णो नागच्छेदन्यथेति हेति

हरिवंशे भगवदुक्तेः ॥

निशम्य वैष्णवं धाम पार्थः परमविस्मितः ।

यत्किंचित्पौरुषं पुंसां मेने कृष्णानुकम्पित-

मित्यनुनेक्तेरपि ॥

(१) ताविमावित्यादि श्लोकस्यार्थः ॥ हरेर्भगवतः कृष्णस्यांशौ नरनारायणाविमौ कर्तृभूतौ भुवो भारव्ययायेह कर्मभूतौ कृष्णौ कृष्णार्जुनौ अंशिभावागतावित्यर्थः॥

(२) यदोरित्यादि श्लोकस्यार्थः॥ नितरां धर्मशीलस्य

केचित्केशावतारमाहुः ।

भूमेः सुरेतरैवरूथविमर्दितायाः

क्लेशव्ययाय कलया सितकृष्णकेशः ।

भागवतधर्मशीलस्य यदोर्जनकहिताय स्वावस्थादानाभावात्तच्छापग्रहस्वरूपं परमाद्भुतं चरितं च भवता कथितम्। तत्र यदुवंशेऽंशेनावतीर्णस्यांशावतारस्य बलदेवरूपस्य विष्णोर्वीर्याणि नः शंस कथयेत्यर्थः। न इति बहुकथाजनाभिप्रायकं बहुवचनान्तं पदम् । अर्थान्तरकल्पनायान्तु दोषापत्तिः । अंशेन कृष्णरूपेणेत्युक्ते

अवतीर्य यदोर्वंशे भगवान्भूतभावन इति

पुनरुक्तिदोषः । अंशेन बलरामेण सहेत्युक्ते

एकोनविंशे विंशतिमे वृष्णिषु प्राप्य जन्मनी ।

रामकृष्णावित्यवतारक्रमे एकावतारन्यूनत्वलक्षणो दोषः । अंशेनांशश्रेष्ठेनेत्युक्ते कृष्णस्तु भगवान्स्वयमिति वाक्यविरोधः । अंशेन हे जीवश्रेष्ठ शुकेत्युक्ते गुरौ जीवभावभावनायां परमो दोषः । अतो रामवीर्यस्य प्रश्नः ।

रामाद्यस्य वहेदनुपगुणाग्नित्वविन्दाविति ।

न चैतस्मिन् कुले जाता अधना अबहुप्रजा ।

इत्यादिभ्यो रामस्यापि बहुपत्न्यः पुत्रा अपि ।

जातः करिष्यति जनानुपलभ्यमार्गः
कर्माणि चात्ममहिमोपनिबन्धनानीति (४)
वचनादिति वाच्यम् ॥

श्लोकानामन्यार्थत्वात् । अर्थस्तु अधस्तात् टिप्पण्या-मपर्श्चितो द्रष्टव्यः(क)॥ ननु तर्हि नरनारायणावतारं कृष्णं वामनावतारं च विष्ण्ववतारम् इत्येवं केचित्केचित्प्राहुस्तेषां किं भ्रमविजृम्भितवाक्यानीति चेन्न हि न हि । श्रीकृष्णस्य

तथापि तत्प्रश्नाभावाद्विवाहपुत्रादयो न कथिताः ॥

पञ्चमश्लोकार्थः ॥ यस्य कलया सितकृष्णौ के सुखे सगुणनिर्गुणे गङ्गायमुनाजले च । तयोरीशः । यद्वा यस्य कलया सितौ बन्धनप्राप्तौ कृष्णकौ पञ्चानन्दतु-राननौ । तयोरीशः । यद्वा । गुणावताराणामीशः । उज्जहा-रात्मनः केशावित्यस्य श्लोकस्यापि स एवार्थः । आ-त्मनः केशौ सुखेशौ उद्धृतवान् । उद्धृत्य देवेभ्यो ददा-वित्यर्थः । सामान्यदेवानामपि निर्जरत्वश्रवणान्नर-नारायणस्य जराभावे श्वेतकेशाभावात् । अन्यथा श्री-रामादीनां पायसावतारत्वम् । कस्य च कलावतारत्वं (ख) कस्यापि जलावतारत्वं स्यादित्यलं विस्तरेण ॥

(क) अर्थ [illegible]० द्रष्टव्यः इति पर्यं० भा० पु० [illegible] न० ना० ।

(ख) कस्य च कलावतारत्वम् इत्यादि० पु० [illegible]० ना० ।

अतोऽकामेन मनसा सेव्यः श्रीराधिकापतिः ।
तस्यावतारमुख्येष्वभेदबुद्ध्या महात्मभिः ॥६॥

सर्वावतारमयत्वात् सर्वे सत्यवादिनः ।
ब्रह्मणो वाचकः कोऽयमृकारोऽनन्तवाचकः ।
शिवस्य वाचकः षश्च णकारो धर्मवाचकः ।
अकारो विष्णुवचनः श्वेतद्वीपनिवासिनः ॥
नरनारायणार्थस्तु विसर्गो वाचकः स्मृतः ।
सर्वेषां तेजसां राशिः सर्वमूर्त्तिस्वरूपकः ।
सर्वाधारः सर्वबीजस्तेन कृष्ण इति स्मृत

इति ब्रह्मवैवर्त्ते नारायणोक्तेः ।

तत्सर्वावतारमयत्वं तु हरिवंशे मुकुटार्थे वैरोचनिगरुड़युद्धमसक्रान्ते स्फुटीकृतम् । तत्तत्त्वनिर्णयशास्त्रे द्रष्टव्यम् ॥५॥

नन्वेवं ज्ञात्वा किं कर्त्तव्यम् । तत्राह। अत इति। अतोऽकामेन मनसा राधिकापतिः श्रीकृष्णः सेव्यो महात्मभिः । तस्यावतारमुख्येषु नृसिंहवामनरामादिषु(क) भेदाभावबुद्ध्या।

नृसिंहरामकृष्णेषु षाड्गुण्यं परिपूरितम् ।
परावस्था परेशस्य दीपादुत्पन्नदीपवदित्युक्तेः (१) ॥

---

(१) नृसिंहेत्यादि श्लोकस्यार्थः ॥ क्रमतो यः पर- [illegible] परस्य श्रीकृष्णस्येयमेव परावस्था। [illegible]-

---

(क) आ० पु० स्त० नृसिंहवामनरामादिषु इति पा०।

यस्मिन्यस्मिन्परा प्रीतिर्भगवद्विग्रहे तु वा ।
तेन तेनापि सेव्यः स सोऽपि तेषामभेदतः॥७॥
त्यक्त्वा सङ्गं विदूराद्वै मत्स्यादेर्भेदवादिनाम् ।
सेव्यः स्वस्वाप्रियः प्रेष्ठो दासभावेन साधुभिः॥८॥

अतोऽवतारेषु यस्मिन्यस्यानुरागस्तेन स एव सेव्योऽवताराणामभेदबुद्ध्या ॥६॥

तदेवाह । यस्मिन्निति । यस्य यस्य जीवस्य यस्मिन्यस्मिन्भगवद्विग्रहे परा प्रीतिस्तेन तेन सोऽपि सोऽपि विग्रहः सेव्यः । तेषामवताराणामभेदतः ॥ ७ ॥

अयम्भावः । स्वस्वप्रियं सर्वपरामिति निश्चीय (!) सर्वावताराणां तद्रूपत्वमेवमभेदबुद्ध्या साधुभिर्दासभावेन स्वस्वप्रेष्ठः सेव्यः । किं कृत्वा । तत्राह । मत्स्यादेर्भेदवादिनाम् अंशकलादिविवरणेन न्यूनाधिक्यं विवदतां शाक्तानामिव सङ्गं विदूरतस्त्यक्त्वा । तदुक्तम् ।

नास्तिकानां च शाक्तानां तार्किकाणां तथैव च ।
प्रसङ्गो वर्जनीयो वै दाम्भिकानां मुमुक्षुभिरिति ॥

दासभावेनेत्युपलक्षणम् । दाससख्यवात्सल्योज्ज्वलशान्तादिना । न तु ब्रह्माहमस्मीत्यभेदभावनेत्यर्थः ॥ ८ ॥

यदेकः सेवकः सेव्य एक एवेति लक्षणम् ।
सुभक्तेर्मुनयः प्राहुर्भक्तिशास्त्रविदां वराः ॥ ६ ॥

तत्कुतः । यत एक एव सेवकः एक एव सेव्यो यत्त-देव सुभक्तेर्लक्षणं प्राहुः । भक्तिशास्त्रविदां वराः । न च से-वकत्वे भय(क)सुखाभावयोः प्रसङ्गः स्यात्परतन्त्रत्वात् ।

यावत्स्याद् गुणवैषम्यं तावन्नानात्वमात्मनः ।
नानात्वमात्मनो यावत्पारतन्त्र्यं तदेव हि ॥
यावदस्यास्वतन्त्रत्वं तावदीश्वरतो भयमिति
भगवदुक्तेः ।

श्रुतावपि ।
सेवा श्ववृत्तिर्व्याख्याता तस्मात्तां परिवर्जयेदिति ।
यतः स्वतन्त्रत्वमेवापवर्गः । परतन्त्रत्वमेव संसारः ।
उक्तं च । स्वातन्त्र्यं मुक्तिः । पारतन्त्र्यम् बन्ध इति वाच्यम् ।
जीवस्य स्वाभाविकदासत्वरूपपरतन्त्रत्वात् ।

कर्तृत्वं करणत्वं च स्वभावश्चेतना धृतिः ।
यत्प्रसादादिमे सन्ति न सन्ति यदुपेक्षयेति ॥
श्रीमते विष्णवे तुभ्यं दास्यं सर्वं करोम्यहम् ।
देशकालाद्यवस्थासु सर्वासु कमलापते

इत्यादि श्रुतिभ्यः । तदेवानुसंधानं कामयन्ति मु-मुक्षवः । तदेवाह पाद्मे ।

(क) आ० पु० स्था० स्वेऽभय इति पा० ।

दासभूताः स्वतः सर्वे ह्यात्मनः परमात्मनः ।
स्याज्जीवनेच्छा यदि ते स्वसत्तायां स्पृहा यदि ।
आत्मदास्यं हरेः स्वाम्यं स्वभावं च सदा स्मर ।
सत्वमात्मनि संजातं स्वामित्वं ब्रह्मणि स्थितम् ।
उभयोरेव संबन्धो न परोऽभिमतो ममेति ।
मुक्तिर्हित्वान्यथारूपं स्वरूपेण व्यवस्थितिरित्युक्तेः ।

स्वस्वरूपावाप्तिर्मुक्तिः । स्वस्वरूपं तु पूर्वोक्तप्रकारं कृष्णाधीनं चेतनमणु अक्षरं तद्दासं क्लेशवर्जितं मायागुणातीतमेतादृशेन रूपेणाविर्भावो मुक्तिः । ज्योतीरूपं संपद्य स्वेन रूपेणाभिनिष्पद्यत इति श्रुतेः ॥

अस्याः श्रुतेरर्थस्तु पूर्वप्रसङ्गे प्रोक्तः टिप्पण्याम् (क) ।
यर्हि स्वतन्त्रत्वमेव जीवस्य मुक्तिस्तदेव तस्य स्वरूपं तर्हि तेन ज्योतीरूपेणाभिनिष्पद्यत इति कथं नोक्तम् । तस्मान्मुक्तजीवानामपि तदधीनत्वं यतस्तद्दास्यं तस्य स्वाभाविको धर्मः । सर्वे देवाः सर्वे पितरः सर्वे मनुष्या विष्णुनाशितमश्नन्ति । विष्णुनाघ्रातं जिघ्रन्ति विष्णुना पीतं पिबन्तीति श्रुतेः । सर्वे देवादिशब्देन देवादयो ज्ञातव्याः ।

---

नित्यत्वे दृष्टान्तः । दीपादुत्पन्नदीपवत् । उत्पन्न इति वाच्यं लोकदृष्ट्या । न तु वास्तवम् । अन्यथा तस्यापि पूर्वसिद्धदीपस्याप्युत्पत्तिप्रसङ्गः । तस्मात्तेषां सदाभावत्वाज्जन्यजनकत्वाभाव एव ।

---

(क) घा० पु० न्त० टिप्पण्यामिति ना० ।

तस्य विद्वान्नामरूपाद्विनिर्मुक्तः परात्परं पुरुषमुपैति दि-
व्यमिति (१) ॥

स एतस्मात्सर्वजीवसमष्टिरूपाद्धिरण्यगर्भादुत्कृष्टं
सर्वप्राणिहृदयेशयं परमेश्वरं पश्यतीत्यादि श्रुतिभ्यः (२) ॥

तस्माद् भगवद्भक्तियुक्तं तद्दासत्वं जीवस्य स्वाभा-
विकः स्वरूपभूतो धर्मः । नामरूपविमोक्षणहेतुरपि भक्ति-
योग एव ।

(१) तस्य विद्वानित्यादि श्रुतेरर्थः ॥ तस्य परमे-
श्वरस्य परब्रह्मणः स्वरूपं विद्वान्पुरुषः प्राकृतनाम-
रूपाद्विनिर्मुक्तः सन्परात्परं पुरुषं भगवन्तमुपैति । विशे-
षेण नितरां मुक्त इत्युपसर्गद्वयादन्यथारूपं हित्वा स्व-
स्वरूपेण स्थितः स मुक्तः ॥

(२) एतस्मादित्यादि श्रुतेरर्थः ॥ एतस्मादुत्कृष्टा-
द्धिरण्यगर्भाच्चतुराननादपि उत्कृष्टं सर्वप्राणिहृदयेशयं
परमेश्वरं पश्यति । कथंभूतात् । सर्वजीवसमष्टिरूपात् ।
हिरण्यगर्भादप्युत्कृष्टं परमेश्वरं पश्यतीत्यनेन ब्रह्मादी-
नां मुक्तानां स्वाभाविकं तस्य परमेश्वरस्य दासत्वमुक्तं
सर्वप्राणिहृदयेशयमित्यनेन(क) मुमुक्षूणामिति । स इत्यनेन
निर्मुक्त एव सर्वेश्वरत्वेन सर्वान्तर्यामित्वेन भगवन्तं प्राप्नो-
ति न बहु इत्यर्थः ॥

(क) आ० पु स्क० [illegible] ।

परीत्य भूतानि परीत्य लोका-
न्परीत्य सर्वा विदिशो दिशश्च (क)।
उपस्थाय प्रथमजामृतस्या-
त्मनात्मानमभिसंविवेशेति ॥ (१) ॥

अतः सर्वे मुमुक्षुमुक्तास्तद्दासत्वं स्पृहयन्ति ।
न वयं साध्वि साम्राज्यं स्वाराज्यं भोज्यमप्युत ।
वैराज्यं पारमेष्ठ्यं च आनन्त्यं वा हरेः पदम् ।
कामयामह एतस्य श्रीमत्पादरजः श्रियः ।
कुचकुङ्कुमगन्धाढ्यं मूर्ध्ना वोढुं गदाभृत इति
नित्यमुक्तकृष्णपत्न्युक्तेः ।

---

(१) परीत्येत्यादि श्रुतेरर्थः ॥ स मुनिर्भूतानि प्राणिनः परीत्य संसारचक्रे भ्रमन्तीति ज्ञात्वा लोकादीन् क्षयिष्णुत्वेन ज्ञात्वा सर्वा दिशो विदिशश्च दुःखमयत्वेन परीत्य ऋतस्य कालत्रयाबाधितस्य विष्णोः प्रथमजां वाचं वेदलक्षणामुपस्थाय तदुक्तं भागवतधर्मं वा तेऽप्यात्मना विरक्तेन मनसात्मानं परमात्मानं भगवन्तं शरणमभिसंविवेश गतवानित्यर्थः । प्रविष्टवान्वा । यथा वनं प्रविष्टो जीवो वनरूपो न जायते केनापि किं तु तद्भिन्न एव तथात्रापि बुद्धौ ज्ञेयः । अर्थान्तरकल्पना त्वप्रियैव ॥

---

(क) भा० पु० स्त० दिशो विदिशश्च इति पा० ।

अस्यानुदास्यमेवास्मत्पितामहः किल वव्रे

इति बल्युक्तेः ।

न वै मुकुन्दस्य पदारविन्दयो-

रजोजुषस्तात भवादृशा जनाः ।

वाञ्छन्ति तद्दास्यमृतेऽर्थमात्मनो

यदृच्छया लब्धमनःसमृद्धय इति

मैत्रेयवाक्यादपि । तदेवाह श्रीभगवानपि ।

सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ।

दीयमानं न गृह्णन्ति विना मत्सेवनं जना

इत्येवं महान्तस्तु तद्दास्यमेव स्पृहयन्ति न तु स्वातन्त्र्यम् । यतस्त्वं स्वतन्त्राऽसीत्युक्ते व्यभिचारिणी मोदयुक्ता भवति । न तु कुलवती पतिव्रतेत्यलं विस्तरेण । सेवा श्ववृत्तिर्व्याख्याता इति श्रुतेरर्थस्तु श्रीभागवते नारदेन कृतः । श्ववृत्तिर्नीचसेवनमिति । अतो नीचसेवनस्य हेयत्वम् न तु परमेश्वरस्य तस्य । यत्तु(क) यावदस्वतन्त्रत्वं तावदीश्वरतो भयमित्युक्तं भगवता तत्तु गुणवैषम्यजनानान्त्वाधीनत्वं भयदम् । न तु भगवदधीनत्वम् । तत्पूर्णकामत्वेन सेवास्पृहाभावात् । एकत्वमपि दीयमानन्न गृह्णन्ति विना मत्सेवनं जना इति तस्य भगवतो वचनात् । पारतन्त्र्यमेव बन्धनात्मकं दुःखमित्युक्तम् । तत्तु प्राकृतजनाधीनत्वाभिप्रायकं वाक्यम् ।

(क) भा० पु० स्क० ३ इति गा० ।

चिदचिद्विग्रहः सेव्यो भगवान्सात्त्वताम्पतिः।
सेवको वैष्णवश्चेति द्वैतन्तु श्रुतिसंमतम्॥१०॥

भगवत्तन्त्रत्वं(क) तु परममुक्तिरूपम्।

विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिण

इति पाद्मोक्तेः।

सालोक्यादिचतुष्टयन्नेच्छन्ति सेवया पूर्णा इति भगवदुक्तेरपि॥

यतो भगवानपवर्गेश्वरोऽपि तदधीनो भवति।

अहम्भक्तपराधीन इति भगवदुक्तेः।

तस्मै आत्मानं च ददामीति श्रुतावपि तस्योक्तेः।

तस्माद्यर्हि भक्ताधीनत्वे भगवति दुःखादिप्रसङ्गः स्यात्तदा परमेश्वराधीनत्वे भक्तेऽपि। अलं विस्तरेण॥९॥

नन्वेक एव सेवकः। एक एव सेव्य इत्युक्तं भवता। तत्र कः सेवकः। कः सेव्य इति शङ्कायामाह। चिदिति। चिदचिद्विग्रहः विश्वात्मको घनश्यामचिद्विग्रहो भगवानेकः सेव्यः। एक एव वैष्णवः सेवकः। अयं भावः। स्वयमेवैकः सेवकः। अन्यश्चराचरात्मकः प्रपञ्चो भगवद्रूपत्वेन सेव्य इति द्वैतं तु श्रुतिसंमतम्।

मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यतीति।

(क) भा० पु० स्त० भगवत्परतन्त्रत्वम् इति पा०।

एतस्मिन्नु दरमन्तरं कुरुते अथ तस्य भयं भवतीत्यादिना श्रुतौ द्वैतस्य निन्दा श्रूयते सा तु नानात्वलक्षणस्य द्वैतस्य । तत्तु सर्वैर्निन्दितम् ।

एवमेतन्महाभाग यथा वदसि देहिनाम् ।
अज्ञानप्रभवाहन्धीः स्वपरेति भिदा यतः ।
शोकहर्षभयद्वेषमोहलोभमदान्विताः ।
तस्माद् भेदात्तु तैर्युक्ता भवन्ति पुरुषा इति वसुदेवोक्तेः ।
आत्मनश्च परस्यापि यः करोत्यन्तरोदरम् ।
तस्य भिन्नदृशो मृत्युर्विदधे भयमुल्वणमिति
भगवदुक्तेरपि ।

तस्मात् तस्यैव निषेधः । न तु दासस्वामित्वलक्षणस्य ।

यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः ।
तस्य तीर्थपदः किंवा दासानामवशिष्यत इति ।
पश्ये न वीतभयमुन्मुदितं त्रिलोक्या-
मन्यत्र वै मुररिपोरितरत्र दास्या(क)दित्याद्भ्यः ।

दासास्तु सर्वे तदर्पणं कृत्वा तद्भुक्तभोगभोगिनस्तदन्तर्हृदयत्वात् ।

त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
उच्छिष्टभोजिनो दासास्तव मायां जयेमही-
स्युद्धवोक्तेः । न तु [illegible]श्वरार्पितमन्नमस्वभक्ष्यमिति वाच्यम् ।

(क) [illegible] पु० स्त० । दासा इति पा० ।

स्वयमप्यर्पितं ग्राह्यमविशेषादिति

शाण्डिल्यविद्योक्तेः (१) ॥

षड्भिर्मासोपवासैस्तु यत्फलं परिकीर्त्तितम् ।
विष्णोर्नैवेद्यसिक्थेन पुण्यं तद् भुञ्जतां कलौ ।
हृदि रूपं मुखे नाम नैवेद्यमुदरे हरेः ।
पादोदकं तु निर्माल्यं मस्तके यस्य सोऽच्युत

इत्यादिवाक्येभ्यः । मे नोपयुञ्ज्यान्निवेदितमिति भगवद्वाक्यस्यार्थस्तु । अन्यस्मै देवायार्पितं मे मह्यं नोपयुञ्ज्यान्न निवेदयेदित्यर्थः ।

विनियुक्तावशिष्टं च प्रदानं व्यञ्जनादिके इति

सेवापराधवर्णने महापराधात् ।

पितृशेषं तु यो दद्याद्धरये परमात्मने ।
रेतोधाः पितरस्तस्य भवन्ति क्लेशभागिन

इत्यादिभ्यः । कृष्णार्पितं तु सर्वेभ्यो देवेभ्यो देयम् ।
विष्णोर्निवेदितान्नेन यष्टव्यं देवतान्तरम् ।
पितृभ्यश्चैव तद् देयं तदानन्त्याय कल्पत इत्युक्तेः ।
न च पादोदकं तु निर्माल्यम्मस्तके यस्य सोऽच्युत

इत्युक्तम् । तद् यन्त्रात्मकादिपूजायां तु न लभ्यते तन्न तच्चरणाभावादिति वाच्यम् ।

(१) स्वयमपीत्यादि शाण्डिल्यविद्यासूत्रस्यार्थः । यदुक्तं कर्मारव्ये भ्रमद्भिः स्वयमर्पितं स्वग्राह्यं मन्ये

पादोदकं तु पाद्यमव्याप्तेरिति
भक्तिशास्त्रोक्तेः (१) ॥

ननु यदुक्तं सर्वार्पणं भगवते कृत्वा तदुच्छिष्टभोजिन एव दासाः । तस्य सर्वार्पणं त्वश्रवणम् ।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहम्भक्त्युपहृतमश्नामि प्रयतात्मन
इत्यादिनेति चेन्न ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पण-
मिति भगवदुक्तेः ।

अतोऽन्यदर्थाभावे पत्रादिकम् । तद्भावे तु सर्वार्पणं ह-रये सर्वफलमदमित्यर्थः । तस्मात्तद्भुक्तभोगसेवनेन स-र्व्यादन्यकामग्रहणेच्छाभावेन । तस्मात्स्वस्य भेदबुद्ध्या त-

---

दोषप्रसङ्गात्तस्माद्वैष्णवेभ्यो देयम् । तत्त्वज्ञानवि[illegible]-क्तिमतं वाक्यम् । यतोऽन्यदेवार्पितान्नस्याभक्ष्यत्वश्रवणे-ऽपि यच्छेषादनदुष्टत्वात् किं वक्तव्यं पुनर्भगवदर्पि-तान्नस्य । तस्मात्पूजायां भगवते दत्तम् नैवेद्यादिकं स्वेनापि ग्राह्यमितरवैष्णववत् स्वस्यापि वैष्णवत्वावि-शेषादित्यर्थः ॥

(१) पादोदकमित्यादि [illegible]भक्तिग्रन्थसू-त्रार्थः ॥ पाद्यमेव पादोदकम् । न तु पादसंयुक्तं ज-

दासोऽहं परमेशस्य स मे नाथः सताम्पतिः ।
इत्येवं मुक्तिदे द्वे ते त्वहन्ताममते वरे ॥११॥
स्वाभाविकी परा भक्तिः सैव मुक्तिरनुत्तमा ।
इत्याह श्रुतिसारज्ञो मुनीशो व्यासनन्दनः॥१२॥

दनुरागेण सेवनं सेवकलक्षणम् । सेवकसेवास्पृहाभावेन स्वाभेदबुद्ध्या तत्पालमत्वस्वरूपं सेव्यलक्षणम् ॥१०॥

ननु तत्त्वेऽहंतादिमनङ्गेन बन्धनप्रसङ्गस्तत्राह । दास इति । उक्तप्रकारेणाहम्परमेशस्य दासः । स सतां पतिर्मे नाथ इति एवं ये अहन्ताममते ते द्वे तु मुक्तिदे वरे । तयोर्वरत्वन्तु पुरैव कथितम् ॥११॥

यदुक्तं ते अहन्ताममते मुक्तिदे । तत्र केचित्तु मन्दा नरकगामिनः पञ्चमकारसेवनमेव मुक्तिमाहुः । उक्तं च ।

मद्यं मांसं तथा मत्स्यं मुद्रा मैथुनमेव च ।
पञ्चतत्त्वमिदं देवि निर्वाणमुक्तिहेतवे इति ॥

अन्ये शिश्नोदरपरायणा यथेष्टाचरणं तु धर्मम् मरणमेव मुक्तिं माहुः । लोकान्तराभावेन पापपुण्याभावाद्येन केन प्रकारेण विषयसंपादनमेव पुरुषार्थः । ऋणं कृत्वा घृतं पिबेदिति सिद्धान्तं च । तेषु यत्किञ्चिच्छास्त्रा-

स्तु दुष्कृतनिवृत्तिमेव(क) मुक्तिम् अन्ये यश एव तामाहुः। तेषु श्रेष्ठास्त्वेकविंशतिदुःखप्रध्वंसमेवापवर्गम् । एकविंशतिदुःखानि तु । षडिन्द्रियषड्विषयसुखदुःखशरीराणीति। (ख) यद्वा शुकोक्तानि तान्याह । सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभमात्सर्येर्ष्याविमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादीनीति। तेष्वन्ये तु दुःखनिवृत्त्या सुखाप्तिमेव ताम्। केचिल्लिङ्गदेहापगमेन परमात्मनि जीवात्मनो लय एव मुक्तिरिति । अन्ये तु पण्डिता निरतिशयानन्दरूपामविद्यानिवृत्तिमेव मुक्ति माहुः ( ग )। एवं वाचस्पतिरुद्रजैमिनिगौतमकणादकापिलपतञ्जलिमायावादिभी रचितेषु चार्वाकतन्त्रागममीमांसान्यायवैशेषिकसांख्यपातञ्जलवेदान्तेषु स्थूलदृष्ट्या मुनयोऽनेकान्तां मुक्तिमाहुः ( घ )। एवन्तन्नानात्वे सिद्धान्तमाह। स्वाभाविकीति। या स्वाभाविकी परा भक्तिः सैव मुक्तिरिति व्यासनन्दनः शुक आह। कथंभूतः। श्रुतिसारज्ञः। यतो मुनीशः जीवन्मुक्त इत्यर्थः। शुको मुक्तो वा वामदेव इति श्रुतेः । तामेव हेतुपूर्विकामाह। अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्वय आत्मन

(क) आ० पु० स्त० रेव इति पा०। (ख) आ० पु० स्त० अत्र अन्ये तु पण्डिता निरतिशयानन्दरूपामविद्यानिवृत्तिमेव मुक्ति माहुरित्यस्ति।

(ग) आ० पु० स्त० अत्र अन्ये इत्यारभ्य माहुरिति पर्यन्तं नास्ति।

(घ) एवमित्या० मुक्तिमाहुरिति पर्यं० आ० पु० नास्ति।

आनुपूर्व्येण सर्वा ह्येव हि सर्वेषां विधीयन्ते यथावर्णविधा-
नमपवर्गश्चापि भवतीति (१) ॥

अस्मिन्नेवेत्येतत्तु कर्मादिबहुसाधनसंभवाभिप्रायेणो-
क्तम् । न त्वन्यत्रापवर्गाभावेन । तदुपर्यपि बादरायणः संभवा-
दिति सूत्रेण देवानामपि मोक्षस्य सूचितत्वात् । अन्यथा म-
हानुभावानां क्रममुक्त्यधिकारिणां ध्रुवदशरथभीष्मादीनां
पुनरावृत्तिप्रसङ्गः । तेषां तु पुनरावृत्त्यभावेनाधिकारान्ते सं-
सारनिवृत्तिरनुवर्णिता । अन्यथा श्रीरामानुरागस्य देहान्ते रा-
मनामोच्चारणस्यापि माहात्म्यहानिः । ननु भागवतभरता-
नादरेण तस्यायोग्यत्वाद् दशरथस्य पुनरावृत्तिर्युक्तैवे-
ति चेन्मैवम् । शास्त्रविरोधत्वात् । तस्मिंस्तु केनापि संबन्धेन
भगवदन्तर्हृदयानां मुक्तिः प्रतिपादिता । वस्तुतः श्रद्धापेक्षा-
भावात् । तावद् दशरथस्य तु श्रीरामभरतयोः पुत्रबुद्धिर्न तु

त्वम् । तथा सति शालग्रामाद्युत्कृष्टे(क) जलेऽव्याप्तिः ॥

(१) अस्मिन्नेवेत्यादि गद्यस्यार्थः ॥ अस्मिन्नेव वर्षे
भरतखण्डे लब्धजन्मभिः पुरुषैः सत्वादिगुणस्वभावेन
स्वकृतेन शुक्लादिवर्णेन शुभमिश्रिताशुभेन कर्मणा दि-
व्यमानुषनारकगतयो बह्व्य आनुपूर्व्येणात्मनो विधीयन्ते
साध्यन्ते । हि यस्मात् कर्मानुसारेण सर्वेषां जीवानां दे-
वमानुषपश्वादिदेहस्थितानां सर्वा एव गतयो भवन्ति ।

(क) भा० पु०स्क० ५ इति पा० ।

भगवद्भागवतमतिः। अतो ज्येष्ठपुत्रादराय कनिष्ठानादरस्तु राज्ञां धर्म एव । तद्बुद्धौ सत्यामपि भगवत्सुखाय भागवतानादरस्तु तत्सुखसुखिनां भागवतानामपि सुखदो भगवतोऽपि क्रोधाभावजनकश्च। दशरथभरतयोरनादरकृति लक्ष्मणे श्रीरामानुरागात् । भरतप्रार्थनया दशरथावमानेन तदादराय तत्पुनरागमनाश्रवणादपि । किंच भगवज्जनकस्य मोक्षाभावनिरूपकाणां त्रपा कुत्र गता । न ज्ञायते । तैरजामिलादिप्रसङ्गो न श्रुतः। ननु तर्हि कथं तत्स्वर्गवास इति चेत्तत्रोच्यते । महांस्तु स्वयमेव शुभाचरणं कृत्वान्यस्मा(?)त्तदेव कारयति । अतस्तेन स्वर्गवासेन भागवतधर्मानादरेण स्वधर्मादरस्य दोषश्चावि(क)ष्कृतः ।अलं विस्तरेण। तस्मात्तन्मुक्त्यभावं वदतां मतमसंमतम् ।स्वर्गेऽपि तदधिकारिणां मोक्षो भवत्येवमुक्त्वा तदपवर्गस्य लक्षणमाह ॥ योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताविद्याग्रन्थिरन्धनद्वारेण यदा हि महापुरुषपुरुषप्रसङ्गः (१) ।

इत्यनेन यदा वैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयमतिष्ठां विन्दते सोऽभयं गतो भवतीति श्रुतेरर्थोऽप्युक्तो भवति ॥

यस्य वर्णस्य यद्विधानं मोक्षप्रकारः संन्यासवानप्रस्थत्वादि तदनतिक्रमेण नृणामपवर्गश्चापि भवति ॥

(१) योऽसावित्यादि गद्यस्यार्थः ॥ भगवति योऽन-

(क) आ० पु० स्त० दोषमा इति पा० ।

तदुक्तं भगवतापि ।

> एतावानेव लोकेऽस्मिन् पुंसां निःश्रेयसोदयः ।
> तीव्रेण भक्तियोगेन मनो मय्यर्पितं स्थिरमिति ।

निःश्रेयसोदयो मोक्षोदयः ।

> मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
> बन्धाय विषयासक्तं मुक्तं निर्विषयं स्मृत-

मित्यस्याः श्रुतेरर्थस्तु श्रीकपिलेनोक्तः । स यथा ।

> चेतः खल्वस्य बन्धाय मुक्तये चात्मनो मतम् ।
> गुणेषु सक्तं बन्धाय रतं वा पुंसि मुक्तये इति ।

---

न्यनिमित्तो हेतुशून्यः स्वाभाविको भक्तियोग एव लक्षणं स्वरूपं यस्य सोऽयमपवर्गोत्तमः । कीदृशे भगवति । सर्वभूतात्मनि । पुनः किंविशिष्टे । अनात्म्ये आत्मनि भवमात्म्यं रागादिकं तद्रहिते । पुनः । अनिरुक्ते वाचामगोचरे । पुनः । अनिलयने अनाधारे । यतः परमात्मनि वासुदेवे श्रीकृष्णे । ननु स भक्तियोगोऽपि कथं भवेत् । तत्राह । ज्ञानागतीनान्निमित्तं योऽविद्याग्रन्थिस्तस्य रन्धन(क)न्तद्द्वारेण महापुरुषो विष्णुस्तस्य पुरुषा विष्णुभक्तास्तैः सह प्रकृष्टः सङ्गो यदा तदा(ख) स योगो भवति ॥

---

(क) भा० पु० स्त० रदनम् इत्यधि० वर्त्त० ।

(ख) भा० पु० स्त० सदा इति ना० ।

यतो ज्ञानफलं श्रेष्ठं भक्तिर्नान्यद्धि कर्हिचित् ।
भवत्यात्मरतिश्चात्ममिथुनो वै इति श्रुतेः॥१३॥

अतो भगवत्सिद्धान्तादन्ये मुक्तिवादास्त्वज्ञकल्पिताः ।

हरिभक्तिमहादेव्याः सर्वा मुक्त्यादिसिद्धयः ।
भुक्तयश्चाद्भुतास्तस्याश्चेटिकावदनुव्रता

इति पाद्मोक्तेः ॥ १२ ॥

यतो ज्ञानस्य श्रेष्ठं फलं तु भक्तिरेव । नान्यद्धि देहमोक्षादिकम् ।

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत

इति भगवदुक्तेः ।

आत्मैवेदं सर्वमिति एवं पश्यन्नेवं विजानन्नेवं मन्वान आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवतीति श्रुतेः (१) ॥

(१) आत्मैवेदं सर्वमित्येवं पश्यन्नित्यादि श्रुतेरर्थः॥ इदं विश्वमात्मैव । तदधिष्ठितत्वात् । एवं पश्यन्नेवं विशेषेण जानन्नेवं मन्वानः पुरुष आत्मरतिर्भवति । आत्मनि भगवति रतिर्भक्तिर्यस्य स आत्मरतिः । आत्मनि भक्तः क्रीडनं यस्य स आत्मक्रीडः । तत्सम्बन्धी आनन्दो यस्य स आत्मानन्दः । आत्मना भगवता सह मिथुनं सेवकसेव्यलक्षणं द्वितीयत्वं यस्य स आत्ममि-

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति

भगवदुक्तेर्भक्तेर्ज्ञानं फलम् । कथं ज्ञानफलं भक्तिरिति शङ्कायां शाण्डिल्यविद्यायां तदेव सिद्धान्तमाह । भक्त्या जानातीति चेन्नाभिज्ञप्तिसाहाय्यात् (१) । प्रागुक्तं च

तयोपक्षयाच्च (२) ॥

ननु ईश्वरप्रणिधानाद्वेति पातञ्जलसूत्रोक्तेर्योगस्तु भक्तिफलमिति चेन्न ।

गौण्या तु समाधिसिद्धिरिति शाण्डिल्यसूत्रोक्तेः (३) ॥

---

पुनः । स स्वराड् भवतीत्यस्य पदस्य व्याख्या तु पूर्वोक्ता ॥

(१) भक्त्येत्यादि शाण्डिल्यविद्यासूत्रस्यार्थः ॥ ज्ञातपूर्वस्य ज्ञानमभिज्ञानमुच्यते । यथा भक्त्युपकारि पर्वज्ञानं तत्फलरूपभक्तिप्रवर्त्तकं द्वितीयं यावद्भक्तेर्न दार्ढ्यं तावद्भक्त्यैवाभिज्ञप्तेः सहायत्वेनापेक्षणाज्ज्ञानस्य भक्तिरेव फलमित्यर्थः ॥

(२) तयेत्यादि शाण्डिल्यसूत्रस्यार्थः ॥ ज्ञानेन प्रादुर्भावप्राप्तया भक्त्या तस्य ज्ञानस्योपक्षयाच्चरितार्थत्वादपि ॥

(३) गौण्येत्यादि शाण्डिल्यसूत्रस्यार्थः ॥ गुणयु-

यतो योगस्य तदङ्गत्वम् । योगस्तूभयार्थमपेक्षणात्प्रया-
जवादिति शाण्डिल्य(क)सूत्रोक्तेः (१) ॥

अतः समाधेरपि भक्तिरेव फलम् ।

यतः संधार्यमाणायां योगिनो भक्तिलक्षणः ।
आशु संपद्यते योग आश्रयं भद्रमीक्षत

इति शुकोक्तेः ॥

तदेव सुमतं प्रश्ननिरूपणाभ्यां निर्णीतं श्रीभागवते ।

वदन्ति कृष्ण श्रेयांसि बहूनि ब्रह्मवादिनः ।
तेषां विकल्पप्राधान्यमुताहो एकमुख्यता ॥
भवतोदाहृतः स्वामिन्भक्तियोगोऽनपेक्षितः ।
निरस्य सर्वतः सङ्गं येन त्वय्याविशेन्मन इति (२) ।

उद्धवप्रश्नः ।

---

क्ता गौणी । तयां सगुणया समाधिसिद्धिरतो गौणी ।
भक्तिरेव योगाङ्गम् । न तु परा ॥

(१) योगस्त्वित्यादि शाण्डिल्यसूत्रस्यार्थः ॥ भक्त्यङ्गं यो-
गो भक्त्यङ्गस्य ज्ञानस्याङ्गमपि भवति । कुतः । समाहितम-
नस्कताया उभाभ्यामपेक्षणादित्यर्थः । न च भक्त्यङ्गं योगः
कथं भक्त्यङ्गज्ञानाङ्गं भवेदिति वाच्यम् । वाजपेयाङ्गस्य
प्रयाजस्य तदङ्गदीक्षणीयाद्यङ्गत्वस्यापि दृष्टत्वात् ॥

(२) वदन्तीत्यादि श्लोकद्वयस्यार्थः ॥ हे कृष्ण सवि-

---

(क) भा० पु० स्त० शाण्डिल्य इति ना० ।

तस्योत्तरमाह श्रीभगवान् ।

कालेन नष्टा प्रलये वाणीयं वेदसंज्ञिता ।
मयादौ ब्रह्मणे प्रोक्ता धर्मो यस्यां मदात्मक इति(१)

धर्मो यस्यां मदात्मक इति भगवद्वचनात्सर्ववेदानां मन्त्राः सूर्यादिप्रतिपादकास्ते सर्वे भागवतधर्मप्रतिपादका ज्ञेयाः। यतः परोक्षवादिनस्ते ।

धनुर्गृहीत्वौपनिषदं महास्त्रं
शरं ह्युपासानिशितं संधयीत ।

दानन्द ब्रह्मवादिनो वेदवादिनो वेदेषु ज्ञानयोगादीनि बहूनि श्रेयांसि वदन्ति। तेषां श्रेयसां प्रत्येकेन प्राधान्यमुतैकस्य मुख्यता । भवता तु सर्वसाधनफलश्रेष्ठत्वेन भक्तियोग उदाहृतः । येन भक्तियोगेन सर्वतः सङ्गं निरस्य स्वयमेव मनस्त्वय्याविशेत्परमानन्दाधिक्यात् ॥

(१) कालेनेत्यादि श्लोकस्यार्थः ॥ विश्वसंयमकालेन प्रलये नष्टा ग्राहकाभावाच्छिन्ना, सेयं वेदसंज्ञिता वेदरूपा वाणी मया सृष्ट्यादौ ब्रह्मणे प्रोक्ता । सा केयम्। तत्राह । यस्यां वेदरूपवाण्यां मदात्मको भक्तिहेतुभूतो भागवतो धर्मः ।

आयम्य तद् भागवतेन चेतसा
लक्ष्यं(क) तदेवाक्षरं सौम्य विन्धीति श्रुतेः ।

ननु तदात्मको धर्मो भागवतधर्म एव कुतो ज्ञातः । तत्रोच्यते।

धर्मो मद्भक्तिकृत्प्रोक्तो लाभो मद्भक्तिरुत्तमेति

भगवद्वचनात् । तदेव भगवन्मतं ज्ञात्वाह सूतः ।

स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे ।
अहैतुक्यप्रतिहता ययात्मा संप्रसीदतीति (१) ॥

विपक्षे दोषमाह ।

धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः ।
नोत्पादयेद्यदि रतिं श्रम एव हि केवलमिति (२) ॥

---

(१) स वै इत्यादि श्लोकस्यार्थः ॥ धर्मस्तु द्विविधः । वर्णाश्रमधर्मस्त्वपरः । परस्तु स एव यतो धर्मात् अधोक्षजे भगवति भक्तिर्भवति । कीदृशी । अहैतुकी अन्यकारणशून्या स्वतन्त्रा । फलानुसन्धानरहिता वा । पुनः । अप्रतिहता विघ्नैरताडिता । विघ्नास्तु सुखदुःखादयः तत्प्रदाश्च । सा का । ययानुरागात्मिकया आत्मा स एवाधोक्षजः प्रसीदति प्रसन्नो भवति । यद्वा मनो भगवन्निष्ठं भवति ॥

(२) धर्मः स्वनुष्ठित इत्यादि श्लोकस्यार्थः ॥ देय-

(क) भा॰ पु॰ म॰ लक्षम् इति पा॰ ।

तस्मात्स एव परो धर्मः । तदेवाह महादोऽपि ।

एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः ।
एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणमिति ।

अतो भागवतो धर्म(क) एव भगवदात्मको धर्मः । तन्मयी वेदवाणी भगवता ब्रह्मणे प्रोक्ता।ततस्तेन किं कृतम्। तत्राह भगवान् ।

कालाद्यानुकूल्येनानुष्ठितोऽपि पुंसां धर्मो( ख ) विष्वगासमन्तात्सेना यस्य तस्य भगवतः कथासु रतिं भक्तिं नोत्पादयेत्स श्रम एव.हि केवलम् । न धर्मः। दुःखप्रदत्वात्। ननु तत्रापि(ग) ज्ञानफलन्त्वस्त्येव । तत्राह । केवलं विफलः श्रमः । ननु तथापि स्वर्गफलं त्वस्त्येवेत्याशङ्क्यैवकारेण निराकरोति । क्षयिष्णुत्वान्न तत्फलमित्यर्थः । नन्वक्षय्यं ह वै धातुर्मास्ययाजिनः सुकृतं भवतीत्यादिश्रुतेर्न तत्फलस्य क्षयिष्णुत्वमित्याशङ्क्य हिशब्देन साधयति। यथेह कर्मजितो(घ) लोकः क्षीयते एवमेवामुत्र पुण्यजितो(ङ) लोकः क्षीयत इति तर्कानुगृहीतया श्रुत्या क्षयिष्णुत्वप्रतिपादनात् ॥

(क) भा० पु० स्त० भागवतधर्म इति पा० ।
(ख) भा० पु० स्त० धर्म इत्यधि० वर्त्त० ।
(ग) भा० पु० स्त० तत्रापि इति पा० ।
(घ) भा० पु० स्त० चितो इति पा० ।
(ङ) भा० पु० स्त० चितो इति पा० ।

तेन प्रोक्ता स्वपुत्राय मनवे पूर्वजाय च ।
ततो भृग्वादयोऽगृह्णन्सप्त ब्रह्ममहर्षयः ।

तेभ्यः पितृभ्यस्तत्पुत्रा देवदानवगुह्यकाः ।
बह्व्यस्तेषां प्रकृतयो रजः सत्त्वतमोभुव इति (१) ॥

ततः किं जातम् । तत्राह ।

एवं प्रकृतिवैचित्र्याद् भिद्यन्ते मतयो नृणाम् ।
पारम्पर्येण केषांचित्पाखण्डमतयोऽपरे ।

(१) तेन प्रोक्तेत्यादि श्लोकद्वयस्यार्थः ॥ तेन ब्रह्मणा सा वाणी स्वपुत्राय मनवे प्रोक्ता । कीदृशाय । पूर्वजायेत्यनेन कस्यांचित्सृष्टौ प्रथमं मनोरुत्पत्तिर्ज्ञेया । अतो ज्येष्ठत्वात्स एव वेदाधिकारी । चकारात्सनकादिभ्यश्च प्रोक्ता । वर्णाश्रमधर्मभागवतधर्मयोर्विस्तारार्थमित्यर्थः । तस्मान्मनोः सकाशाद् भृग्वादयः सप्त ब्रह्ममहर्षयो मरीच्यत्र्यङ्गिरः(क)पुलस्तिपुलहवसिष्ठभृग्वादयोऽगृह्णन् । तस्य वेदमन्त्ररूपत्वात् । मनुर्मन्त्र इति वचनात् । यद्वा । क्षत्रियाणामपि ब्राह्मणोपदेशेऽधिकारित्वाच्च । तेभ्यः पितृभ्यो भृग्वादिभ्यस्तत्पुत्रा देवदानवगुह्यका अगृह्णन् । ते के येषां बह्व्यः प्रकृतयः स्वभावाः । कीदृश्यः । रजःसत्त्वतमोभुवः रजआदिभ्यो गुणेभ्य उत्पत्तिर्यासां ताः ।

(क) आ० पु० स्त० ङ्गिरस इति पा० ।

मन्मायामोहितधियः पुरुषाः पुरुषर्षभ ।
श्रेयो वदन्त्यनेकान्तं यथाकर्म यथारुचीति (१) ॥

तस्मात्सर्वाणि साधनानि गुणात्मकानि संसारप्रदान्येव । संसारनिवर्त्तकस्तु भक्तियोग एवेत्याह दशभिः ।

(१) एवं प्रकृतीत्यादि श्लोकद्वयस्यार्थः ॥ एवं तेषां देवादीनां प्रकृतीनां वैचित्र्यान्नानात्वाद्वेदानां नानार्थकथनान्नृणां मतयो भिद्यन्ते । केषांचिद् ब्राह्मणादीनां वेदाध्ययनरहितानां तु पारंपर्येण नानामताग्रहाणाम् मतानुसारेणापरे पाखण्डमतयोऽभूवन् । हे पुरुषश्रेष्ठ उद्धव ते सर्वे अनेकान्तं श्रेयो वदन्ति । तत्रापि यथाकर्म यथारुचि । कथंभूताः । मन्मायामोहितधियः । तेषां मतभेदे मम मायैव कारणम् । मायामविद्यामवलम्ब्य स्वस्वमतानुसारेण वेदेषु मदात्मकभागवतधर्मप्रतिपादकेषु नानैव श्रेयो वदन्ति । अयं भावः । सात्त्विका देवादयस्तु सात्त्विकानि ज्ञानादीनि साधनानि प्रतिपादयन्ति । राजसास्तु स्वर्गसुखप्रदानि यज्ञादीनि कथयन्ति । तत्परं किमपि नेति मन्यन्ते । ते तु भवाधिकारिणः ।

प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म ।

द्रव्यं देशः फलं कालो ज्ञानं कर्म च कारकः ।
श्रद्धावस्था कृतिर्निष्ठा त्रैगुण्यं सर्व एव हीति (१) ॥

तेषां ज्ञानादीनां गुणात्मकत्ववर्णने भक्तियोगस्य निर्गुणत्वमाह ।

---

एतच्छ्रेयो ये वदन्ति(क) मूढा
जरामृत्यू(ख) ते पुनरेवाभियन्ति(ग) ।
अविद्यायामन्तरे वर्त्तमानाः
स्वयं धीराः पण्डितम्मन्यमानाः ।
जङ्घन्यमानाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः ।
अविद्यायां बहुधा वर्त्तमाना
वयं कृतार्था इत्यभिमन्यन्तीति श्रुतेः ।

तामसास्तु नित्यबद्धा नरकप्रदानि मांसमद्यमैथुनमत्स्यादीनि च कथयन्ति ॥

(१) द्रव्यमित्यादि श्लोकस्यार्थः ॥ द्रव्यादय एकादश सर्वे त्रैगुण्या एव रजःसत्त्वतमोगुणभेदेन त्रैविध्याः । एवं सर्वमपि गुणात्मकम् । चकारात्कारकः कर्त्ता ॥

---

(क) मुण्डके तु येऽभिनन्दन्ति इति पा० ।

(ख) मुण्डके जरामृत्युम् इति पा० ।

(ग) मुण्डके पियन्ति इति पा० ।

कैवल्यं सात्त्विकं ज्ञानं रजो वैकल्पिकं तु यत् ।
प्राकृतं तामसं ज्ञानं मन्निष्ठं निर्गुणं स्मृतमिति (१) ॥

(१) कैवल्यमित्यादिश्लोकस्यार्थः ॥ केवलस्य भावः कैवल्यं भेदशून्यम् । सजातीयविजातीयस्वगतभेदातीतमद्वयं यज्ज्ञानं तत्सात्त्विकम् । महर्जनस्तपःसत्यलोकादीनां सुखप्रदमपि संसारदम् । सत्त्वगुणत्वात् ।

सर्वभूतेषु येनैकं भावमव्ययमीक्षते ।
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकमिति ।
तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ।
सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघेति

गीतोक्तेः । ज्ञानसङ्गेनेति ब्रह्माहमस्मीति सङ्गेन । यदुक्तं भगवता ।

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेति ।

तत्र निस्त्रैगुण्यं नोपवर्णितम् । तद्भागवते स एव कथयति मन्निष्ठमित्यादिना । विकल्पस्य भावं(क) वैकल्पिकं नानाभेदप्रतिपादकं यत्तज्ज्ञानं रजो रजोगुणकार्यम् ।

पृथक्त्वेन तु यज्ज्ञानं नानाभावान्पृथग्विधान् ।
वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसमित्युक्तेः ।

यद्देहादिविषयं प्राकृतज्ञानं तत्तामसम् ।

(क) आ० पु० स्त० विकल्पे भवम् इति पा० ।

वासस्य त्रैविध्यमाह ।

वनं तु सात्त्विको वासो ग्रामो राजस उच्यते ।
तामसं द्यूतसदनं मन्निकेतं तु निर्गुणमिति (१) ॥

यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम् ।
अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतमित्युक्तेः ।

मन्निष्ठं तु निर्गुणं स्मृतं निगमागमैरिति शेषेणार्थः ।

अयं भावः । यद्भगवति सर्वात्मनि सर्वभूतसुहृदि सच्चिदानन्दविग्रहे विश्वतनौ अखिलब्रह्माण्डोपादाननिमित्तकारणे सगुणागुणे स्वाधारस्य ज्ञानगुणस्य ज्ञानस्वरूपस्य करणवृत्तीः कारयतीति भक्त्यङ्गभूतं निर्गुणं ज्ञानं संसारनिवर्त्तकमित्यर्थः ॥

(१) वनमित्यादि श्लोकस्यार्थः ॥ वनं वासः सात्त्विकः । भोगाभावेन तपआद्यनुष्ठानात् । ग्रामो वासो राजसः । सर्वजनसंपर्कात् । विषयभोगाच्च । द्यूतसदनं वासस्तामसम् । नीचसङ्गेन शोकमोहादिसंपर्कैर्मिथ्याभाषणात् । मन्निकेतमयोध्यामथुराद्वारकावृन्दावनादिकं तु निर्गुणम् । साक्षान्मदाविर्भावास्तत्सङ्गमावाच्च । तु शब्दो गुणेभ्यो भिन्नप्रकारे यद्वा अर्चामूर्तिस्थानसूचकः ॥

एवं तत्त्रैविध्यमुक्त्वा कर्त्तुरपि तदाह ।

सात्त्विकः कारकोऽसङ्गी रागान्धो राजसः स्मृतः ।
तामसः स्मृतिविभ्रष्टो निर्गुणो मदपाश्रय इति (१) ॥

श्रद्धाया अपि त्रैविध्यमाह ।

सात्त्विक्यध्यात्मकी(क) श्रद्धा कर्मश्रद्धा तु राजसी ।
तामस्यधर्मे या श्रद्धा मत्सेवायां तु निर्गुणेति (२) ॥

---

(१) सात्त्विकः कारक इत्यादि श्लोकस्यार्थः ॥ कारकः कर्मकर्त्ता कर्मफलासङ्गी कर्तृत्वाभिमानशून्यः सात्त्विकः । कर्मफलरागान्धोऽभिमानी राजसः । देशकालादीनां कर्माङ्गानां ज्ञानशून्यस्तामसः । मदपाश्रयो मदेकशरणो निर्गुणः । अयं भावः । सर्वेश्वरं सर्वनियन्तारं सर्वेन्द्रियप्रेरकं सर्वद्रव्यपतिं सर्वकालाश्रयं सर्वफलदातारं सर्वकर्माध्यक्षं भगवन्तं ज्ञात्वा तत्सत्ताकं स्वस्वरूपं मत्वा नासक्तः सन्भक्त्यङ्गानि सर्वाणि कर्माणि कृत्वा तस्मिन्समर्पयति स निर्गुणः ॥

(२) सात्त्विकीत्यादि श्लोकस्यार्थः ॥ आत्मानात्मविचारेण मम परमश्रेय इति विश्वासरूपाध्यात्मकी या श्रद्धा सा सात्त्विकी । कर्मसु देशकालादिषु या राजसी । अधर्मे मद्यमैथुनमांसहिंसादौ या सा तामसी ।

---

(क) श्रीमद्भागवते तु सात्त्विक्याध्यात्मिकी इति पा० ।

सुखस्यापि त्रैविध्यमाह ।

> सात्त्विकं सुखमात्मोत्थं विषयोत्थं तु राजसम् ।
> तामसं मोहदैन्योत्थं निर्गुणं मदपाश्रयमिति ॥

न केवलमेते गुणमयाः किंतु सर्वे पदार्था इत्याह ।

> सर्वे गुणमया भावाः पुरुषाव्यक्तधिष्ठिताः ।
> एताः संसृतयः पुंसो गुणकर्मनिबन्धना इति (१) ।

तद्विनाशे भवविनाशः स्यादित्याह ।

> येनेमे निर्जिताः सौम्य गुणा जीवेन चित्तजाः ।
> भक्तियोगेन मन्निष्ठो मद्भावायोपपद्यत इति ॥
> तस्माद् देहमिमं लब्ध्वा ज्ञानविज्ञानसंभवम् ।
> गुणसङ्गं विनिर्धूय मां भजन्ति विचक्षणा

इत्येवं सिद्धान्तात् ज्ञानस्य भक्तिरेव उत्तमफलम् । यद्वि-भेदज्ञानाश्रयं पुरुषं मत्यपि स्वतन्त्रा निरङ्कुशा भगवद्भक्तिः

---

मत्सेवायां या सा निर्गुणा । सेवा त्वरुणोदयमारभ्य शय-नपर्यन्ता। यथाकालोचिता परिचर्यारूपा मानसी कायिकी वेति ॥

(१) सर्वे इत्यादि श्लोकस्यार्थः ॥ पुरुषो जीवः । अव्यक्तं प्रकृतिः । तयोर्धिष्ठितं अधिष्ठिता ये भावा-स्ते सर्वे गुणमयाः । तद्रूपा एताः पुंसः संसृतयः संसा-रावलयः । जीवस्य । गुणकर्मनिबन्धनाः ॥

स्थिता या भूमविद्यायामतः सा तूत्तमा श्रुतिः।
तस्मात्सेव्यो मया कृष्णो दासेन चिदचिद्वपुः॥१४॥

प्रविष्टा तर्हि तु तदपि ज्ञानं सफलमन्यथा फलशून्यमेव संसारप्रदत्वात् ॥

पूर्त्तेन तपसा यज्ञैर्दानैर्योगैः(क) समाधिभिः।
राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मत-

मिति श्रीभगवदुक्तेः ॥

तत्त्वविन्मतमित्युक्तेस्तत्त्वविदां तु तदेव मतम् । शास्त्रज्ञानविधुराणां मूर्खाणां तु नानामतानीत्यलं विस्तरेण ॥१३॥

ननु यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन

इति श्रुत्या तु भक्तेर्ज्ञानफलत्व(ख)मुक्तमिति शङ्कायामाह त्रिभिः । स्थितेति । सर्वकामैरिति । कृष्णभक्त इति(ग)। छान्दोग्ये भूमविद्यायां स्थिता या पूर्वोक्ता स आत्मरतिरात्ममिथुनो भवतीति श्रुतिरुत्तमा सिद्धान्तभूता । अतः कस्यामपि श्रुतौ न विरोधः । यस्य देवे परा भक्तिरित्यस्याः श्रुतेरर्थस्तु शाण्डिल्येन मुनिवरेण कृतः । स यथा ।

(क) आ० पु० न्त० योगै इति पा० ।

(ख) आ० पु० न्त० त्व इति ना० ।

(ग) आ० पु० न्त० सर्वकामैरिति कृष्णभक्त इति ना० ।

सर्वकामैरकामैर्वा स सेव्यः स्त्रीनरादिभिः ।
एको यतसोऽपि सर्वेषां भुक्तिमुक्तिप्रदः स्मृतः॥१५॥
देवभक्तिरितरस्मिन्साहचर्यादिति (१) ॥

तस्मान्मयापि चिदचिद्विग्रहः श्रीकृष्णः सेव्यः । कीदृशेन मया । तद्दासेन ॥ १४ ॥

अन्यैरपि सर्वकामैरकामैश्च स्त्रीनरादिभिः स एव सेव्यः । यद्यतः स एकोऽपि सर्वेषां भुक्तिमुक्तिप्रदः स्मृतः । स्मृत्येति शेषेणार्थः ।

नित्यो नित्यानां चेतनश्चेतनाना-
मेको बहूनां यो विदधाति कामान् ।

(१) देवभक्तिरित्यादि शाण्डिल्यसूत्रार्थस्तु । यस्य देवे परा भक्तिरित्यत्रेश्वरेतरस्मिन्देवे मन्तव्या । गुरुभक्तिसाहचर्यात् । यतो गुरुभक्तिं विना परमेश्वरभक्तिप्रादुर्भावाभावात् । तस्मात् । स गुरुरपि कर्मदो द्वितीयः । स तृतीयो मन्त्रज्ञानदः । स देवोऽपि परमेश्वरादन्यः । तस्याः परायाः भक्तेर्भवतु ज्ञानं फलम् । परमेश्वरभक्तिस्त्वनुभवात्मकज्ञानसिद्धिः ।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते परा-
मिति भगवदुक्तेः ॥

कृष्णभक्तः सकामोऽपि वरोऽन्यसेवकात्खलु ।
निष्कामादपि तत्कामो यतो मोक्षाय कल्पते॥१६॥

तं पीठगं येऽनुभजन्ति धीरा-
स्तेषां सिद्धिः शाश्वती नेतरेषामिति श्रुतेः ।

त्वत्पादुके अविरतं परि ये चरन्ति
ध्यायन्त्यभद्रनशनं शुचयो गृणन्ति ।
विन्दन्ति ते कमलनाभ भवापवर्ग-
माशासते यदि त आशिष ईश नान्य
इत्युक्तेरपि (१) ॥ १५ ॥

एवं भुक्तिमुक्त्यधिकारित्वाच्छ्रीकृष्णभक्तः सकामोऽप्यन्यदेवस्य निष्कामसेवकाद्वरः खनु निश्चये । कुतः । यतस्तत्कामो मोक्षाय कल्पते । न तु संसाराय ।

(१) त्वत्पादुके इत्यादि श्लोकस्यार्थः ॥ परि ये चरन्तीति यच्छब्दव्यवधानमार्षम् । तव पादुके ये परिचरन्ति परितः कायेन सेवन्ते । मनसापि ध्यायन्ति । वाचा गृणन्ति । किंविशिष्टे । अभद्रनशने । ते भवस्य अपवर्गम्मोक्षं विन्दन्ति । हे कमलनाभ सर्वविषयात्मकजगदाधार यदि ते आशिषः आशासते स्पृहयन्ति तर्हि ता अपि विन्दन्ति । नान्य तव विमुखाश्चक्रवर्त्तिनोऽपि । यदीत्यनेन तेषां निःस्पृहत्वमेवोक्तम् ॥

न मय्यावेशितधियां कामः कामाय कल्पते ।
भर्जिताः(क) क्वथिता धानाः(ख) प्रायो बीजाय नेष्यते
इति भगवदुक्तेः (१) ॥

तस्माद् भगवद्दत्ता भोगाः प्रमादाय न भवन्ति। ध्रुवसुग्रीवादीनामिव(ग) ।

(१) न मयीत्यादि श्लोकस्यार्थः ॥ मयि आवेशिता धीर्बुद्धिर्यैस्ते मय्यावेशितधियः । तेषां कामः ध्रुवसुग्रीवादीनामिव कामाय पुनः संसाराय न कल्पते । किन्तु स एव मोक्षाय योग्यो भवति । प्राय इत्यनेन तेषामिच्छया तु पुनः प्ररोहोऽपि प्रोक्तः ।

यथा सौमित्रिभरतौ यथा संकर्षणादयः ।
तथा तेनैव जायन्ते निजलोकाद्यदृच्छया ।
पुनस्तेनैव गच्छन्ति तत्पदं शाश्वतं परम् ।
न कर्मबन्धनं जन्म वैष्णवानां च विद्यते
इति पाद्मोक्तेः ॥

तत्र दृष्टान्तः । भर्जिता दग्धाः क्वथिताः पक्वा धानाः प्रायो बीजाय अङ्कुरोद्गमाय भवन्तीति(घ) नेष्यते। प्रायः शब्दादमृतवृष्ट्या त्विष्यन इत्यर्थः ॥

(क) आ० पु० स्त० एकवचनान्तः पाठः ।
(ख) आ० पु० स्त० एकवचनान्तः पाठः ।
(ग) आ० पु० स्त० ध्रुवसुग्रीवादीनामिवेति न० ।
(घ) आ० पु० स्त० भवन्तीति इति ना० ।

स एव मोक्षदो नान्यो देवःकोऽपि जगत्त्रये ।
इत्युक्तं निर्जरैर्देवैः श्रीमद्भागवते स्फुटम् ॥१७॥

मत्प्रलोभितो वरैर्यस्त्वमप्रमादाय विद्धि तत् ।
न धीर्मय्येकभक्तानामाशीर्भिर्भिद्यते क्वचिदिति
भगवदुक्तेः ॥

भगवद्भक्तानां तु योगादिभिरपि स्वाधीनं कृतं मनोऽपि संसारसाधनं भवति ।

युञ्जानानामभक्तानां प्राणायामादिभिर्मनः ।
अक्षीणवासनं राजन्दृश्यते क्वचिदुत्थित-
मिति भगवद्वचनात् ॥ १८ ॥

ननु सकामानां भगवद्भक्तानां कथं मोक्षस्तत्राह । स एवेति । मोक्षदस्तु स एव स्वतन्त्रो भगवान् । नान्यः कोऽपि देवो जगत्त्रये इति निर्जरैः शास्त्रसिद्धान्तविद्भिर्देवैरुक्तम् । तद्भागवते श्रीमति स्फुटं व्यक्तम् । तद्यथा ।

वरं वृणीष्व भद्रं ते ऋते कैवल्यमद्य नः ।
एक एवेश्वरस्तस्य भगवान्विष्णुरव्यय इति (१) ॥

(१) वरं वृणीष्वेत्यादि श्लोकस्यार्थः ॥ हे मुकुन्द ते भद्रमस्तु । अद्य नोऽस्माकं संबन्धी ! वरं कैवल्यम् ऋते मोक्षं विना वृणीष्व । कुतः । यतस्तस्य मोक्षस्य तु

यां भुक्तिं ह्यपि ये देवास्तां यच्छन्ति तदाज्ञया।
मयैव विहितान्हितानित्युक्तेः फलदो हरिः॥१८॥

हरिवंशेऽपि ।

अहं कैलासनिलयमासाद्य वृषभध्वजम् ।
आराध्य तं महादेवमस्तुवं(क) सततं शिवम् ॥
ततः प्रसन्नो मामाह वृणीष्वेति वरं हरः ।
ततो मुक्तिर्मया तत्र प्रार्थिता देवसन्निधौ ।
मुक्तिं प्रार्थयमानं मां पुनराह त्रिलोचनः ।
मुक्तिप्रदाता सर्वेषां विष्णुरेव न संशयः ।
तस्माद् गत्वा तु बदरीं तत्राराध्य जनार्दनम् ।
मुक्तिं प्राप्नुहि गोविन्दान्नरनारायणाश्रम

इति घण्टाकर्णोक्तेः ॥ १७ ॥

नन्वपवर्गदाने स्वसमर्था देवा भुक्तिदाने विभवः श्रूयन्ते। तत्राह । यामिति । यां भुक्तिं देवा यच्छन्ति । तामपि तत्तस्य भगवत आज्ञया । अतो न स्वतन्त्राः । कुतः ।

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ।
स तया श्रद्धया युक्तस्तस्या राधनमीहते ॥
लभते च ततः कामान्मयैव विहितान्हि तानिति

भगवदुक्तेः ।

(क) आ० पु० स्त० महत्तवम् इति पा० ।

अतो वै स्वात्मनात्मानं तद्दासं क्लेशवर्जितम्।
मत्वान्यत्तु हरिं सर्वं ज्ञात्वा तं विभजेद् बुधः॥१६॥
कृष्णदास्यं तु जीवस्य प्रियादासेन वर्णितम्।
आगमानां विचारेण भवत्वार्य्यमतं हि तत्॥२०॥

इति श्रीसुसिद्धान्तोत्तमे जीवदासत्ववर्णनो
नाम तृतीयो विश्रामः ॥३॥
श्रीहरये नमः ॥

कर्मफलदो भगवानेव। न तु कोऽपि देव इत्यर्थः ॥१८॥

अतो बुधस्तु स्वात्मना मनसा स्वात्मानं जीवं क्लेशवर्जितम् आनन्दमयं तस्य भगवतो दासं मत्वाऽन्यत्सर्वन्तु हरिं ज्ञात्वा तं भगवन्तं विशेषेण भजेत् ॥१९॥

आगमानां विचारेण यत्प्रियादासेन जीवस्य भगवद्दास्यं वर्णितं तद् आर्याणां भागवतानां सम्मतम्भवतु॥२०॥

इति श्रीअनुत्तमायां टीकायां प्रियादासाचार्यविरचितायां जीवदासत्ववर्णनो नाम तृतीयो
विश्रामः ॥३॥श्रीकृष्णाय नमः।

स एक एवेश्वरः। एवकारान्नान्यः कोऽपि। अत ईश्वरत्वात् स सकामायापि स्वभक्ताय मुक्तिं ददातीत्यर्थः ॥

श्रीहरये नमः ॥

ननु जीवेश्वरत्वं तु दासस्वामित्वमेव च ।
नानात्वं कल्पितं प्राहुरद्वैते मुनयोऽव्यये ॥१॥
द्विचन्द्रत्वं यथाकाशे रज्ज्वां सर्पत्वमेव च ।
स्वनानात्वं तथा तत्त्वमभेदे कल्पितं परे ॥ २ ॥

श्रीहरये नमः ॥

चतुर्थेऽस्मिंस्तु विश्रामे सर्वसंदेहनुत्तये ।
वेदवेदान्तनेत्रेण कथ्यते शास्त्रनिर्णयः ॥

तृतीये विश्रामे जीवस्य स्वाभाविकं भगवद्दासत्वमुपवर्णितम् । तदसहमानो मायावादी विवदते । नन्विति द्वाभ्यां । ननु जीवेश्वरत्वं जीवश्चेश्वरश्च जीवेश्वरौ तयोर्भावस्तत्त्वम् । तद्दासस्वामित्वं च स्वामिनः सेवोपकरणं नानात्वन्त्वव्ययेऽद्वैते ब्रह्मणि मुनयः कल्पितं प्राहुः ॥१॥

तत्र यथानुरूपं निदर्शनम् । यथेति । यथाकाशे द्विचन्द्रत्वं रज्ज्वां सर्पत्वमेव च । स्वस्य नानात्वमपि तथा परे अभेदे ब्रह्मणि तत्त्वं कल्पितम् । न च सत्य(क)सर्पज्ञानेन तस्यां तत्त्वं कल्प्यते(ख) । तदभावे तदभावः । तदुक्तं च ।

(क) भा० पु० स्त० सति इति पा० ।
(ख) भा० पु० स्त० कल्पते इति पा० ।

अध्यस्यते खपुष्पत्वमसत्कथमवस्तुनि ।
मज्ञातगुणसत्ताकमध्यारोप्येत वा न वेति

वाच्यम् । अन्धपरम्परया संस्कारजन्यो भ्रमः संस्कारसिद्धये पूर्वप्रतीतिमेवापेक्षते । न तु वस्तुसत्त्वमित्युक्तेः । यथा मुद्रापादासत्त्वेऽपि पारम्पर्येण तत्स्मृत्या एकपदा पादाभ्यां च पादैरपि व्यवहारः सिध्यति । न च

दृष्टः श्रमः कर्मत आत्मनो वै भर्त्तुर्गन्तुर्भवतश्चानुमन्ये ।
यथाऽसतोदानयनाद्यभावात् समूल इष्टो व्यवहारमार्ग

इत्यादिना प्रपञ्चः सत्यः । कुतः । अर्थक्रियाकारित्वात् । यः पुनरसत्यः।नासावर्थक्रियाकारी। यथा मिथ्याघटो नोदकानयने प्रभवतीति वाच्यम्। स्वप्नव्यवहारदर्शनात्। कर्त्तृकरणक्रियाकर्मफलानां पुरुषघटोदकानयनपानतृड्विनाशादीनां मिथ्यात्वमेव। ननु सर्वमिथ्यात्वात्तथाभूताद्वेदान्मृषाज्ञानेन यो जात आत्माऽनुभवः सोऽपि मिथ्या भवितुमर्हतीति चेन्न । मिथ्याभूतात्स्वप्नस्त्रीसङ्गात्सत्यकामनिवृत्त्यनुभवात् । तस्मात्त्वं च तं च तत्त्वं च कल्पितमेव । ननु तर्हि कथं सत्यप्रतीतिः । सा तु मायया ।

ऋतेऽर्थं यत्प्रतीयेत न प्रतीयेत चात्मनि ।
तद्विद्यादात्मनो मायां यथाभासो यथा तम

इत्युक्तेः (१) ॥

(१) ऋतेऽर्थमित्यादि श्लोकस्यार्थः ॥ ऋतेऽर्थं य-

तदनुभवमाह मैत्रेयः ।

यदर्थेन विनामुष्य पुंस आत्मविपर्ययः ।
प्रतीयत उपद्रष्टुः स्वशिरश्छेदनादिक-
मित्येवं तत्त्वमपि। श्रुत्या(क)पि तत्त्वमसीत्यादिना भ्रम-
निषेधेन जीवेश्वरयोरभेद एव प्रतिपादितः ।

यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तदिति

श्रुत्यापि । तद्भावनायाः फलमाह श्रुतिः ।

जाग्रत्स्वप्नसुषुप्त्यादि प्रपञ्चं यत्प्रकाशते ।
तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते इति ।

तथैवाभेदान्वयेन भगवानपि पुरञ्जनमुपदिशति ।

अहं भवान्न चान्यस्त्वं त्वमेवाहं विचक्ष्व भोः ।
न नौ पश्यन्ति कवयश्छिद्रं जातु मनागपीति ।

उपदेशफलमाह श्रुतिः ।

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहमिति ॥

अणोरणीयानहमेव तद्व-
न्महानहं विश्वमहं विशुद्धम् ।
पुरातनोऽहं पुरुषोऽहमीशो
हिरण्मयोऽहं शिवरूपमस्मीति ॥

(क) भा० पु० स्त० मसिम् स्यो इति पा० ।

एवं चेत्तर्हि कोऽन्यस्तत्कल्पको भेदवर्जिते ।
वदाभेदे परे तस्मिन्येनेयं तु भिदा कृता ॥३॥

अपाणिपादोऽहमचिन्त्यशक्तिः
पश्याम्यचक्षुः सुशृणोम्यकर्णः ।
अहं विजानामि विविक्तरूपो
न चास्ति वेत्ता मम चित्सदाहमिति ।

एवं श्रुतिस्मृतिसंमतादद्वैतमतं सिद्धम् (क) ॥२॥

तन्निराकरोत्येकादशार्द्धेन । एवमिति पूर्वपक्षनिराकरणे। एवं चेद् इति प्रयोगः । यतो यत्परं ब्रह्म तत्त्वमेव । तत्त्वमेवेत्युक्ता या ब्रह्माहमस्मीति भावना कारिता श्रुत्या सा तु पूर्वोक्तरीत्या तद्भावारूढत्वेन तत्तुल्यरूपप्राप्तये ।

भावो हि भवकारणमिति शुकोक्तेः ।

(क) भा० पु० स्क० द्वितीयश्लोकोपरि तस्माज्जीवेश्वरत्वं सेवकसेव्यत्वं च तद्वितरनानात्वं च कल्पितम् । यथा रज्ज्वां सर्पत्वं शुक्तौ रजतत्वं स्वनानात्वं चेति टिप्पणी वर्त्त० ।

द्वितीयश्लोक टी० अध्यारोप्येण वा न चेत्यस्योपरि सत्यपदार्थं सत्यस्यैवारोपो भवति न तु मृगतृष्णाजले गगनारविन्दस्येति वाच्यम् इति टिप्पणी वर्त्त० ।

तत्त्वं च तत्त्वं च तत्त्वं चेत्यस्योपरि आत्मा परमात्मा माया चेति टि० वर्त्त० ।

तत्त्वं च कल्पितमेवेत्यस्यापि ब्रह्मैव सत्यमित्यधि० वर्त्त० ।

तदनुभवस्तु पौण्ड्रकेण चक्राद्यायुधधारिणा कृत-स्तेन स्वस्मिन्वासुदेवानुसंधानं कृत्वोक्तम्।

वासुदेवोऽवतीर्णोऽहमेक एव न चापरः।
भूतानामनुकम्पार्थं त्वं तु मिथ्याभिधां त्यजे-

तीत्थम्भूतस्य निष्कपटदृढानुसंधानस्य फलमुक्तं शुकेन। तद्यथा।

स नित्यं भगवद्ध्यानप्रध्वस्ताखिलबन्धनः।
बिभ्राणश्च हरे राजन्स्वरूपं तन्मयोऽभवदिति।

य आत्मनि तिष्ठतीति श्रुतेर्जीवस्यापि भगवद्देहत्वम्। तस्माद् देहिदेहयोरभेदाभिप्रायेण सख्यभावेनाप्युक्तं हरिणा त्वहं भवान्न चान्यस्त्वमिति। तस्माद् ब्रह्मभावप्राप्त्यर्थमेव ब्रह्माहमिति भावना कारिता। न तु भेदाभावज्ञानाय। अन्यथा

तद् ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवमिति।

ब्रह्मसंस्थोऽमृतत्वमेतीति। रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवतीति। ब्रह्मविदाप्नोति परमिति।

आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चनेति।
तस्य विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यमिति।

स एतस्मात्सर्वजीवसमष्टिरूपादुत्कृष्टाद्धिरण्यगर्भादुत्कृष्टं परमेश्वरं पश्यतीति। परं ज्योतीरूपं संपद्य स्वेन रूपेणाभिनिष्प-

न्यत इत्यादीनामबाधितभेदप्रतिपादिकानां श्रुतीनां सिद्धान्त(क)-विरुद्धापत्तिः । अतो भगवता सर्वश्रुतिसारार्थभूतायां गीतायां कुत्रापि त्वं ब्रह्मासि मद्रूपोऽसीति बोधाभावेन भक्तोऽसि मे सखा चेत्युक्तम् । अतो वेदानां त्रैगुण्यात् सात्त्विकाद्वैतज्ञानेन वेदैर्निर्गुणज्ञानाधिकारी जीवः कृतः ।

कैवल्यं सात्त्विकं ज्ञानम्मन्निष्ठन्निर्गुणं स्मृत-
मिति भगवदुक्तेः ।

एवं वेदसिद्धान्तमज्ञात्वा यन्मतं भवतोक्तं तच्छिष्टापरिग्रहम् । यतः पश्वादिपददर्शनश्रवणं विना मुद्रायामपि चतुष्पादारोपोऽपि न भवति । अस्मिन्सन्ध्ये स्थाने परमेश्वरं पुत्रादिकामानां निर्मातारं कामं कामं पुरुषो निर्मिमाणोऽनया श्रुत्यैके शाखिनः स्वप्नसृष्टिकारकं परमेश्वरमेवामनन्ति । तस्मादीश्वरकर्तृकत्वात् स्वप्नसृष्टिरपि सत्यैव । तां विना एकस्यां घटिकायां परमसुखदुःखजनकानां जीवकृतकर्मणां फलदानं न संभवति । तस्मात्तत्तत्कर्मफलाय सा सृष्टी रचिता भगवतातोऽसता वस्तुनार्थक्रियाकारित्वमपि न संभवति । न च तज्जलानिति । सदेव सौम्येदमग्र आसीदिति । तदैक्षत एकोऽहं बहु स्यामिति । तस्माद्वा एतस्मादाकाशः संभूत इति । आचार्यवान्पुरुषो वेद इति । शुको मुक्तो वा वामदेव इत्या-

(क) श्या० पु० स्त० सिद्धान्ते इति पा० ।

दि सर्वं कस्यचिदनिर्वचनीयस्य नित्यमुक्तजीवस्य स्वप्न एव। तस्मिन्मिथ्यैव सर्वमिति वाच्यम्। नित्यमुक्तजीवे सत्त्वादिगुणाभावात्। जाग्रदाद्यवस्था तु गुणजैव। बद्धस्य त्वेतादृशं स्वप्नं (!) न संभवति तावत्। अद्वैताद् ब्रह्मणः पृथग्मुक्तजीवसत्त्वमपि न संभवति। भवताम्मते द्वैताभावात्। तथा सत्यपि वेदानां स्वप्नत्वाद् ब्रह्मणि शब्दप्रमाणाभावेन तत्सत्त्वाभावाद् देहात्मवादप्रसङ्गः। तस्मात्त्वन्मताश्रयाः परिच्छन्नचार्वाका अपि वेदबाह्याः। यतो दृष्टश्रुतपदार्था एव स्वप्नगोचरा भवन्त्यतोऽन्यपदार्थास्तु नित्या अपि। स्वप्नजनेक्षितेव पुरुषः स्वस्य तज्जनानामपि तत्तदिन्द्रियैः(क) सुखदुःखादीननुभवति। कथं सर्वेऽनुभवङ्कुर्वन्तीति(ख) तस्मात्कुतर्काश्रया यूयम्। तथापि भवतां सिद्धान्ते एवं चेद् भवतोक्तप्रकारेण जीवेश्वरादिकं कल्पितं चेत्तर्हि भेदवर्जिते सजातीयविजातीयस्वगतभेदशून्ये ब्रह्मणि तत्कल्पको नानात्वकल्पकः कोऽन्यः। येन कल्पकेनाभेदे तस्मिन्परे इयं भिदा कृता। तं कल्पकं वद भो मित्र। अन्यस्मिन्नन्यारोपस्तु चतुर्णां सत्त्वे भवति। तदभावे तदभावः(ग)। ब्रह्मणि तु कस्यापि न स्याद् भेदाभावात् ॥३॥

(क) आ० पु० न्तो० तत्तदैन्द्रियैः इति पा०।

(ख) आ० पु० न्त० इति इति ना०।

(ग) आ० पु० न्त० तद्भावः इति पा०।

अज्ञानेन कृतां सेति न वक्तुं शक्यते कदा ।
यतस्तद् द्रव्यमालम्ब्य तिष्ठति त्वन्यथा न वै ४॥

आत्मानमेवात्मतया विजानतां
तेनैव जातं निखिलं प्रपञ्चितम् ।
ज्ञानेन भूयोऽपि च तत्प्रलीयते
रज्ज्वामहेर्भोगभवाभवौ यथा ।
अज्ञानसंज्ञौ भवबन्धमोक्षौ
द्वौ नाम नान्यौ स्त ऋतज्ञभावात् ।
अजस्रचित्यात्मनि केवले परे
विचार्यमाणे तरणाविवाहनीति (१) ॥

दर्थं विना मिथ्याभूतं देहादिकमात्मन्यधिष्ठाने प्रतीयेत सदात्मरूपं न प्रतीयते तदात्मनो मायां विद्यात् । तत्रार्थं विना प्रतीतौ दृष्टान्तः । यथाभास आकाशे द्विचन्द्रादिः । सतोऽप्यप्रतीतौ दृष्टान्तस्तु यथा तमो राहुः । स तु ग्रहमण्डले विद्यमानोऽपि न दृश्यते ॥

(१) आत्मानमित्यादि श्लोकद्वयस्यार्थः ॥ आत्मानं स्वात्मानमात्मतया चिन्मात्रतया निर्विशेषाद्वैततया ब्रह्मत्वेनाविजानतां विशेषेण जीवेश्वरयोर्विरोधांशत्यागेनाभेदान्वयमजानतां पुंसां तेनैवाज्ञानेन निखिलं प्रपञ्चितं देहादिकं सर्वं विश्वं जातम् । भूयो-

अपि पुनरपि तद्वारमज्ञानेन तत्तस्मिन्नात्मनि प्रलीयते। अज्ञाद्धात्पुनः संसारो न भवति। यथा रज्ज्वामहेर्भोगभवाभवौ। अयं भावः। रज्ज्वज्ञाने तस्यां सर्पदेहस्य भवस्तज्ज्ञाने तस्यां लय इत्यर्थः। ननु रज्ज्वज्ञानं तज्ज्ञानं च ते उभे किं नित्ये। न हि न हि। ज्ञानाज्ञाने हि अप्यज्ञानकल्पिते इत्याह। अज्ञानसंज्ञाविति। तस्मिन्नात्मनि विचार्यमाणे सति भवबन्धमोक्षौ द्वौ नाम प्रसिद्धौ अज्ञानसंज्ञौ अज्ञानेन संज्ञा ययोस्तौ। ते ज्ञानाज्ञाने मूलाज्ञानस्याङ्गे। विद्याविद्ययोर्मायाङ्गत्वात्। यत ऋतज्ञभावादन्यौ न स्तः। ऋतश्चासौ ज्ञश्च ऋतज्ञः परं ब्रह्म। तस्य भावो धर्मः सत्ता। तस्माद्भावादन्यौ नस्तः। यद्वा ऋतज्ञो यो भावः पदार्थः अभावप्रत्यनीकः परं ब्रह्म तस्मादन्यौ न स्तस्तदेवाज्ञानाद् बन्धमोक्षरूपे अज्ञानज्ञानात्मके भवति। तदभावे तदभावः(क)। कस्मिन्विचार्यमाणे। अजस्रचिति अखण्डचैतन्ये। पुनः। केवले अभेदज्ञानघने। यत आत्मनि व्यापके। तत्र यथानुरूपं निदर्शनम्। तरणौ रवौ राज्यहनी इव। अयं भावः। सूर्यमण्डलादर्शनदर्शनाभ्यां राज्यहनी। तन्मण्डले तु न रात्रिर्न दिवा। नित्यप्रकाशरूपत्वात्। तद्वद् ब्रह्मादर्शनदर्शनाभ्यां बन्धमोक्षौ। तस्मिन्नज्ञानाभावेन नित्यमुक्तत्वान्न बन्धो न मोक्षः॥

(क) आ० पु० स्त० तद्भावः इति पा०।

इति पूर्वपक्षस्थिताभ्यां द्वाभ्यां श्लोकाभ्याम् अज्ञानेन सा भिदा कृतेति वक्तुं न शक्यते। कुतः। यतस्तदज्ञानं तु द्रव्यमालम्ब्य तिष्ठति। गुणत्वात्। नान्यथा तु। निश्चयार्थे वै। द्रव्यं विना गुणसत्त्वाभावात्। ननु चतुर्विंशतिगुणेषु नाज्ञानं श्रूयते। कथं तस्य गुणत्वम्। सत्यम्। बुद्धिर्ज्ञानमिति वचनात्। बुद्धिशब्देन यदुक्तं ज्ञानं तत्सत्त्वादिगुणकार्यं त्रिविधम्। यथार्थानुभवायथार्थानुभवसंशयभेदात्। तद्वति तत्प्रकारको यथार्थानुभवः। अतद्वति तत्प्रकारकस्त्वयथार्थानुभवः। पुरुषे स्थाणुर्वा पुरुषो वेति संशयः। तस्मात्तयोर्ज्ञानाज्ञानयोरभेदान्वयात्कुत्रचिदज्ञानशब्दशब्दितं ज्ञानमेव। कुत्रचिज्ज्ञानशब्दशब्दितमज्ञानमेव च। तस्मादज्ञानं ज्ञानसदृशं ज्ञानाधमं ज्ञातव्यम्। नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतेरिति शब्दानुशासनोक्तत्वात्। न त्वज्ञानं ज्ञानाभावम्। यथा ब्राह्मणसदृशः अब्राह्मणः। द्वैतसदृशमद्वैतम्। न तु द्वैताभावमित्यर्थः।

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिता

इत्युक्तेः। तस्मादज्ञानशब्देन गुण एव। स तु द्रव्याश्रय एव ॥४॥

द्वैताभावात्परं ब्रह्म विना द्रव्यं न दृश्यते ।
तस्मात्तदाश्रितं यत्किं(क) तस्मिंस्तत्त्वं हि कल्पते ५
किंवा तदावृतं ब्रह्म स्वस्मिंस्तत्त्वं हि मन्यते ।
यथा वातावृतः कोऽपि पश्येत्स्वात्मानमन्यथा ६ ॥

द्रव्यं तु परं ब्रह्म विना न दृश्यते । कुतः । द्वैताभावात् । तस्माद्धेतोः किं तत्(ख) अज्ञानं तदाश्रितं ब्रह्माश्रितं तेन तस्मिन्ब्रह्मणि तत्त्वं जीवेश्वरत्वम् । हिशब्दः समुच्चयार्थे । सेव्यसेवकत्वं नानात्वं च कल्पते । यथा गृहाश्रितं तमो गृहमावृत्य तदर्शनं कल्पयति ॥५॥

किंवा ब्रह्मैव तदज्ञानावृतं सत्स्वस्मिंस्तत्त्वं नानात्वं जीवेश्वरत्वं च मन्यते । तत्त्वं मत्वानर्थादिकमपि चाभिपद्यते । यथा कोऽपि वातावृतो विक्षिप्तः स्वात्मानमन्यथा पश्येत् । तस्मिन्सति परमाश्चर्यमिदम् । यतो ध्वान्तायोगेन कश्चित्पुरुषो रज्ज्वां सर्पारोपाद्भययुतो भवति । न तु सा(ग) सर्पोऽहमिति मन्यते । कथं ज्ञानात्मकं ब्रह्म स्वस्वरूपमजानज्जीवोऽहमिति मन्यते ॥६॥

तथा सत्यपि ब्रह्मण्यज्ञानावृते सति तद् ब्रह्म तस्याज्ञान-

(क) आ० पु० म० तस्मिन् इति पा० ।

(ख) आ० पु० म० सत् इति पा० ।

(ग) आ० पु० म० स इति पा० ।

तथा सत्यपि तद्ब्रह्म तस्य क्रीडामृगो हि किम् ।
यतस्तेन हि तस्याद्धा बन्धमोक्षत्वदर्शनात् ॥७॥
तथा भवतु ते ब्रह्म ह्यथापि पृच्छ्यते मया ।
अनाद्यनन्तमज्ञानं सादि सान्तं वदाथ तत् ॥८॥
आद्ये त्वद्वैतहानिः स्यात्तथा पक्षेऽपरेऽपि च ।
अनिर्मोक्षप्रसङ्गः स्यात्तस्य तेन ततो न तत् ॥९॥

स्य किं क्रीडामृगः । हि निश्चयार्थे । कुतः । यतस्तेनाज्ञानेन तस्य ब्रह्मणोऽद्धा साक्षाद् बन्धमोक्षत्वदर्शनात् । अयं भावः । तदेव तस्मिञ्जीवत्वभावनया अज्ञानाङ्गेन बध्नाति । ज्ञानाङ्गेन ब्रह्माकारवृत्त्या बन्धनान्मुक्तं करोति । तस्मिन्सति जडत्वापत्तिः ।

आत्मानमेवात्मतया विजानतां
तेनैव जातं निखिलं प्रपञ्चितम् ।
ज्ञानेन भूयोऽपि च तत्प्रलीयते इत्युक्तेः ॥७॥

तथा ते ब्रह्म भवत्वज्ञानस्य क्रीडामृगो भवतु । अथापि मया पृच्छ्यते ॥ सार्द्धद्वाभ्याम् । अनाद्यनन्तमिति । तद् अज्ञानम् अनाद्यनन्तं वा । सादि सान्तं वा किम् । अथ मे मम प्रश्नान्तरं वद ॥ ८ ॥

आद्ये पक्षे तस्यानाद्यनन्तत्वे अद्वैतहानिः स्यात् । तस्यै-

**वक्तुं न शक्यतेऽनादि सान्तं तदपि कर्हिचित्।**
**यतोऽस्यानाद्यनन्तत्वाद्विश्वस्यातो न तत्तथा १०।**

व द्वितीयत्वमसिद्धेः। तुशब्दोऽनुक्तदूषणान्तरसूचकः। तस्यानाद्यनन्तत्वे महानर्थापत्तिः। यतो ब्रह्म स्वस्मिन्ननादि जीवत्वं मत्वानर्थादिकं मपद्यते इति दुर्वचः। यथा रज्जुः स्वरूपेऽनादिसर्पबुद्ध्या तद्भयेन कम्पादियुक्ता भवेत्। अपरे द्वितीयपक्षे सादिसान्ते तस्य ब्रह्मणोऽनिर्मोक्षप्रसङ्गः। यतः शुद्धब्रह्मणः सकाशादुत्पन्नेनाज्ञानेन जीवत्वमाप्तं ब्रह्म सुखदुःखादिकं मपद्यते। पुनः सत्सङ्गेन शास्त्रविचारात्माप्तज्ञानवैराग्याभ्यां तच्छित्त्वा स्वस्वरूपेण स्थितमपि पुनरुत्पन्नाज्ञानाधीनं भवत्येवं तत्प्रसङ्गः। चकारान्न साद्यनन्तमपि। तदेव प्रसङ्गात्। बन्धने जाते तस्यान्ताभावात् ॥१०॥

तदज्ञानमनादि सान्तमपि वक्तुं न शक्यते। यतोऽस्य विश्वस्यानाद्यनन्तत्वात्। भवत्सिद्धान्ते संसारस्त्वज्ञानकल्पितस्तस्यानाद्यनन्तस्य कार्यस्य न कारणमनादि सान्तं भवितुमर्हति। अतस्तदज्ञानं तथा न। अनादि सान्तन्न। किन्त्वनाद्यनन्तमेव। तस्मात्तत्पक्षेऽपि नानात्वमप्यनाद्यनन्तं कथम् उच्यते। जीवेश्वरत्वं सेवकसेव्यत्वं च नानात्वं च कल्पितम् ॥१०॥

जीवस्यानादि सान्तं हि तदज्ञानं विकल्पकम् ।
तन्नाशेनापवर्गो वै जीवस्य ब्रह्मता पुनः ॥११॥

जीवाज्ञानं कुतो ब्रह्मन्नज्ञानेन हि कल्पितम् ।
तत्त्वं ब्रह्मण्यतस्तस्याज्ञानं कस्मान्न कथ्यते ॥१२॥

तस्य तस्मिन्नबोधे वै ब्रह्मा ज्ञानीत्यसन्मतम् ।
त्वया शास्त्रविहीनेन स्वीकृतं बत जन्मदम् ॥१३॥

एवं सिद्धान्तमसहमानः पुनः स्वमतमाह । जीवस्येति । नन्वस्मिन्मते जीवस्यैवाज्ञानमनादि सान्तम् । किंभूतम् । विकल्पकम् । तदनादित्वाद् बन्धनं त्वादिशून्यम् । तस्यान्तत्वात्तस्य नाशेन जीवस्यापवर्गो मोक्षो भवति । वै निश्चयार्थे । अतः पुनः तद्ब्रह्मता । तस्मान्नानात्वं कल्पितम् ॥ ११ ॥

तन्मतं निराकरोति सप्तभिः । जीवाज्ञानमिति । भो ब्रह्मँस्तव तु वदतो व्याघातः । यतो जीवस्याज्ञानं कुतो ब्रह्मणि तत्त्वं जीवेश्वरत्वं तु तेनाज्ञानेन कल्पितमिति भवतैवोक्तम् । तस्मात्तस्य ब्रह्मणोऽज्ञानं कस्मान्न कथ्यते । ब्रह्माज्ञानि इति त्रपां विहाय वद । तज्जीवमागेव (!) वृत्तित्वात् ॥ १२ ॥

तस्य ब्रह्मणस्तस्मिन्नबोधे अज्ञाने सति ब्रह्म अज्ञानि

एकदेशेऽपि चा ज्ञानावृते ब्रह्मणि तस्य तत् ।
यथा नीलावृतं कण्ठे नीलकण्ठो हरः स्मृतः ॥१४॥

इत्यसत् मतं शास्त्रविहीनेन अवैदिकेन त्वया स्वीकृतम् । बत खेदे । यतस्तन्मतं जन्मदम् । एवं सति तस्यानाद्यनन्तत्वादपि भावात्वं तु नित्यमेव । कुतः । आद्यनन्तत्वाभावादिसान्तत्वसादिसान्तत्वानां प्राग्निराकरणात् ॥१३॥

नन्वज्ञानं त्वनन्तस्य ब्रह्मण एकदेशे स्थित्वा तमेवाच्छाद्य तस्मिन्नानात्वं कल्पयति । तस्मान्नोक्तदोषः । तत्राह । एकदेशे इति । तावत्तु गुणगुणिनोः समवायसंबन्धादेकदेशे निवासो न संभवति । सर्वदेशव्यापकत्वात् । पृथिव्या एकदेशे गन्धस्य निवास इति वक्तुं न शक्यते । अनुभवाभावात् । नन्वाकाशस्यैकदेशस्थो मेघस्तमेव देशमावृत्य तद्दर्शनेन ध्वान्तत्वं कल्पयति । तथात्रापीति चेन्न । तयोस्तत्सम्बन्धाभावात् । यतः स्वस्वरूपं मेघावृतं जातमित्याकाशो न मन्यते । आकाशस्य तु शब्द एव गुणः । तथापि भवतां कुमते एकस्मिन्देशेऽप्यज्ञानावृते ब्रह्मणि तस्य ब्रह्मणस्तदेवाज्ञानत्वम् । यथा नीलावृते कण्ठे सति हरो नीलकण्ठः स्मृतः । तथा चन्द्रशेखरो भालचन्द्रो गजाननः श्रीवत्साङ्को भगवान्स्मृतः ॥ १४ ॥

तत्कल्पितेन जीवत्वेनाश्चर्यमिदमद्भुतम् ।
जीवत्वं मन्यते ब्रह्म स्वस्मिन्स्वज्ञानविप्लवात्॥ १५॥
ध्वान्तावृतं न चात्मानं मन्यते भास्करः कदा ।
उलूककल्पितेनाद्धा तेन तन्मन्यते कथम्॥ १६॥
आभासः प्रतिविम्बो वा जीवश्चोक्तो महर्षिभिः ।
येन केन प्रकारेण तस्य बोधाय सात्त्वतैः॥ १७॥

तथापीदं तु महदाश्चर्यन्दृष्टान्ताभावात् । कुत्रापि कदापि तद्दर्शनश्रवणाभावाच्च । तत्किम् । तत्राह । तदिति द्वाभ्याम् । ब्रह्मणि तत्तेनाज्ञानेन कल्पितेन जीवत्वेन ब्रह्मापि कथं स्वस्मिञ्जीवत्वं मन्यते । किं स्वज्ञानविप्लवादित्यपि वाक्यमुपहासास्पदम् ॥ १५ ॥

उलूककल्पितेन रवौ ध्वान्तेन भास्करस्तु स्वात्मानमावृतं न मन्यते । कथं तद् ब्रह्म बृहद् व्यापकं तेन कल्पितेन तत्त्वेन तत्त्वं मनुते ॥ १६ ॥

ननु एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति श्रुत्या
यथा पुरुष आत्मानमेकमादर्शचक्षुषोः ।
द्विधाभूतमवेक्षेत तथैवान्तरमावयोरिति

स्मृत्या प्रतिबिम्बवादेन जीवेश्वरयोरभेदादद्वैतं ब्रह्म प्रतिपादितम् । तथावच्छिन्नवादेनापि ।

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तद्वज्जीवो नभोपम इति श्रुत्या

घटे भिन्ने यथाकाश आकाशः स्याद्यथा पुरा ।
एवं देहे मृते जीवो ब्रह्म संपद्यते पुनरिति

स्मृत्यापि । तत्किं तासां भ्रमविजृम्भितं मतम् । न हि न हि । ताभिस्त्वधिकारानुरूपवाक्यैर्जीवाः प्रबोधितास्तेषां मङ्गलायेत्याह । आभास इति । सात्त्वतैर्नारदादिभिर्महर्षिभिर्वेदमन्त्रैः । ऋषिर्मन्त्र इति वचनात् । तैः सर्वैर्जीवः कुत्राभास उक्तः । कुत्र प्रतिविम्बश्च । चकारात्कुत्र बुद्ध्यवच्छिन्नः । वाशब्दात्कुत्रापि विवर्त्तः । तानि तत्तद्वादप्रतिपादकानि वाक्यानि तु येन केन प्रकारेण देहाज्जीवात्मा भिन्नो ज्ञानस्वरूपो ज्ञानगुण इति जीवस्य बोधायोक्तानि । तेन बोधेन सात्त्विकगुणज्ञानाभिमानिनामीश्वराधीनत्वमसहमानानामपि भगवत्समैश्वर्यप्राप्तये तदभेदभावना कारिता । तया भावनया निर्गुणज्ञानप्राप्त्या स्वयमेव स्वस्वरूपं ज्ञास्यतीत्यभिप्रायस्तेषाम् । यतो दृष्टश्रुतदृष्टान्तेन दार्ष्टान्तिकस्याशु बोधो भवति । तस्माद्दशवादपरित्यागेन तत्तद्वादाः प्रतिपादिताः । स वादस्तु दुर्ज्ञेयः । भगवत्कृपाभावात् ॥१७॥

न सिद्धान्तस्तथा तेषां तैर्यतः परमेश्वरः ।
मुक्तजीवैरनावृतैरुक्तः प्राप्यो मुमुक्षुभिः ॥१८॥

तस्मान्न तथैव तेषां सिद्धान्तः । तावत्तु ते वादा अद्वैते निराकारे ब्रह्मणि भवतां सिद्धान्तेऽपि दोषावहा एव । यत उपाधिद्रष्ट्रोर्द्वयोः सत्त्वे प्रतिबिम्बं सिध्यति । तथाभासोऽपि त्रयाणां दृश्यदृष्टभ्रमाणाम्(क) अधिष्ठानः मज्ञातगुणकः भ्रमः कल्पक इति चतुर्णां सत्त्वे कस्मिंश्चिदधिष्ठाने कस्याप्यारोपो भवेत् । तथा कल्पकादीनां त्रयाणां कल्पकाधिष्ठानावच्छेदकानां(ख) सत्त्वे बुद्ध्यवच्छिन्नश्चतुर्थोऽपि । तत्किमपि तु नास्ति । द्वैताभावात् । तेषां सत्त्वेन अद्वैतमतहानात्वपि प्रतिबिम्बं तु साकारपदार्थस्यान्यस्मिन्साकारपदार्थे भवति । निराकारस्य ब्रह्मणो मिथ्याभूतान्तःकरणे तदभावात् । अतस्तद्भावः सद्संमतः । भवत्सिद्धान्ते सति मृगतृष्णाकल्पिते जलेऽपि कालाकाशदिशामपि तत्सम्भवात् । ननु निराकारस्य शब्दस्य प्रतिशब्दरूपं तच्छ्रूयते । तथात्रापीति चेत्तत्रोच्यते । साकारद्रव्यनिष्ठस्य शब्दस्य सत्यां दिशि श्रूयते । तदभावे तदभावः । आकाशस्तु साकार एव । पञ्चीकरणादुत्पत्तिलयश्रवणात् ।

(क) आ० पु० न० दृश्यदृष्टभ्रमाणाम् इति टिप्पणीरूपेण मयाणाभिरवस्योपरि लिखितं वर्त्तते ।

(ख) आ० पु० न० कल्पकाधिष्ठानावच्छेदकानामिति टिप्पणीरूपेण मयाणाभिरवस्योपरि लिखितं वर्त्तते ।

तस्य ब्रह्मणः साकारत्वे जीवस्यापि साकारत्वं स्यात् । तत्तु न श्रूयते । तस्मिन् सत्यपि तत्मातिशोधनमयुक्तम् । तस्य मिथ्यात्वात् । जीवं त्वीश्वरस्तत्त्वमस्यादिना बोधयति । तस्मात्तद्वादस्त्वशास्त्रज्ञानां संमतः । न तु शिष्टानाम् । तथावच्छिन्नवादोऽपि । विवर्तस्तु मूलशून्यः । वेदवेदान्ते तद्वादाश्रवणात् । यतोऽद्वैते तु न किमपि संभवति । द्वैतेऽपि यथा रज्ज्वां सर्पारोपेण कश्चिद् भययुक्तः पुरुषस्तज्ज्ञानेन भयविनाशेऽपि रज्जुरूपो न भवति । तथा ब्रह्मणि विश्वकल्पनया जन्ममरणादिभययुक्तो जीवो ब्रह्मज्ञानेनापि तद्रूपो न स्यात् । किं तु भयशून्यः स्यात् । पुनस्तद्वादे दृष्टिगोचरत्वलक्षणदोषापत्तिस्तस्मिन्परे । तस्मादसंमतः सोऽपि । ननु तेषां तथा सिद्धान्तो नेति त्वया तदभिप्रायः कथं ज्ञात इति चेत्तत्रोच्यते । यतस्तैर्महर्षिभिः सात्त्वतैरपि अनावृत्तैर्मुक्तजीवैरीश्वरः प्राप्य उक्तो मुमुक्षुभिरपि ।

एवं संप्रसादो नामरूपाद्विनिर्मुक्तः
परात्परं पुरुषमुपैति दिव्यमिति

श्रुत्या मुक्तोपसृप्यव्यपदेशादित्यादिनापि ।

तद्वादे तु तत्प्राप्यत्वं न संभवति । यतो घटध्वंसे जलोपाधिविनिर्मुक्तेन प्रतिबिम्बसूर्येणाकाशस्थः सूर्यः प्राप्य इति वक्तुं कोऽपि न शक्नोति । तथा भ्रमविमुक्तेन कल्पितसर्पेण रज्जुः प्राप्येति च । तस्य वस्तुतत्त्वाभावेन मिथ्या-

त्वात् । मुक्तजीवैरीश्वरः प्राप्य इत्यनेन जीवस्य नित्याणुत्वं परमेश्वरान्मुक्तदशायामपि भिन्नत्वं च प्रतिपादितम् । अन्यथा सिद्धान्तभूतानां श्रुतिसूत्रादीनां भ्रमप्रसङ्गः । तस्मात्पूर्वपक्षस्थितैर्वाक्यैः सिद्धान्ते स्थितानि वाक्यानि नान्यथा कर्त्तव्यानि । मनो ब्रह्मेत्युपासीते(क)त्युक्त्वा तस्माद् वा एतस्मान्मनोमयादन्योऽन्तरात्मेत्युक्तम् । तथा देवा ह वै स्वर्गं लोकमायांस्ते रुद्रमपृच्छन्को भवानिति सोऽब्रवीदहमेकः प्रथममासीन्नान्यः कश्चिन्मत्तो व्यतिरिक्तः । सोऽन्तरादन्तरं प्राविशद्दिशो व्यन्तरं प्राविशन्सोऽहं नित्यानित्यो व्यक्ताव्यक्तो ब्रह्मा(ख)ब्रह्माहमित्युक्त्वा एको वै नारायण आसीन्न ब्रह्मा न ईशानः । पुनरेव नारायणः । सोऽन्यत्कामो मनसा ध्यायेत । तस्य ध्यानान्तस्थललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायते बिभ्रच्छ्रियं सत्यं ब्रह्मचर्यं तपो वैराग्यं मन ऐश्वर्यं सप्रणवा व्याहृतय ऋग्यजुः सामाथर्वाङ्गिरस इत्युक्तं श्रुत्या । एवं विरोधे पूर्वपक्षवाक्यानां सिद्धान्तवाक्यैः सहाविरोधार्थः कर्त्तव्यः । मनो ब्रह्मोपासीतेत्यत्र मनसि ब्रह्मभावनया ब्रह्म उपासीतेत्ययमेवार्थो वक्तव्यः । न तु मनो ब्रह्मोपासीतेति । तथा निजस्वरूपे नारायणबु-

(क) आ० पु० स्त० सीत इत्यस्य स्थले सीत् इति पा०। एवमुत्तरत्रापि सर्वत्र ।

(ख) आ० पु० स्त० ब्रह्मा इति पा० ।

त्वया रुद्रेणोक्तम् । अहमेव प्रथममासीन्नान्य इत्येवं ज्ञात्वा सर्वेश्वरो नारायणो मन्तव्यः ।

अम्भस्यपारे भुवनस्य मध्ये
नाकस्य पृष्ठे महतो महीयान् ।
शुक्रेण ज्योतिषि समनुप्रविष्टं
प्रजापतिश्चरति गर्भे अन्तः ।

यस्मिन्निदं सं च विचैति सर्वं
यस्मिन्देवा अधि विश्वे निषेदुः ।
तदेव भूतं तदु भव्यमान-
मिदं तदक्षरे परमे व्योमन् ।

येनावृतं खं च दिवं मही च
येनादित्यस्तपति तेजसा भ्राजसा च ।
यमन्तः समुद्रे कवयो वदन्ति
तदक्षरे परमे प्रजाः ॥

यतः प्रसूता जगतः प्रसूति-
स्तोयेन जीवान्व्यससर्ज भूम्या-

मित्यादिभ्यः । एवमद्वैतप्रतिपादकानां प्रतिबिम्बाव-च्छिन्नवादानामंशवादेन सह पूर्वोक्तप्रकारेणैक(क)वाक्यार्थं कृत्वा सेव्यसेवकत्वं नित्यमिति निश्चेतव्यम् ॥ १८ ॥

(क) आ० पु० स्त० प्रमाणैक इति पा० ।

नन्वनादेरनन्तस्य जीवस्यानादिमायया ।
ब्रह्मणीश्वरजीवत्वं कल्पितं न तु वास्तवम्॥ १९॥
तस्मात्तस्या विनाशेन जीवो ब्रह्मैव सर्वगः ।
घटध्वंसे यथा त्वेको महाकाशः सदा विभुः॥२०॥

एवं पराजितो मायावाद्यन्यमतावलम्बं कृत्वाह स्वमतं त्रिभिः । नन्विति । तस्मादिति । भाव इति(क) । नन्वस्माकं सिद्धान्तेऽपि केचिदाचार्या अज्ञानपर्यन्तं मायाकालजीवादीनादिशून्यान् माहुः । तत्पक्षेऽनादेरनन्तस्य जीवस्यानादिमायया अविद्यया ब्रह्मणि जीवेश्वरत्वमनादि कल्पितं न तु वास्तवम् ॥ १९ ॥

अतस्तस्या अनादिसान्तत्वात्तस्या विनाशेन जीवो ब्रह्मैव । कथंभूतः । सर्वगः । विभुत्वात् । यथा घटयोगेऽणुत्वमाप्त इव घटाकाशः । तस्य ध्वंसेनैक एव महाकाशो भवति । कीदृशः । सदा विभुः । इत्यनेन घटमठाकाशत्वमज्ञ(ख)कल्पितमुक्तं भवति । तस्या विनाशस्तु तत्त्वमस्यादीनां वाक्यानां विचारेण जीवेश्वरयोर्विरोधांशत्यागाद् ब्रह्माहमस्मीति भावनया स्यात् । तत्त्यागस्तु जहदजहत्स्वार्थलक्षणया स्यात् ।

(क) आ० पु० स्त० तस्मादिति । भाव इति । इति पा० ।

(ख) आ० पु० स्त० अज्ञान इति पा० ।

यतो लक्षणा त्रिधा । जहत्स्वार्था अजहत्स्वार्था जहदजहत्स्वार्था इति भेदात् ।

स्वार्थत्यागो भवेद्यत्र चान्यार्थग्रहणेन वै ।
जहत्स्वार्था च सा प्रोक्ता लक्षणा शब्दसागरे ।

स्वार्थात्यागेन चान्यार्थस्वीकारो यत्र दृश्यते ।
लक्षणा साऽजहत्स्वार्था शब्दज्ञैः कथिता वरैः ।

स्वार्थत्यागो न वै यत्र विरोधांशं विहाय च ।
लक्षणा सा च जहदजहत्स्वार्था हि प्रोच्यते(क) इति ।

सा यथा गङ्गायां घोष इत्यत्र घोषसंव्यवहारे तु भगीरथचक्रखातावच्छिन्नप्रवाहे गङ्गापदस्य शक्तिरन्यथान्यत्रापि । तत्र घोषस्यासंभवात् । शक्यसंबद्धे तीरे लक्षणा गङ्गातीरे घोष इत्यर्थः । तथा जहत्स्वार्थलक्षणया तत्त्वमस्यादिवाक्ये नाभेदः सिद्ध्यति । अन्यार्थावलम्बेन स्वार्थत्यागाभावात् । तथा शोणो धावतीत्यत्र शोणगुणस्य धावनक्रियासंभवाच्छोणोऽश्वो धावतीत्यर्थो ज्ञातव्यः । शोणगुणस्यात्यागेन द्रव्याश्वग्रहणम् । तथापि तत्राभेदो न भवेत् । स्वार्थत्यागाभावेनान्यर्थग्रहणाभावात् । विशेषणविशेष्याभावादपि । अतस्तयैव सिध्यति । सोऽयं देवदत्त इतिवत् । तच्छब्दः परोक्षवाची । इदं शब्दोऽपरोक्षवाची । तथा च

(क) प्रा० पु० म० मु० इत्यधि० वर्ज० ।

भावोऽयं सर्वजीवानां मध्ये जीवस्य यस्य वै ।
नष्टाविद्या ह्यभेदत्वं तस्यातो द्वैतकल्पितम् ॥२१॥

इति पदं तद्देशकालवाची । अयमिति एतद्देशकालवाची । तदेवं तद्देशकालवृत्तित्वस्य परोक्षत्वस्य एतद्देशकालवृत्तित्वस्य अपरोक्षत्वस्य च त्यागेन देवदत्तदेहाभेदो भवति । तथा मायोपाधित्वमीश्वरस्य सर्वज्ञत्वं परोक्षत्वम् । अविद्योपाधित्वं जीवस्याल्पज्ञत्वमपरोक्षत्वम् च । उभयविशेषणत्यागेन चैतन्याभेदो भवति ॥२०॥

अयं भावः । सर्वजीवानां मध्ये यस्य जीवस्योक्तमकारेणाविद्या आवरणविक्षेपशक्तिर्नष्टा तस्य ब्रह्माभेदत्वं स्यात् । न यस्य सा नष्टा । तस्य मते नानात्वं सेव्यसेवकत्वं जीवेश्वरत्वं च । तस्माद् द्वैतं कल्पितमद्वैतं सिद्धान्तो वेदसंमतः ।

यथा नद्यः स्यन्दमानाः समुद्रे-
ऽस्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद् विमुक्तः
परात्परं पुरुषमुपैतीति श्रुतेः ।

अस्याः श्रुतेरयं भावः । यावन्नदीनां पर्जन्यजलाभावेन न समुद्रेण सह समागमो भवेत्तावत्तासां नामरूपत्वं सजातीयविजातीयस्वगतभेदलक्षणं नानात्वं च स्यात् ।

**तथापि ह्यद्वयं ब्रह्म न भवत्येव कर्हिचित् ।**
**मुक्तोपसृप्यकथनाज्जीवोऽणुर्ब्रह्मणः पृथक् ॥२२॥**

तथा यावद्विद्वान्स(क) दिव्यं पुरुषं नाप्नोति। तावद् भवतोक्तं नानात्वम् । स्वरूपप्राप्तौ न किमपि ।

न निरोधो न चोत्पत्तिर्न बंन्धो न च शासनम् ।
न मुमुक्षुर्न मुक्तिश्च इत्येषा परमार्थतेति ।

शब्दमायावृतो यावत्तावत्तिष्ठतु पुष्करे ।
भिन्ने तमसि चैकत्वमेकमेवानुपश्यतीति श्रुतेः ॥२१॥

तन्मतं निराकरोति त्रिभिः । तथापीति पूर्वपक्षनिषेधार्थे। यतो भगवतः सर्वज्ञत्वादिगुणास्तु नित्याः स्वरूपभूताः । अतो निषेधानर्हाः । अप्रतिषिद्धं परमैश्वर्यं तदभावाच्च नैवमितरेषामिति शांडिल्यविद्योक्तेः (१) ॥

(१) अप्रतिषिद्धमित्यादि शाण्डिल्यविद्यासूत्रस्यार्थः ॥ परमेश्वरस्यैश्वर्यं त्वप्रतिषिद्धम् । कुतः । तदभावात् । निषेधाभावात् । न क्वापि श्रुतौ प्रतिषिद्धमस्ति येन बाधितं स्यात् । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकीत्यादिश्रुतिभ्यः । जीवानान्तु नैवम् । किन्तु प्रतिषिद्धमस्ति ॥

(क) आ० पु० स्त० सम् इति पा० ।

अतो भवतोक्तं यदीश्वरस्य सर्वज्ञत्वस्य जीवस्याल्पज्ञत्वस्य निषेधेनाभेदः सिध्यति । तत्रेश्वरस्य गुणानां तु निषेधो न संभवति । श्रुतिविरोधात् ॥ यर्हि भवतां कुमते स्वीकृतस्तथापि मया पृच्छ्यते । ईश्वरोपाधिमाया किमण्वी वा । विभ्वी । नाद्या । तस्याः कार्याणामाकाशादीनां विभुत्वदर्शनात् । अत ईश्वरोपाधिः सर्वमयो व्यापको विभुः । तस्मात्तत्त्यागेन जीवोपाधेस्तु त्यागोऽनायासेन भवति तदन्तर्भूतत्वात् ।यथा समुद्रत्यागेन तदन्तर्भूतानां लहरीणाम्। पृथिवीत्यागेन तदन्तर्भूतानां गृहाणाम् । पुनरीश्वरस्य सर्वज्ञत्वस्य जीवस्याल्पज्ञत्वस्य त्यागोऽनुचितः । तस्मात्तत्त्वमस्यादिवाक्ये जहदजहल्लक्षणापि न संभवति । यतो भवतां मतं कल्पितमेवातः संसारदम् । तथापि अभेदेश्वरोपासनया अविद्यानिवृत्त्या ब्रह्मप्राप्तावप्यद्वयज्ञानं तु कर्हिचिदपि न भवत्येव । कुतः । मुक्तोपसृप्यकथनात् । जीवस्तु मुक्तदशायामप्यणुरेव । यतो विभुत्वाभावाद् ब्रह्मणः पृथक् भवता यान्युदाहरणानि दत्तानि तेषामर्थो न ज्ञातः । न निरोधो न चोत्पत्तिरित्यादिना तु जीवस्य वास्तवरूपमुक्तम् । तत्तु सर्वेषां मतम् । शासनमिति वेदशास्त्रमित्यर्थः । यावच्छत्रुदमायावृत इत्यादिना त्वभेदाभावत्वं च एकत्वमेकमेवानुपश्यतीत्युक्तेः । अन्यथा स एकत्वमेकमेवानुपश्यतीति क्रियाया व्यर्थत्वं स्यादतोऽर्थस्तु स मुक्तः सर्वेश्वरत्वेनैकं भग-

वन्तं नानात्वाभावेन तद्वपुष्ट्वेन विश्वस्यैकत्वं चानु वारं वारं पश्यतीति । तथा यथा स्यन्दमाना नद्य इत्यस्याः श्रुते- रर्थस्तु स्यन्दमाना नद्यो नामरूपे विहायागन्तुके नामरूपे विहाय स्वाभाविकेन जलागुशब्दितेन नामरूपेण सहास्तं गच्छन्ति अदर्शनं यान्तीत्यर्थः । अस्तं गच्छन्तीत्यनेनैवा- भेदाभावत्वमुक्तं भवति ।

यतो नामरूपाद्विनिर्मुक्तः
परात्परं पुरुषमुपैतीत्युक्तेः ।

यथा सौम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृ- क्षाणां रसान्समवहारमेकतां गमयन्ति ते तथात्र विवेकं न ल- भन्ते । अमुष्याहं वृक्षस्य रसोऽस्म्यहमेवं खलु सौम्येमाः प्रजाः सति संपद्य न विदुः सति संपद्यामह इति श्रुतेरपि । वयमपि सति संपद्यामह इत्यनेन मुक्तानामपि भेदसत्त्वमु- क्तम् । यतो भेदस्तु चतुर्विधः । स्थूलमध्यमसूक्ष्मातिसूक्ष्म- भेदात् । तत्र कीटकीटकृनकीटयोः समस्वरूपयोस्तु स्थूलभेदः । उभयरूपदर्शनात् । यमुनासमुद्रयोर्मध्यमभेदः । समुद्रे तन्म- धुरजलप्राप्तेः । गङ्गासमुद्रयोः सूक्ष्मभेदः । स्वागुरूपेण म- धुरत्वात् । ननु तत्कथं ज्ञायते । मेघवृष्टिजलमधुरत्वात् ।

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि चेति
श्रीभगवद्वचनात् ।

ये यथा मां प्रपद्यन्त इत्याद्युक्तेस्तु वै हरेः ।
जाते ह्यभेदबोधेऽपि न ज्ञानी प्रवरोऽपि च॥२३॥

अष्टौ मासान्निपीतं यद् भूम्याश्चोदमयं वसु ।
स्वगोभिर्मोक्तुमारेभे पर्जन्यः काल आगत

इति शुकोक्तेः ॥

आदित्याज्जायते वृष्टिरादित्ये च प्रलीयते इति श्रुतेः ।

अतो यज्जलं सूर्यः स्वरश्मिभिर्वर्षति तदेवापकर्षति । तस्मान्नदीनां जलान्यगुरूपाणि मधुराण्येव समुद्रजले तिष्ठन्ति । समुद्ररूपाणि न भवन्ति । गोस्तनमुक्तदुग्धजलयोरतिसूक्ष्मभेदः । स तु पावकेन ज्ञातो नान्यैः । तथा गौरश्यामपार्षदानां भगवतः स्थूलमध्यमौ भेदौ । कौस्तुभमणिसायुज्यमाप्तानां सूक्ष्मभेदः ।

कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यज इत्युक्तेः । भगवद्देहसायुज्यमाप्तानामतिसूक्ष्मभेदः । तन्नु त एव मुक्ता जानन्ति । नान्यः कोऽपि । परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते । स एतस्मात्सर्वजीवसमष्टिरूपादुत्कृष्टाद्धिरण्यगर्भादुत्कृष्टं सर्वप्राणिहृदयेशयं परमेश्वरं पश्यतीति श्रुतेः ॥२३॥

तावद् भगवद्भक्तानां तु तपोवैराग्यसमाधिभिरपि साधनैरद्वैतज्ञानं न कदापि स्यात् ।

श्रेयःसृतिं भक्तिमुदस्य ते विभो
क्लिश्यन्ति ये केवलबोधलब्धये ।
तेषामसौ क्लेशल एव शिष्यते
नान्यद्यथा स्थूलतुषावघातिनामिति ब्रह्मोक्तेः ।
मुनयः पदवीं यस्य निःसङ्गेनोरु(क)जन्मभिः ।
न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिनेति (१)
नारदोक्तेरपि ।
को न्विहार्हति विज्ञातुं प्राक्सिद्धं गुणसंवृत इति
धनदात्मजवाक्यादपि ।
क इह नु वेद बतावरजन्मलयोऽग्रसरं
यत उदगादृषिर्यमनु देवगणा उभये ।
तर्हि न सन्न चासदुभयं न च कालजवः
किमपि न तत्र शास्त्रमवकृष्य शयीत यदेति
श्रुत्युक्तेश्च (२)॥

(१) मुनय इत्यादिश्लोकस्यार्थः ॥ मुनयो मनन-शीला अपि भगवत्पदवीं मार्गं कैवल्यस्थानं न विदुः । बहुजन्मभिर्निःसङ्गेन वशीकाराख्यवैराग्येण तीव्रयोग-समाधिना मृगयन्तोऽपि ॥

(२) क इहेत्यादि श्रुतिस्तुतिश्लोकस्यार्थः ॥ अत

(क) भा० पु० स्क० नि संङ्गेनेह इति पा० ।

नन्वल्पसाधनश्रमे श्रम एव स्यात्साधनाधिक्ये तु कैवल्यज्ञानमपि भवेत्तत्राह नारदः ।

मुनयः पदवीं यस्य निःसङ्गेनोरुजन्मभिः ।
न विदुर्मृगयन्तोऽपि तीव्रयोगसमाधिनेति (क) ॥

कोऽद्धा वेद कः प्रावोचदित्यादि श्रुतेः ।

तस्माद् भक्तिविधुराणां तु साधनपराणामपि नरकक्लेश एव स्यात् ।

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति

श्रीभगवद्वचनात् । अभेदज्ञानाय भगवन्तं ये भजन्ति

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमित्युक्तेः ।

---

अहो भगवन् अग्रसरं पूर्वसिद्धं त्वाम् अवरजन्मलयः अर्वाचीनोत्पत्तिविनाशवान्को नु पुमान् वेद । न कोऽपीत्यर्थः । यतस्त्वत्त ऋषिर्ब्रह्मा उदगादुत्पन्नः । यं ब्रह्माणमनु पश्चादुभये आध्या(ख)त्माधिदैविका देवगणा उत्पन्नाः । एवं शास्त्रसाधनाध्यापकानां मध्येऽपि न कोऽपि जानाति पुनस्तदा कोऽपि न वेद इति किं वक्तव्यमित्याहुस्ताहीति ॥

---

(क) भा० पु० स्क० अभाय इलोको नाप ।
(ख) भा० पु० स्क० अध्या इति पा० ।

तेषां भक्तिकृपयाऽद्वयज्ञानमपि भवति । तस्मिन्नभेद(क)-बोधे जातेऽपि स प्रवरो ज्ञानी न भवति ।

अथापि ते देव पदाम्बुजद्वय-

प्रसादलेशानुगृहीत एव हि ।

जानाति तत्त्वं भगवन्महिम्नो

न चान्य एकोऽपि चिरं विचिन्व-

न्निति ब्रह्मोक्तेः (१) ॥

(१) अथापीत्यादि श्लोकस्यार्थः ॥ आत्मानमे-वात्मतया विजानतामिति । अज्ञानसंज्ञौ भवबन्धमो-क्षाविति द्वाभ्यां श्लोकाभ्यां यादृशं ज्ञानं मयोक्तं ता-दृशं जगदभावानुभवरूपं केषांचिदपि न स्यात् । प्र-त्यक्षगोचरत्वात् । न च सुषुप्तौ समाधावपि जगदभाव-मनुभवतीति वाच्यम् । तस्मिन्समयेऽपि सर्वथा तद-भावाभावात् ।

क्षुत्तृण्मूर्च्छोपतापेषु प्राणायनविघाततः ।

नेहतेऽहमिति ज्ञानं मृत्युप्रज्वारयोरपि ।

गर्भे बाल्येऽप्यपौष्कल्यादेकादशविधं तदा ।

लिङ्गं न दृश्यते यूनः कुह्वां चन्द्रमसो यथेत्युक्तेः ।

(क) पा० पु० स्त० मभेदे इति पा० ।

अतो मुक्ता अपि भगवद्भक्तिं विना भगवन्महिम्न-स्तत्त्वं न जानन्ति । तदुक्तं भगवता गीतासु ।

यतः सूक्ष्मलयेनास्ति । यतस्तदनन्तरं प्रत्यक्षतः। अतो जगद्भावानुभवं विना जगद्भावकथनादद्वैत-ज्ञानसिद्धिस्तु शुकाध्ययनवत् । यदा तदध्ययनादद्वैता-नुभवरहितादद्वैतज्ञानात्संसारनिवृत्तिस्तदा सर्वमुक्ति-प्रसङ्गः स्यात् । तस्मिन् सति शुको मुक्तो वा वामदेव इति वाक्ये मिथ्यात्वप्रसङ्गः । यतः कामक्रोधादिवि-नाशं विना न मनः शुध्यति । तच्छुद्धिं विना तेन नि-रन्तरं ब्रह्मचिन्तनञ्च भवति । तद्ध्यानं विना न मनसो लयः । लयं विना जगद्भावानुभवो न कदापि । शुद्धेन मनसापि निराकारस्य ब्रह्मणो ध्यानं न संभवति । त-दाश्रयाभावात् । अतस्तदभावे तदभावः । तल्लया-भावे कैवल्यज्ञानाभावोऽपि प्रसिद्धः । अथापि महता कष्टेनानेकजन्मसु परमवैराग्ययोगसमाधिभिः केषांचि-द्दुस्तप्राप्यमिव यथोक्तं कैवल्यज्ञानमपि जातम् । तथापि भो देव अचिन्त्यालौकिकक्रीडापर ते तव पदाम्बु-जद्वयस्य मध्ये एकदेशस्यापि यः प्रसादलेशोऽपि तेना-नुगृहीत एव भक्तो भगवतस्तव महिम्नस्तत्त्वं जानाति । नान्यः तादृशानाम्मुक्तानाम्मध्ये कश्चिदपि चिरं वि-चिन्वन्नप्यतदंशापवादेन विचारयन्नपि वेत्ति ॥

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत इति (१)॥

ननु कः कथा वेत्तीति शङ्कायामाह ।

ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ।
समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥

भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ।
ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति (२) ॥

---

(१) मनुष्याणामित्यादि श्लोकस्यार्थः ॥ कोटिष्वपि महापशुषु पशुविलक्षणेषु शश्वद्गामिषु कश्चिन्मनुष्यः स्वधर्मनिष्ठः । मनोरपत्यत्वात् । तेषां सहस्रेषु कश्चित्सिद्धये मोक्षाय यतति । यततां यत्नशीलानां मुमुक्षूणां सहस्रेषु कश्चिन्मुक्तो भवति । सिद्धानां मुक्तानां मध्ये कश्चित्तत्त्वतो यथार्थतः सच्चिदानन्दविग्रहं मां वेत्ति ॥

(२) ब्रह्मभूत इत्यादि श्लोकद्वयस्यार्थः ॥ ब्रह्मभूतो ब्रह्मस्वरूपः पुरुषो मे परां भक्तिं निर्गुणां भक्तिं लभते प्राप्नोति । तया भक्त्या मामभिजानाति इति द्वितीयेनान्वयः । अभिजानातीति पुरा सात्त्विकाद्विज्ञानेन ब्रह्माहमस्मीत्यभेदान्वयेन तेनाहं ज्ञातः । पुनः भक्त्या यावानपरिच्छिन्नः सच्चिदानन्दविग्रहः यः परब्र-

तस्माद्भगवद्भक्तिमान्पुरुषोऽतिदुर्लभः ।
रजोभिः समसंख्याताः पार्थिवैरिह जन्तवः ।

तेषां ये केचनेहन्ते श्रेयो वै मनुजादयः ।
प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तम ।

मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिद्ध्यति ।
मुक्तानामपि सिद्धानान्नारायणपरायणः ।

स्वात्मकः प्रमुक्तभजनीयः सर्वाधिपोऽहमस्मीति मां जानाति । पुनः भक्तिप्रभावरूपेण निर्गुणज्ञानेन त-त्त्वतो यथार्थतो नित्यसेव्यत्वेन मद्रूपं नित्यसेवकत्वेन स्वात्मानं ज्ञात्वा तदनन्तरं मां विशते प्राप्नोति । वनं प्रविशति कोऽप्यत्र वनं प्राप्नोति न तु वनरूपो भवति । तद्वदत्रापि । अर्थान्तरकल्पनया तस्यात्यथार्थो न कर्त-व्यः । दोषप्राप्तेः । कथम्भूतः ब्रह्मभूतः । प्रसन्नात्मा । आ-त्मा मनः सदैव प्रसन्नो यस्य सः । यतः अप्राप्तधनादेः प्राप्तिं न काङ्क्षति । प्राप्तस्य विनाशे न शोचति सः । नन्वेतादृशत्वं तु माययापि दम्भालये पुरुषे दृश्यते । त-त्राह । कीदृशः । समः सर्वेषु भूतेषु शत्रुमित्रगोगज-व्याघ्रसर्पपुत्रादिषु समो यः । स एव ब्रह्मभूतो मे परम(क) भक्तिप्राप्त्यधिकारीत्यर्थः ॥

(क) भा० पु० स्क० पर इति पा० ।

सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने·

इति भागवतोक्तेः ॥

यदुक्तं भगवता सिद्धानां मध्ये कश्चिन्मां वेत्तीत्यस्यार्थस्तु मद्भक्तिमान्मां वेत्तीति । अतो मुक्ता अपि भक्तिं विना भगवन्महिम्नस्तत्त्वं न जानन्तीति ब्रह्मणा साधूक्तम् । तस्माददद्वैतज्ञाने जातेऽपि स प्रवरो ज्ञानी न भवति । किं तु मुक्तः । यदा स मुक्तो भक्तिकृपया भक्तिमान् सन्भगवन्तं भजेत्स मुक्तोत्तमो दुर्लभः ।

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवः सर्वमिति स महात्मा सुदुर्लभ

इति श्रीभगवदुक्तेः (१) ॥

(१) बहूनामित्यादि श्लोकस्यार्थः ॥ बहुजन्मसु तपोयोगादिभिः साधनैर्बहूनां जन्मनामन्ते ज्ञानवान्सर्वमिदं विश्वं वासुदेव इति ज्ञानवान् मुक्तः सन्मां प्रपद्यते मां प्रपन्नो भवति शरणागतो भवतीत्यर्थः । प्रपद्यत इति क्रियाया नान्योऽर्थः कल्पनीयः । नैषा तर्केण मतिरापनेयेति श्रुतेः(क)। प्रपद्यते भजतीति श्रीश्रीधरोक्तेः । तद्वतः प्रपत्तिशब्दाच्च न ज्ञानमितरप्रपत्तिवदिति शाण्डिल्यसूत्रोक्तेरपि । अस्य शाण्डिल्यसूत्रस्यार्थः ॥ बहु-

(क) का० पु० म० रपनेयेति इति पा० ।

नाऽजन्मनामन्ते ज्ञानवान्मां प्रपद्यत इति ज्ञानवत एव प्रपत्तिशब्दितायाः भक्तेरभिधानात् प्रपद्यते मां प्रपन्नो भवतीत्यर्थः । इतरप्रपत्तिवत् । यथा

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवता

इत्यत्र ज्ञानविधुराणामितरप्रपत्तिर्यथा भक्तिरूपैवोच्यते तथेत्यर्थः ॥ भक्तेर्नामान्तरं प्रपत्तिः । न तु तद्भिन्ना । षड्विधा शरणागतिरित्यत्रानुकूल्यमुक्तम् । तत्तु परभक्त्यङ्गम् । आनुकूल्यादीनि स्मरणेभ्यो बाहुल्यादिति पूर्वोक्तसूत्रसिद्धान्तात् ! रक्षिष्यतीति विश्वास इत्यपि तत्रोक्तम् । तदपि साधनभक्त्यङ्गम् । गुरुशास्त्रवैष्णववाक्ये विश्वासो नाम श्रद्धेत्युक्तेरित्येवं ज्ञात्वा स्वमताग्रहेण सिद्धोपायः प्रपत्तिरिति न वक्तव्यम् । शास्त्रविरोधेन दोषापत्तेः । आचार्याभिमानित्वमपि गुरुभक्त्यङ्गमेव । गुर्वनुरागं विना केवलं गुर्वभिमानित्वं तु न कदापि श्रेयस्करम् । यथा ब्रह्माकारवृत्तिं विना ब्रह्माहमस्मीत्यभिमानो न संसारनिवर्त्तकः किन्त्वघप्रद एव तथा गुरुसेवनभक्तिं विना केवलमाचार्याभिमानित्वम् आचार्यमभिमन्यते इत्यचार्याभिमानी तस्य भाव आचार्याभिमानित्वम् । तदपि यत्तदीयतारूपं भक्त्यङ्गं वर्णितं तदेव । तस्मात्प्रपत्तिः रतिः स्नेह आसक्तिरित्यादयो भक्तेर्नामान्तरमे-

तथा सत्यपि हंसानां स बोधो धर्म एव हि ।
सोऽप्यश्रेष्ठो हि चान्येषां नैवेति ह्यात्मविन्मतम् २४

प्रस्तुतस्तु भक्तिमानेवोत्तमो ज्ञानी । निर्गुणज्ञानस्य भक्तिमद्‌स्य ब्रह्माहमस्मीतिभावनारूपं सात्त्विकज्ञानं तु साधनमेव॥२३॥

तथा सत्यपि ब्रह्माहमस्मीतिभावनारूपो यः स हंसानां परमहंसानामेव धर्मः ।

आत्मानं चिन्तयेदेकमभेदेन मया मुनिरिति

श्रीभगवदुक्तेः ।

सोऽपि धर्मः अश्रेष्ठः । श्रेष्ठस्तु तद्दासत्वेन स्वात्मानुसंधानरूपः ।

ज्ञानिनस्त्वहमेवेष्टः स्वार्थो हेतुश्च संमतः ।
स्वर्गश्चैवापवर्गश्च नान्योऽर्थो मदृते प्रियः ।
तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ।
ज्ञानविज्ञानसंपन्नो भज मां भक्तिभावित

इति श्रीभगवदुक्तेः ।

द्र इति ज्ञात्वा साध्यसिद्धोपायभेदकल्पनया प्रपत्तिः सिद्धोपायो भक्तिः साध्योपाय इति न वक्तव्यं कदापि । तयोर्भिन्नत्वे यथा भक्तिरेवैनं नयति भक्तिरेवैनं पश्यति भक्तिरेवैनं दर्शयतीति श्रुत्या भक्तेः परत्वं प्रतिपादितं तथा प्रपत्तेरपि कस्मान्नोक्तमित्यलं विस्तरेण ॥

हंसेतरेषां तु नैव स धर्मः । तेषां तु साधनकालेऽपि सिद्धावस्थायामपि भगवद्दासत्वेन स्वात्मानुसंधानरूप एव धर्मः ।

तथा भक्तो मम प्रिय इति श्रुतौ भगवदुक्तेः ।

श्रुत्यन्तरेऽपि ।

दुर्बोधं कुहकं तस्य मायया मोहितं जगत् ।
दुर्जया सा सुरैस्सर्वैर्यष्टिरूपोऽभवद्विधिः ॥
रुद्रो येन कृतो वंशस्तस्य मायां जयेत्कथमिति

श्रुत्योक्तम् । तमेवोपायमाह स्वयं भगवान् ।

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति त इति (१)॥२४॥

(१) दैवीत्यादि श्लोकस्यार्थः ॥ या माया वेदैर्दुरत्यया प्रोक्ता दुःखेनात्ययोऽतिक्रमस्तरणं यस्यास्सा । किमिन्द्रजालरूपा । नेत्याह । दैवी द्योतमाना । किं देवसंबन्धिनी । नेत्याह । मम मदीया । किं चिच्छक्तिः । नेत्याह । गुणमयी सत्त्वादिगुणात्मिका । तर्हि जीवानां का गतिः । तत्राह । ये मामेव । एवकारोऽन्यव्यावृत्त्यर्थः । सच्चिदानन्दविग्रहं मामेव । न तु निर्विशेषम् । प्रपद्यन्ते ते मायामेतां मे दृष्टिगोचरां तरन्तीत्यनेन दुःखेनात्ययो नाशो यस्या इत्यसंमतार्थः स्वाग्रहेण न कथनीयः । तस्या नित्यत्वात् ॥

**यतो हीश्वरमाया वै नित्या नाज्ञानकल्पिता ।**
**शक्तिः स्वाभाविकी चेति वेदशब्दात्परा ऽपरा ।२५॥**

प्रकरणार्थमुपसंहरति द्वाभ्याम् । यत इति । अत इति(क) । यतो हीश्वरमाया नित्या । हिशब्दो निश्चयार्थे । अतो जीवाज्ञानकल्पिता न वै । कुतः ॥

परास्य शक्तिर्विविधैव श्रूयते
स्वाभाविकी ज्ञानक्रियाबलेति

वेदशब्दात् । तस्माद्विश्वमपीश्वरमायारचितम् । न तु जीवाविद्याकल्पितम् । न प्राणिबुद्धिभ्योऽसंभवादिति

शाण्डिल्यविद्योक्तेः (१) ॥

अतः परमेश्वर एव स्वमायया नानाब्रह्माण्डानि रचयति ।

स विश्वकृत्स हि सर्वस्य कर्त्ता
यस्मिन्विश्वानि भुवनानि तस्थुरिति श्रुतेः ।

(१) न प्राणीत्यादि शाण्डिल्यविद्यासूत्रस्यार्थः ॥ प्राणिबुद्धिभ्यो जीवानामविद्याभ्यो न विश्वोत्पत्तिः । कुतः । असंभवात् । जीवास्तु स्वपुत्रोत्पत्तावप्यसमर्थाः । आस्तामन्यंवार्त्ता ॥

(क) भा० पु० स्त० अत इति इति ना० ।

**अतो जीवेश्वरौ कर्म स्वभावः काल एव च ।**
**माया चानाद्यनन्तास्ते षट् पदार्थाः सनातनाः २६**

अजामेकां लोहितकृष्णशुक्लां(क)
बह्वीं प्रजां जनयन्तीं सरूपामिति श्रुतेः ।

अतः स्वाभाविकी परा चिच्छक्तिः । अपरा गुणात्मिका । ते उभे नित्ये ॥२५॥

अतो जीवेश्वरौ कर्म स्वभावः कालो माया चैते षट् पदार्थाः पूर्वोक्ता अनाद्यनन्ताः । अतः सनातनाः । एवं वेदसिद्धान्तमज्ञात्वा अवैदिका जीवाज्ञानकल्पितं विश्वमिति जल्पन्ति । ते तु श्रुतिस्मृतिनेत्रविहीना भगवत्यपराधिनः । यतो भगवद्विग्रहं मायोपाधिं मत्वा तस्यानादरेण ब्रह्माहम्ब्रह्माहमस्मीति विकत्थन्ते । तेषां तु वेनस्य गतिः । तस्य सिद्धान्तस्तु ।

अवजानन्ति मां मूढा नृपरूपिणमीश्वरम् ।
नानुविन्दन्ति ते भद्रमिह लोके परत्र च ।
तस्मान्मां कर्मभिर्विप्रा यजध्वं गतमत्सराः ।
बलिं च मह्यं हरत मत्तोऽन्यः कोऽग्रभुक् पुमानिति ।
यस्त्वया मन्दभाग्योक्तो मदन्यो जगदीश्वरः ।
क्वासाविति हिरण्यकशिपुनाप्युक्तम् । स्वसिद्धान्तात् ।

(क) आ० पु० स्त० शुक्ललोहितकृष्णाम् इति पा० ।

ज्ञात्वैवं दासभावेन भगवान्स्त्रीनरादिभिः ।
सेव्यस्तद्भक्तसङ्गेन भक्त्यासङ्गैर्मुमुक्षुभिः ॥२७॥

ईश्वरोऽहमहं भोगीति तेषां सिद्धान्तः । तस्मात्तस्य दासोऽहमित्येवंभावनया ब्रह्माहमस्मीतिभावेन वा ये च भगवन्तं भजन्ति त एव भक्तिमुक्त्योरुत्तममध्यमाधिकारिणः ॥२६॥

एवं पूर्वोक्तप्रकारेण ज्ञात्वा स्त्रीनरादिभिर्भक्त्या दासभावेनैव भगवान्सेव्यः । अपि तद्भक्तसङ्गेन । तस्य भगवतो भक्तानां सङ्गेन । तद्विषयसङ्गनाशकगुणत्वात् । कथंभूतैः । मुमुक्षुभिः । अतोऽसङ्गैः पतिपुत्रजायागृहसङ्गशून्यैरप्याशु । न तु कालविलम्बेन ।

कौमार आचरेत्प्राज्ञो धर्मान्भागवतानिह ।
दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदमित्युक्तेः (१)॥२७॥

(१) कौमार इत्यादि श्लोकस्यार्थः ॥ इह मानुषे जन्मनि तु प्राज्ञो धर्मानेवाचरेत् । न तु विषयार्थं प्रयासान् । तत्रापि भागवतानेव धर्मान् । न तु वर्णाश्रमविहितान् । तत्रापि कौमारे एव । कुतः । देहस्याध्रुवत्वात् । ननु तर्हि तेन देहेन किम् । तत्राह । अध्रुवमपि मानवं जन्म अर्थदम् ।

अल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति भगवद्वचनात् ।

भक्त्यङ्गादाशु सत्सङ्गाद् भक्तिर्भवति नान्यथा ।
प्रार्थनीयो ह्यतः सर्वैः सत्सङ्गो मुनिदुर्लभः॥२८॥

ननु सत्यमेव परमसुखप्रदा भगवद्भक्तिरेव। तथापि(क) स्वान्तःकरणे नोत्पद्यते। किं कुर्मः। कथमाशु भवेदिति चेत्तत्रोच्यते। भक्त्यङ्गादिति। भक्त्यङ्गादेव सत्सङ्गादाशु भक्तिर्भवति। नान्यथा साधनकोटिभिः। स्वतन्त्रत्वात्। अतः सर्वैः सत्सङ्गः प्रार्थनीयः। यतो मुनिदुर्लभः।

भवापवर्गो भ्रमतो यदा भवे-
ज्जनस्य तर्ह्यच्युत सत्समागमः।
सत्संगमो यर्हि तदैव सद्गतौ
परावरेशे त्वयि जायते मतिरिति

मुचुकुन्दोक्तेः॥ (१) ॥

नन्वस्मिञ्जन्मनि विषयसाधकान्वर्णाश्रमधर्मान्कृत्वा जन्मान्तरे किं तेषामाचरणं न स्यात्तत्राह। मानुषं जन्म तु दुर्लभम्। समशुभाशुभकर्मकार्यत्वात्। पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकमिति श्रुतेः॥

(१) भवापवर्ग इत्यादि श्लोकस्यार्थः॥ हे अच्युत देवतिर्यङ्मनुष्येषु भ्रमतो जीवस्य भवापवर्गो

(क) श्रा० पु० न्त० अपि इति ना०।

तदैव मतिर्जायते इत्यनैष्ठिक्येव भक्तिर्ज्ञानिन्या। नैष्ठिकी तु क्रमशः।

सतां प्रसङ्गान्मम वीर्यसंविदो (क)
भवन्ति हृत्कर्णरसायनाः कथाः।
तज्जोषणादाश्वपवर्गवर्त्मनि
श्रद्धा रतिर्भक्तिरनुक्रमिष्यतीति
श्रीकपिलोक्तेः (१) ॥

भवस्य जन्मलक्षणसंसारस्यापवर्गो नाशकालोऽपवर्गरूपो यदा भवेत्तदैव सत्सङ्गमो भवति। यर्ह्येव सत्समागमस्तदैव त्वयि मतिर्भक्तिर्जायते। कीदृशे। परावरेशे परा हिरण्यगर्भादयः। अवरा अस्मदादयः। तेषामीशे। यद्वा अवरं प्रधानम्। परः पुरुषः। तयोरीशे। यतः सद्गतौ सतां भवाप्यादीनां गतौ ॥

(१) सतामित्यादि श्लोकस्यार्थः ॥ सतां प्रसङ्गात्प्रकर्षेण सङ्गादेव मे कथा भवन्ति। कीदृश्यः। मम वीर्यसंविदः मम वीर्याणां भक्तवात्सल्यादीनां सम्यग् ज्ञानं यासु ताः। पुनः किंविशिष्टाः। हृत्कर्णरसायनाः। तज्जोषणात्तासां सेवनाच्छ्रवणमनननिदिध्यासादाशु मयि श्रद्धा रतिर्भक्तिरनुक्रमिष्यति श्रद्धादि अनुक्रमेण भविष्यति। यद्वा पूर्वोक्तक्रमेण श्रद्धातस्तेषां धर्मेष्वित्यादि ॥

(क) सम्पर्शे इति पा०।

अतो दुर्लभः स (क) भक्तिहेतुत्वात् ।

दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः ।
तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनमिति
विदेहोक्तेः ॥ (१) ॥

अतः सत्सङ्गोऽतुल्यः ।

तुलयाम लवेनापि न स्वर्गं नापुनर्भवम् ।
भगवत्सङ्गिसङ्गस्य मर्त्यानां किमुताशिषः
इति प्रचेतस उक्तेः ॥ (२) ॥

(१) दुर्लभ इत्यादि पद्यस्यार्थः ॥ देहिनां नानादेहधारिणां जीवानां क्षणभङ्गुरोऽपि मानुषो देहो दुर्लभः । समकर्मकार्यत्वात् । तत्रापि मनुष्यदेहेऽपि वैकुण्ठप्रियदर्शनं दुर्लभं मन्येऽहं । वैकुण्ठो भगवांस्तस्य प्रिया भागवताः ।

संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ।
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रिय

इत्यादिभिः प्रतिपादितास्तेषां दर्शनमित्यर्थः ॥

(२) तुलयामेत्यादि श्लोकस्यार्थः ॥ भगवत्सङ्गिसङ्गस्य लवेनापि वयं स्वर्गं न तुलयाम । स्वल्पानन्दत्वात् ।

(क) भा० पु० मते सत्सङ्ग इति पा० ।

तस्माद् वृद्धस्तु तमेवं प्रार्थयति ।

तस्मादमूस्तनुभृतामहमाशिषो ज्ञ
आयुः श्रियं विभवमैन्द्रियमाविरञ्च्यात् ।
नेच्छामि ते विलुलितानुरुविक्रमेण
कालात्मनोपनय मां निजभृत्यपार्श्वं-
मिति प्रह्लादोक्तेः (१) ॥

ते न स्मरन्त्यतितरां प्रियमीश मर्त्यं
ये चान्वदः सुतसुहृद्गृहवित्तदाराः ।

---

नाप्यपुनर्भवं सुखानुभवाभावात् । यतः अपुनर्भव-शब्देन कैवल्यमुक्तिर्ज्ञातव्या । सदेहमुक्तानां तु भगवता सह प्रादुर्भावात् । मर्त्यानां नृपेन्द्राणामाशिषः किमुत अत्यल्पानन्दत्वात् ॥

(१) तस्मादित्यादि श्लोकस्यार्थः ॥ यतो भगवत्स-न्निसङ्गात्परमानन्दानुभवो भवति । तस्मादहमपि आयुः श्रियं च आविरञ्च्यादैन्द्रियं वैभवं च नेच्छामि । कथं-भूतोऽहं । अमूस्तनुभृतामाशिषो ज्ञः । कीदृशानायुःश्र्या-दीन् । कालात्मनस्ते उरुविक्रमेण विलुलितान् विचालि-तान् । तर्हि किमिच्छसि । तत्राह । निजभृत्यपार्श्वं निजभृत्या-नान्दात्मभावप्राप्तानां भागवतानां पार्श्वं मामुपनय(क) । तव कृपासाध्यत्वे न साधनसाध्याभावात् । तत्र दुःखाद्य-भावान्निर्विक्षेपादिकं ते स्मरणं भविष्यतीति भावः ॥

---

(क) एवं विघ्नजेमे सन्धि रार्षः ।

ये त्वब्जनाभ भवदीयपदारविन्द-
सौगन्धलुब्धहृदयेषु कृतप्रसङ्गा इति (१) ॥

तेषां सेवैव मुक्तिद्वारम् ।

महत्सेवां द्वारमाहुर्विमुक्ते-
स्तमोद्वारं योषितां सङ्गिसङ्गम् ।
महान्तस्ते समचित्ताः प्रशान्ता
विमन्यवः सुहृदः साधवो ये
इति श्रीऋषभदेवोक्तेः (२) ॥

(१) ते न स्मरन्तीत्यादि श्लोकस्यार्थः ॥ हे ईश सत्सङ्गद कर्तुमकर्तुमन्यथा कर्तुं समर्थ । ते जना मर्त्यं देहमपि न स्मरन्ति । कीदृशम् । अतितरां प्रियम् । तदर्थं स्त्रीपुत्रधनत्यागदर्शनात् । ये तदनु देहमनु सुत-सुहृद्गृहवित्तदाराः तानपि । ते के तत्राह । हे कमल-नाभ जगत्कारणोत्तम । भवदीयपदारविन्दसौगन्धे लुब्धहृदया भागवताः तेषु कृतः प्रसङ्गो यैस्ते देहादीनां स्मरणाभावात् । त एव मुक्ताः ॥

(२) महत्सेवामित्यादि श्लोकस्यार्थः ॥ महतां भागवतानां सेवामेव विमुक्तेर्द्वारमाहुर्वेदादय इति शे-षार्थः । तेषां लक्षणमाह । त एव महान्तः । ये सम-चित्ताः । शत्रुमित्रगोगजवृकव्याघ्रब्राह्मणशूद्रलाभाला-भजयाजयमानापमानेषु समं चित्तं येषां ते समचित्ताः । यतः प्रशान्ताः रागाद्यूर्मिरहिताः । तत्कुतः । यतो वि-

मन्यवः विगतक्रोधा निजापराधिन्यपि दयापरा इत्यर्थः । पुनः । सुहृद् उपकारानपेक्षोपकारकारकाः । यतः साधवः । प्राणादिभिरपि परकार्यसाधकाः । एतादृशानां सेवनमेव तद्द्वारम् । तथा योषितां सङ्गिसङ्गं तमोद्वारन्नरकद्वारम् । योषितां सङ्गिनस्तु शाक्ता एव । स्त्रीसङ्गमोक्षोपस्वीकरणात् । तेषां सङ्गमेव तद्द्वारम् । कुतः । वेदविरोधकुमतस्वीकारात् । ते कुमताश्रयाः कुमतमेव सुमतत्वेन कथयन्ति । तद्यथा

मद्यम्मांसन्तथा मत्स्यो मुद्रा मैथुनमेव च ।
मकाराः पञ्च सुभगे साङ्गकर्मणि हेतवे ।
मद्यम्मासन्तथा मत्स्यम्मुद्रा मैथुनमेव च ।
पञ्चतत्त्वमिदं देवि निर्वाणमुक्तिहेतवे ।
अष्टैश्वर्यपरं मोक्षं मद्यपानेन शैलजे ।
मांसभक्षणमात्रेण साक्षान्नारायणो भवेत् ।
मत्स्यभक्षणमात्रेण काली प्रत्यक्षतामियात् ।
मुद्रासेवनमात्रेण भूपूज्यो विष्णुरूपतः ।
मैथुनेन महायोगी मम तुल्यो न संशयः ।
मातृयोनिं परित्यज्य सर्वयोनिषु क्रीडयेत् ।
अभावे कन्यकायोनौ वधूयोनौ तथैव चेति ।

न च न ब्राह्मणः सुरां भक्षे(क)दिति । अतो भार्यामु-

(क) पिबेदिति पाठः ।

ननु तर्हि ते योषितां सङ्गिसङ्गं(क) परित्यज्य सर्वे जना महत्सेवामेव कथं न कुर्युः । तादृशतपोऽभावात् ।

दुरापा ह्यल्पतपसः सेवा वैकुण्ठवर्त्मसु ।

पेयादिति विरोधाद् असिद्धमतमिदमिति वाच्यम् ।

पशुशास्त्राणि सर्वाणि मयैव कथितानि च ।

इत्युक्तेन च मन्त्रेण मोहनाय दुरात्मनामिति शिवोक्तेः

इत्येवं शिवाभिप्रायमज्ञात्वा नरकदुःखगृहा वद न्ति । रुद्रेण ह्यसुरमोहनाय भगवदाज्ञया मोहशास्त्राणि कथितानि । आज्ञा तु पाद्मे वायुपुराणे शक्तिसंहितायामपि ।

त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय ।

अतथ्यानि च तथ्यानि(ख) दर्शयस्व महाभुजेत्यादि ॥

द्वापरादौ युगे भूत्वा कलया मानुषादिषु ।

स्वागमैः कल्पितैस्त्वं वै जनान्मद्विमुखान्कुरु इति

एवं तदाज्ञया स देवस्तानि कृत्वा ब्रवीत्यादि ।

ये मे मतमवष्टभ्य चरन्ति पृथिवीतले ।

सर्वैर्धर्मैश्च रहिता यास्यन्ति निरये सदेति ।

तस्मात्स्त्रैणानां सङ्गं विदूरतस्त्यक्त्वा सत्सङ्ग एव कर्तव्यो हिताभिलाषिभिः ॥

(क) भा० पु० स्क० ते योषितां सङ्गिसङ्गम् इत्यस्य स्थले तत्सङ्गम् इत्येवास्ति । (ख) भा० पु० स्क० शास्त्राणि इति पा० ।

यत्रोपगीयते नित्यं देवदेवो जनार्दन इति

विदुरोक्तेः ॥ (१) ॥

अतो मनःशोधकः पावनोत्तमः सत्सङ्ग एव ।

न ह्यम्मयानि तीर्थानि न देवा मृच्छिलामयाः ।

ते पुनन्त्युरुकालेन दर्शनादेव साधवः

इति श्रीभगवदुक्तेः ॥ (२) ॥

(१) दुरापा इत्यादि श्लोकस्यार्थः ॥ हि निश्चयार्थे । अल्पतपसः पुरुषस्य वैकुण्ठवर्त्मसु सेवा दुरापा । वैकुण्ठो विष्णुः । तस्य विष्णोः । तल्लोकस्य वा । वैकुण्ठस्य वर्त्मसु मार्गभूतेषु भागवतेष्वित्यर्थः । तप इति साधनोत्तमाभिप्रायेण । यस्य ज्ञानमयं तपः । तपो मे हृदयं साक्षादिति भगवदुक्तेः । केषु वर्त्मसु । तत्राह । यत्र देवदेवो जनार्दनो भगवानित्यं गीयते । अयं भावः । सत्सेवया हरिकथाश्रवणं । ततो हरौ रत्या क्रमेण पराभक्तिस्तया हरिसाक्षात्कारात्कृतार्थो भवति । तस्मान्महत्तपोऽभावे तेषु सेवाभाव इत्यर्थः ॥

यत्सेवया भगवतः कूटस्थस्य मधुद्विषः ।

रतिरासो भवेत्तीव्रः पादयोर्व्यसनार्दन इत्युक्तेः ।

(२) न हीत्यादि श्लोकस्यार्थः ॥ अम्मयानि जलमयानि तीर्थानि गङ्गादीनि मृच्छिलामया धातुशिलामया देवाः किं न पुनन्ति । पुनन्त्येव । किन्तूरुकालेनोरुकाल-

भगवानपि तस्यैवाधीनोऽस्ति ।

न रोधयति मां योगो न सांख्यं धर्म एव च(क) ।
न स्वाध्यायस्तपस्त्यागो नेष्टापूर्त्तं(ख) न दक्षिणा ।
व्रतानि यज्ञश्छन्दांसि(ग) तीर्थानि नियमा यमाः ।
यथावरुन्धे सत्सङ्गः सर्वसङ्गापहो हि मा-
मिति श्रीभगवदुक्तेः ॥

अयं भावः सत्सङ्गस्त्रिविधः । उत्तममध्यमकनिष्ठभेदात् कनिष्ठभागवतानां सङ्गस्तु कनिष्ठः । मध्यमानां मध्यमः । उत्तमानामुत्तमः । कनिष्ठभागवतस्तु ।

अर्चायामेव हरये पूजां यः श्रद्धयेहते ।
न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृत इति ।

मध्यमस्तु ।

ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च ।
प्रेममैत्रीकृपोपेक्षा यः करोति स मध्यम इति ।

उत्तमस्तु ।

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः ।
यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यतीति भगवदुक्तेः ।

(क) भा० पु० स्त० उद्धव इति पा० ।
(ख) भा० पु० स्त० नेष्टापूर्त्तिर्न इति पा० ।
(ग) यज्ञाश्छन्दांसि इति पा० ।

गृहीत्वापीन्द्रियैरर्थान्यो न द्वेष्टि न हृष्यति ।
विष्णोर्मायामिदं पश्यन्स वै भागवतोत्तमः ।

देहेन्द्रियप्राणमनोधियां यो
जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः ।
संसारधर्मैरविमुह्यमानः
स्मृत्या हरेर्भागवतप्रधान इति (१) ॥

न कामकर्मबीजानां यस्य चेतसि संभवः ।
वासुदेवैकनिलयः स वै भागवतोत्तमः ।

न यस्य जन्मकर्मभ्यां न वर्णाश्रमजातिभिः ।
सज्जनेऽस्मिन्नहंभावो देहे वै स हरेः प्रिय इति ॥

---

निष्कपटसेवयेत्यर्थः । माधवस्तु दर्शनादेव पुनन्ति । एवकारः सेवादिसाधनव्यावृत्त्यर्थं ॥

(१) देहेन्द्रियेत्यादि श्लोकस्यार्थः ॥ यो हरेः स्मृत्या संसारधर्मैरविमुह्यमानः स भागवतप्रधानो भागवतोत्तमः । कथंभूतैः । देहेन्द्रियप्राणमनोधियां जन्माप्ययक्षुद्भयतर्षकृच्छ्रैः तत्र देहस्य जन्माप्ययौ जन्मनाशौ । प्राणस्य क्षुत्पिपासे । मनसो भयम् । बुद्धेस्तर्षस्तृष्णा । इन्द्रियाणां कृच्छ्रं श्रमस्तैर्धर्मैरपि तेषां देहादीनां धर्मान्मत्वा तेभ्यो विलक्षणं भिन्नं च स्वस्वरूपं ज्ञात्वा भगवद्ध्यानेन न मुह्यति यः ॥

न हेयो महतां सङ्गः सर्वसङ्ग इव क्वचित् ।
यथा यश्चेश्वरे रागो न हेयो ह्यन्यरागवत्॥२६॥

स भागवतोत्तमोऽपि त्रिविधः । उत्तमोत्तममध्यमोत्तमकनिष्ठभेदात् । उत्तमोत्तमस्तु ।

वाग्गद्गदा द्रवते यस्य चित्तं
हसत्यभीक्ष्णं रुदति क्वचिच्च ।
विलज्ज उद्गायति नृत्यते च
मद्भक्तियुक्तो भुवनं पुनातीति ॥

उत्तममध्यमस्तु ।

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः ।
भूतानि भगवत्यात्मन्येष भागवतोत्तम इति ॥

उत्तमकनिष्ठस्तु ।

खं वायुमग्निं सलिलं महीं च
ज्योतींषि सत्त्वानि दिशो द्रुमादीन् ।
सरित्समुद्रांश्च हरेः शरीरं
यत्किंच भूतं प्रणमेदनन्य इति ॥

तत्रोत्तमोत्तमानां भागवतानां वशाधीनो भगवान् । तस्माद् भक्तिकामैः सत्सङ्गः कर्त्तव्यः ॥२८॥

ननु सङ्गस्तु हेयत्वेनोक्तस्तत्राह । न हेय इति ॥ महताम्

उत्तमभागवतानां सङ्गः अन्यस्त्रीपुत्रशरीरादीनां सङ्ग इव क्वचिदपि न हेयः ।

प्रसङ्गमजरं पाशमात्मनः कवयो विदुः ।
स एव साधुषु कृतो मोक्षद्वारमपावृतमिति
श्रीकपिलोक्तेः (१) ॥

यथान्यरागवत् । देहगेहपुत्राद्यनुरागो यथा हेयस्तद्वत्यः परमेश्वरेऽनुरागः स मुक्तदशायामपि न हेयः । मुक्तिफलत्वात् । तथा सत्सङ्गोऽपि ॥

हेया रागत्वादिति चेन्नोत्तमास्पदत्वात्सङ्गवदिति
शाण्डिल्यसूत्रोक्तेः (२) ॥

---

(१) प्रसङ्गमित्यादि श्लोकस्यार्थः ॥ स्त्रीपुत्रदेहगेहद्रव्यादिषु यः प्रसङ्गः प्रकर्षेण सङ्गः तदेव कवय आत्मनो जीवस्य पाशं विदुः । किंभूतम् । अजरं जराशून्यम् । नित्यनूतनमित्यर्थः । स एव सङ्गश्चेत्साधुषु कृतस्तर्हि तदेव अपावृतं नित्यमुक्तं मोक्षद्वारं भवति ॥

(२) हेयेत्यादि शाण्डिल्यसूत्रस्यार्थः ॥ अविद्यास्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशा इति योगशास्त्रे रागस्यापि क्लेशत्वेनाभिधानाद्रागलक्षणा भक्तिरपि मुमुक्षुणा हेयैवेति चेन्न । परमेश्वरविषयकरागस्योत्तमास्पदत्वात् ।

यथोऽस्मि केवलं प्रेम्णा प्रमाणं तत्र गोपिका.
इति भगवदुक्तेः ॥

भक्तियोगोऽपरो वापि न जायेत हरावजे ।
अभयादिगुणैर्युक्तः स्वधर्मस्थो भवेद् बुधः॥३०॥
विश्वरूपं हरिं ध्यायन्कुर्वन्हिंसाविवर्जिताम् ।
क्रियां तेनैव धर्मेण कृष्णं सेवेत धर्मवित्॥३१॥

अतः सांसारिकरागस्यैव क्लेशत्वेनाभिधानात्स एव हेयः । यथा सङ्गमात्रस्य न हेयत्वम् । किं त्वसत्सङ्गस्यैव । तद्वदित्यलं विस्तरेण ॥२९॥

ननु सत्सङ्गस्य दुर्लभत्वाद् भक्त्यभावे किं कर्त्तव्यम् । तत्राह षड्भिः । भक्तियोग इति । सत्सङ्गाभावेन यावद्धराव-परोऽपि भक्तियोगो न जायेत तावदभयादिगुणैर्युक्तः स-न्बुधः स्वधर्मस्थो भवेत् । नाधर्मस्थः । धर्माभावस्थोऽपीत्यर्थः। नरकदुःखभयात् । अभयादीत्यादिपदेन

अभयं सत्त्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ।
अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम् ।
दया भूतेष्वलोलुत्वं मार्दवं ह्रीरचापलम् ।
तेजः क्षमा धृतिः शौचमद्रोहो नातिमानितेत्यादिभिः ॥३०॥

विश्वरूपं हरिं ध्यायन्सन् हिंसाविवर्जितां पशुम-खादिविवर्जितां क्रियां कुर्वन्सँस्तेनैव धर्मेण बुधः कृष्णं से-

परिणामस्तु तच्छक्तेर्विश्वं तस्माद्धि तद्वपुः ।
ज्ञात्वा सेव्यो मुदा सद्भिश्चिदचिद्विग्रहो हरिः ३२

वेत । यतो धर्मवित् । सर्वेषां मदुपासनमिति भगवद्वाक्येन स्वधर्मो ज्ञातो येन स तथा ।

न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ।
मुन्यन्नैः स्यात्परा प्रीतिर्न तथा पशुहिंसये-
त्यापि धर्मो ज्ञातः ॥३१॥

यतस्तत्तस्य भगवतः शक्तिपरिणामो विश्वम् । रूपान्तरापत्तिः परिणामः ।

यथोर्णनाभिः सृजते गृह्णते च
यथा पृथिव्यामोषधयो ग्यासन ।
पुरुषान्नखलोमानि भवन्ति
तथाक्षरात्संभवतीह विश्वमिति श्रुतेः ।
देवादिवदपि लोके इति वेदान्तसूत्राद्वापि (१) ॥

(१) देवादीति वेदान्तसूत्रस्यार्थः ॥ देवाः आदिपदेन ऋषयोऽपि । स्वशक्तेः प्रकाशात्मना कार्याणि सृजन्ते तथा परमेश्वरोऽपि गुणात्मिकया शक्त्या विश्वमित्यर्थः ॥

ऊर्णनाभेन स्वरूपपरिणामः क्रीडागृहम् । भिन्नत्वप्रतीतेः । न वै विवर्त्तः । सत्यत्वप्रतीतेः । तस्यापि क्रीडास्थानत्वादपि । तस्मात्तच्छक्तिपरिणाम एव ।

यथोर्णनाभिर्हृदयादूर्णां संतत्य वक्त्रतः ।
तया विहृत्य भूयस्तां ग्रसत्येवं महेश्वर

इति दत्तात्रेयोक्तेरपि ।

तच्छक्तिपरिणामत्वात्तस्य भगवतो वपुः शरीरमेव विश्वम् ।

क्षित्यादीनामिहार्थानां छाया न कतमापि हि ।
न संघातो विकारोऽपि न पृथग्न त्वितो मृषा ।
न स्युर्ह्यसत्यवयाविन्यसन्नवयोऽन्तत इत्युक्तेः (१) ॥

(१) क्षित्यादीनामित्यादि सार्द्धश्लोकस्यार्थः ॥ क्षित्यादीनां पञ्चभूतानां मध्ये भगवदचिच्छरीरादन्या कतमापि अन्यतमापि इह पृथक् पृथग् देहरूपा ब्रह्माण्डरूपापि छाया न भवति । कीदृशानाम् अर्थानाम् । ऐक्यबुद्ध्यालम्बनरूपदेहादिसंघातारम्भपरिणामानाम्(क)। तेषां संघातोऽपि न चैवं यथा वृक्षाणां संघातो वनम् । एकदेशाकर्षणे सर्वाकर्षणानुपपत्तेः । एकस्मिन् वृक्षे आकृ-

(क) आ० पु० स्त० परिणामानामित्यस्योपरि टिप्पणीरूपेण ऐक्यबुद्ध्यालम्बनरूपदेहादिसङ्घात आरम्भ. परिणामस्य येषामिति लि० वर्त्त० ।

विवर्त्तपरिणामो हि विश्वः सर्वात्मनो हरेः ।
इत्युक्तेर्ब्रह्मणो नेत्रविषयत्वे महानयः ॥३१॥

तस्मादिदं विश्वं भगवदचिच्छरीरमेव ।
पातालमेतस्य हि पादमूलम्
पठन्ति पार्ष्णिप्रपदे रसातलमित्या-
दिभिर्ज्ञात्वा सद्भिर्मुदा अचिच्चिद्विग्रहो हरिः सेव्यः॥३२॥

असन्तमप्यन्त्यहिमन्तरेण
सन्तं गुणं तं किमुयन्ति सन्त

इत्यादीनां पूर्वपक्षास्थितानां वाक्यानां मतमालम्ब्य सर्वात्मनो हरेर्विवर्त्तपरिणामो विश्व इत्युक्तेर्ब्रह्मणो नेत्रवि-

ष्टे न सर्वं वनमाकृष्यते । भूतानां मध्ये तु कस्यचिद्वियोगेऽपि सर्वेषां वियोगो दृश्यते । न च तद्विकारोऽपि देहः । तद्रूपत्वात् । न परिणामोऽपि । तेषां पृथक् पृथक् सत्वात्तस्माद्भिन्नाभिन्नप्रतीतिस्तु मिथ्यैव । तर्हि किं तेषामवयवाः सत्यास्तत्राह । धारयन्तीति धातवो महाभूतानि । तानि तन्मात्रावयवैर्विना न स्युः । कुतः । अवयवित्वात् । तर्हि अवयवः सत्य इति चेत्तत्राह । उक्तप्रकारेणावयविन्यसति अवयवोऽप्यसदेव(क) ।

(क) असन्तं वेमि तु साधु ।

**तस्यात्मनः सतो रूपपरिणामश्च सज्जगत् ।**
**इत्युक्ते रूपभङ्गत्वाद्विकारः स्यादजेऽच्युते ॥३४॥**

पयत्वे सति महाननयः । जडत्वमसङ्गात् । यतश्चक्षुःसंयुक्तायां रज्ज्वामेव सर्पज्ञानं भवति । तदभावे तदभावः । तद्दृष्टान्तेन ब्रह्मणश्चाक्षुषापत्तिर्दुर्निवारा । तस्यां सत्यां जडत्वमेव । तत्सत्ताकोऽतात्त्विकोऽन्यथाभावो विवर्त्तपरिणाम इत्युक्तेः । पूर्वसिद्धस्यातात्त्विकोऽन्यथाभावो वा ॥३३॥

यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरू(क)पाः । तथाक्षराद्विविधाः सौम्यभावा इति ।

वाचारम्भणं विकारो नामधेयम् । मृत्तिकत्येव सत्यमित्यादि गौण्या श्रुत्या तस्यात्मनो भगवतः स्वरूपपरिणाम एवैतज्जगदित्युक्ते सति तस्मिन्नच्युतेऽजे विकारप्रसङ्गः स्यात् । रूपभङ्गत्वात् । पूर्वसिद्धस्य तात्त्विकोऽन्यथाभावः स्वरूपपरिणामः । यथा दुग्धस्य दधि । तस्मान्न स्वरूपपरिणामः । आकाशादीनां पृथक् पृथक् प्रतीतेः । चकारात्स्वभावपरिणामः । यथा जलं स्वभावतः कार्याद् भिन्नत्वेऽपि शैवालादिकार्यरूपं भवतीत्युक्ते तस्मिञ्जीवत्वप्रसङ्गः स्यात् । तदधीनत्वात् । तस्य स्वभावस्य स्वतन्त्रत्वात् ॥३४॥

(क) आ० पु० स्त० स्वरूपा इति पा० ।

यतोऽस्य ब्रह्मणः शक्तिपरिणाम इदञ्जगत् ।
अतोऽचिद्विग्रहं तस्य ज्ञात्वा ध्यायेत तम्बुधः ॥३५॥

यतोऽस्य ब्रह्मणः श्रीकृष्णस्येदं जगत् शक्तिपरिणामः अतस्तस्य चिद्विग्रहं ज्ञात्वा तं बुधो ध्यायेत । भक्तिलाभायेत्यर्थः ।

यावन्न जायेत परावरेऽस्मि-
न्विश्वेश्वरे द्रष्टरि भक्तियोगः ।
तावत्स्थवीयः पुरुषस्य रूपं
क्रियावसाने प्रयतः स्मरेतेति शुकोक्तेः ॥

तस्य ध्यानात्मकभजनस्यावान्तरफलमाह शुकः ।

एवं पुरा धारणयात्मयोनि-
र्नष्टां स्मृतिं प्रत्यवरुद्ध्य तुष्टात् ।
तथा ससर्जेदममोघदृष्टि-
र्यथाप्ययात्प्राग्व्यवसायबुद्धिरिति (१) ॥

(१) एवमित्यादि श्लोकस्यार्थः ॥ एवं पूर्वोक्तया विश्वरूपधारणया तुष्टात्परमेश्वराद् आत्मयोनिर्ब्रह्मा नष्टां स्मृतिं प्रत्यवरुद्ध्य लब्ध्वा तथा, यथा प्रलयात् प्रागिदं विश्वं तथा ससर्ज । यतोऽमोघदृष्टिः सफलज्ञानवान् । अयं भावः। तस्य पञ्चविंशतिवर्षान्तेन कल्पान्तेन या स्मृतिर्नष्टा तान्तु लब्ध्वा(क)विश्वं ससर्जेत्यर्थः। कथंभूतः । व्यवसायबुद्धिः निश्चयात्मिका बुद्धिर्यस्य सः ॥

(क) आ० पु० स० तुष्टाल्लब्ध्वा इति पा० ।

चतुर्थेऽस्मिंस्तु विश्रामे सुमतस्यातिनिर्णयः।
कृतो वैष्णवमोदाय मया दर्शनचक्षुषा॥३६॥

इति श्रीसुसिद्धान्तोत्तमे प्रियादासाचार्यविरचिते
सुमतनिर्णयो नाम चतुर्थो विश्रामः ॥४॥

अतो धारणाया मुख्यफला तु भगवति भक्तिर्भवति । भगवतो गुणमये स्थूलरूपे आवेशितं मनो ह्यगुणे सूक्ष्मतमे आत्मनि ज्योतिषि ब्रह्मणि भगवति वासुदेवाख्ये क्षममावेशितुमिति नृपेन्द्रोक्तेः (१)॥

अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते ।
उभे अपि न गृह्णन्ति मायासृष्टे विपश्चित
इति शुकोक्तेः ॥३५॥

सुसिद्धान्तोत्तमस्यास्य टीकेयं सुखदा कृता ।
शब्दज्ञानविहीनेन शोधनीया वरैर्मया ॥३६॥

इति श्रीअनुत्तमायां प्रियादासाचार्यविरचितायां टीकायां
सुमतनिर्णयो नाम चतुर्थो विश्रामः ॥४॥

---

(१) भगवत इत्यादि गद्यस्यार्थः ॥ भगवतो गुणमये स्थूलरूपे आवेशितं मनो निर्गुणे सूक्ष्मतमे ज्योतिषि ब्रह्मणि आवेशितुं क्षमम् । तस्मिन्निर्जितं मनो भगवति वासुदेवाख्ये आवेशितुं क्षममिति भावः । यद्वा वासुदेवे ब्रह्मणीत्यर्थः ॥

श्रीहरये नमः ॥

(क)

**भक्तियोगेऽपरे चापि जाते सर्वार्थविन्मुनिः ।**
**कर्मज्ञानविरागादींस्त्यक्त्वा कृष्णं भजेद् बुधः॥ १॥**

श्रीगोपीजनवल्लभो जयतितराम् ।

फलानां साधनानां च विश्रामेऽस्मिंस्तु पञ्चमे ।
फलं श्रीभगवद्भक्तिर्वर्ण्यते कृष्णमीनये ।

भक्तियोगोऽपरो वापि न जायेत हरावजे ।
अभयादिगुणैर्युक्तः स्वधर्मस्थो भवेद् बुध इति ।

उक्तं पूर्वविश्रामे । इदानीमस्मिन्स्थाने(ख) यत्कर्त्तव्यं तदेवाह । भक्तियोग इति । अपरे चापि स्वतन्त्रे भक्तियोगे जाते तु मुनिः कर्मज्ञानविरागादींस्त्यक्त्वा कृष्णं भजेत् । कथंभूतो बुधः । यतः सर्वार्थवित् सर्वार्थान्भक्तगुणान्कर्मादीनान्दोषांश्च वेत्ति, यः सः । तेषु कर्म तु प्रारम्भकाले फलकालेऽपि च दोषदुःखदमेव ।

(क) व्यासर्षं ऋदूर्व नारायणस्य सकाशाल्लब्धीकः षष्ठ्यमो विश्रामो लब्धः ॥ (ख; आ० पु० स्म० तज्ज्ञानं इति पा० ।

धर्मः संपद्यते षड्भिरधर्मस्तद्विपर्ययः ।
तस्मान्नृणां क्रियायोगाः सर्वे संसृतिहेतवः
इति भगवदुक्तेः (१) ॥

तदेवाह ।

कर्माणि दुःखोदर्काणि कुर्वन्देहेन तैः पुनः ।
देहमाभजते तत्र किं सुखं मर्त्यधर्मिण इति (२) ॥

(१) धर्म इत्यादि श्लोकस्यार्थः ॥ देशकालद्रव्यकारकमन्त्रकर्मभिः षड्भिः शुद्धैर्धर्मः संपद्यते । एतेषां यो विपर्ययः शुद्ध्यभावः स एवाधर्मः । तेषां शाखोक्ता शुद्धिस्तु दुर्लभा । कर्मारम्भे आचमनशुद्ध्यभावात् ।

गोकर्णाकृतिहस्तेन(क) माषमग्नं जलं पिबेत् ।
तन्न्यूनमधिकं तोयं सुरापानसमम्भवेदित्युक्तेः(ख) ॥

तस्मात्सर्वे क्रियायोगाः शुद्धाशुद्धमिश्रिता वर्णाश्रमधर्मा नृणां संसृतिहेतवः संसारकारणानि दुःखप्रदा एव ॥

(२) कर्माणीत्यादि श्लोकस्यार्थः ॥ देहाभिमानी जीवो देहेन कर्माणि कुर्वन्सन्(ग) पुनस्तैः कर्मभिर्देहम् आ-

(क) व्यासभ लक्ष्मीनारायणस्य पुस्तके हस्ते वै इति पा० ।

(ख) विश्वामित्रकल्पे गायत्रीपञ्चाङ्गे तु गोकर्णाकृतिहस्तेन माषमात्रं जलं पिबेत् । न्यूनातिरिक्तमात्रेण तज्जलं सुरया सममिति पा० ।

(ग) आ० पु० मत सन् इति पा० ।

तस्माद् भगवद्भजने कर्मत्याग एव गुणः। ननु कर्मत्यागेन भक्तिपरिपाकश्चेद् यदि कृतार्थो भवेत्तदा तु न कापि चिन्ता। यदि तत्परिपाकं विनैव म्रियेत चे(क)त्तदा तु कर्मत्यागप्रत्यवायदोषान्महाननर्थः(ख) स्यादिति चेन्न।

त्यक्त्वा स्वधर्मं चरणाम्बुजं हरे-
भजन्नपक्वोऽथ पतेत्ततो यदि।
यत्र क्व वाभद्रमभूदमुष्य किं
को वार्थ आप्तोऽभजतां स्वधर्मत इति
नारदोक्तेः ॥ (१) ॥

भजते। कथंभूतानि। दुःखोदर्काणि दुःखमेवोदर्क उत्तर(ग)फलं येषां तानि। तत्र कर्मसु प्रारम्भकाले फलकालेऽपि दुःखप्रदेषु मर्त्यधर्मिणो जीवस्य किं सुखम्। न किमपि। दुःखमेव। सुखेऽपि दुःखानुभवात्॥

(१) त्यक्त्वेत्यादि श्लोकस्यार्थः॥ स्ववर्णाश्रमाचाररूपं धर्मं त्यक्त्वा हरेर्निजपदं भजतोऽघहरस्य भगवतश्चरणाम्बुजं भजन्पुरुषोऽपक्वो भजनपरिपाकं विना परभक्तिलाभं विना ततो भजनाद्यदि वा नीचयोन्यादौ

(क) स्वा० पु० चेदिति ना०।
(ख) भा० पु० भा० महानर्थः इति पा०।
(ग) भा० पु० भ० दर्कमुत्तर इति पा०। स्वा० पु० उदर्क इति ना०।

अतो भजनापक्कास्यापि भगवद्भक्तस्य न क्षतिलेशोऽपि । यतः कर्मत्याग एव भक्तानां धर्मः। तदेव कर्मावधिमाह श्रीभगवान् ।

तावत्कर्माणि कुर्वीत न निर्विद्येत यावता ।
मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते इति (१) ॥

पतेत् । वाशब्दोऽत्र कटाक्षे । तस्य पतनाभावात् । तत्रापि नीचयोन्यादावपि । अमुष्य भक्तिरसिकस्य किमभद्रमकल्याणमभूत् । नाभूदेवेत्यर्थः । शबरीगजेन्द्रादीनामिवेति भावः । भगवत्पादाम्बुजमभजताम् अभजद्भिस्तु स्वधर्मतः को वार्थ आप्तः । न कोऽपीत्यर्थः। अभजतामिति षष्ठी तु संबन्धमात्रविवक्षया ॥

(१) तावदित्यादि श्लोकस्यार्थः ॥ यावता यावत्। यावता कालेन वा । न निर्विद्येत देहादौ वशीकाराख्यं वैराग्यं न प्राप्नुयात् । तावत् कर्माणि नित्यनैमित्यकाम्यप्रायश्चित्ताख्यानि कुर्वीत । सन्ध्योपासनादि नित्यकर्म । जन्ममरणचन्द्रसूर्यपर्वादिषु यत्तन्नैमित्यम् । दर्शपूर्णमासचातुर्मास्यादिकं काम्यम् ।

हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशान्तिदम् ।
दर्शश्च पूर्णमासश्च चातुर्मास्यम्पशुः सुतः ।
एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव चेत्युक्तेः ।

अस्यार्थः । पशुः पशुयागः । सुतः सोमयागः

अतः कर्म संत्यज्य भगवन्तम्भजेत्स(क) एवोत्तमः।
आज्ञायैवं गुणान्दोषान्मयादिष्टानपि स्वकान्।
धर्मान्संत्यज्य यः सर्वान्मां भजेत स(ख) सत्तम
इति श्रीभगवदुक्तेः (१) ॥

हुतं वैश्वदेवम्। प्रहुतं बलिहरणम्। अन्यत्स्पष्टम्। प्रायश्चित्तं कर्मच्छिद्रनिवर्त्तकम्।
प्रायः पापं विजानीयाच्चित्तं तस्य विशोधनम्।
प्रायश्चित्तं तु तत्प्रोक्तं कर्म कर्मविदां वरैरित्यु-
क्तेस्तानीत्यर्थः। वा वै मत्कथा श्रवणादौ।
आदिपदेन श्रवणकीर्त्तनादिषु नवाङ्गेषु यावच्छ्रद्धा न जायते श्रवणादिभिर्मे परमं श्रेयो भविष्यतीति विश्वासो न जायते तावत्तान्यपि कुर्वीत। श्रद्धायामुत्पन्नायां तु स्ववर्णाश्रमकर्मत्याग एव मद्भक्तस्य धर्मः। तस्य तत्रानधिकारादित्यर्थः॥

(१) आज्ञायेत्यादि श्लोकस्यार्थः॥ यः स्वधर्मान् वर्णाश्रमकर्माणि। धर्मः कर्मेति पर्यायभेदः(ग)। तान् धर्मान्संत्यज्य तेषां वासनां तत्त्यागभयं च संत्यज्य मां भजेत स च सत्तमः स्वधर्मस्थानां मद्भक्तानां कर्मज्ञानवैराग्यमिश्रभक्त्याश्रयाणां मध्ये श्रेष्ठः। शुद्धभक्त्याश्रयत्वात्।

(क) ख्या० पु० भजेत स इति पा०।
(ख) क०। पु० न० ख्या० पु० च सत्तम इति पा०।
(ग) आ० पु० न० भेदात् इति पा०।

तस्माद् भगवद्भक्तानां कर्मत्याग एव गुणस्त्यागाभाव एव दोषः ।

स्वे स्वेऽधिकारे या निष्ठा स गुणः परिकीर्त्तितः ।
विपर्ययस्तु दोषः स्यादुभयोरेष निश्चय इति (१)

धर्माधर्मविदः श्रीभगवतो वचनात् ॥

तस्माद् वैराग्यवतां वर्णाश्रमकर्मत्यागो गुणः । अवैराग्यवतां वर्णाश्रमवतां तत्त्यागो दोषः ।

---

कथंभूतान् । मयादिष्टानपि । श्रुतिस्मृती ममैवाज्ञे इति(क) निजाज्ञाभङ्गभयनिवृत्त्यर्थे अपि शब्दः । किमज्ञानान्नास्तिक्याद्वा । न हि न हि । स्वधर्माचरणे सत्त्वशुद्ध्यादीन् गुणान्विपक्षे प्रत्यवायदोषांश्च आज्ञाय ज्ञात्वा अपि भक्तिबाधकत्वेन मद्ध्यानविक्षेपतया भगवद्भक्त्यैव सर्वं भविष्यतीति दृढनिश्चयेन भागवतधर्मबाधकान् आद्धाग्निहोत्रविद्धैकादशीकृष्णैकादश्युपवासानुपवासान्निवेदित(ख)भक्षणसूतकेऽनर्चनादयस्तानित्यर्थः ॥

(१) स्वे स्वे इत्यादि श्लोकस्यार्थः ॥ भक्त्यधिकाकारे स्वधर्मत्याग एव गुणः । तद्धर्मत्वात् । कर्मास्त्याग एव दोषः । तदधर्मत्वात् । वर्णाश्रमवतां स्वस्वधर्माचरणं गुणः । तत्त्याग एव दोषः । उभयोरेष निश्चयः ॥

---

(क) स्वा० पु० ज्ञेति इति पा० ।
(ख) स्वा० निवद्य इति पा० ।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज।
अहन्त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इति ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावह

इति श्रीभगवदुक्तेः (१) ॥

(१) सर्वधर्मान्परित्यज्येत्यादि श्लोकस्यार्थः ॥ श्रीभगवांस्तत्स्तुतिपूर्वकं गीतायाः(क) सिद्धान्तमाह त्रिभिः ।

सर्वगुह्यतमं भूयः शृणु मे परमं वचः ।
इष्टोऽसि मे दृढमिति ततो वक्ष्यामि ते हितम् ।

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ।
सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज ।
अहन्त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुच इति॥

गुह्यं तु धर्मरहस्यम् । गुह्यतरं ज्ञानरहस्यम् । गुह्यतमं भक्तिरहस्यम् । तद् गुह्यतमं मे परमं वचो भूयः राजविद्याराजगुह्यमिति इति गुह्यतमं शास्त्रमित्यादिभिरुक्तमपि पुनरपि शृणु । यतो दृढं यथा स्यात्तथा मे भक्तोऽसि परमभक्तिरहस्याधिकार्यसि ।ततस्तस्मात्त हितं वक्ष्यामि । मय्येव मनो यस्य स मन्मनाः तथा त्वं भव । मद्भक्तो भव । मद्याजी भव । मां नमस्कुरु । न तु धनममसामिव । ते तु धनहरभक्ता देवयाजिनः सर्वध-

(क · अ० पृ० ‌· गीतायाम् इति पा० ।

न च धर्मत्यागशब्देन भगवता फलत्याग एवोक्तः । न तु धर्मत्यागः ।

श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावह

इत्यादिभिर्निजहस्तेन यः सेतुर्दृढीकृत(क)स्तस्य च्छेदन-भयादिति वाच्यम् । अधिकारानुरूपोपदेशात् । तस्माद्वैष्णवेषु वर्णाश्रमनिष्ठेषु स्वधर्मे निधनं श्रेय इत्युपदेशः कृतः ।

---

न्द्भक्ताः । त्वं तु यथोक्तप्रकारो मामेवैष्यसि प्राप्स्य(ख)सीत्यहं प्रतिजाने प्रतिज्ञां करोमि । नन्वेतादृशत्वं तु स्वधर्मत्यागे न संभवति । धर्मत्यागे प्रत्यवायदोषादधः-पतनम् । कथं तव प्राप्तिः । तत्राह । सर्वधर्मानिति । मन्मना भवेत्यादिना प्रतिपादितभागवतधर्मं विना वर्णाश्रमधर्मान् परित्यज्य मामेकं द्विभुजश्यामसुन्दरं सच्चिदानन्दविग्रहं यदुकुलपालकं शरणं व्रज । मद्भक्तानां कर्मत्याग एव धर्मः । अतो न कर्मत्यागप्रत्यवायदोषः । यदि स्वाज्ञानात्कर्मत्यागात्पापं भवतीति मन्यसे तदपि मा शुचः । यतोऽहं सर्वपापेभ्यस्त्वां मोक्षयिष्यामि ॥

---

(क) व्या० पु० दृढ कृत इति पा० ।

(ख) व्या० पु० त्व० प्रापयिष्य इति पा० ।

सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजे-

न्युपदेशो भागवतेषु । तस्मान्न विरोधः । अन्यथा अहन्त्वां सर्वपापेभ्यो मोक्षयिष्यामीति वाक्यस्य व्यर्थत्वं स्यात् । फलत्यागेन स्वधर्मकारके पापाभावात् । तस्मात्स्वधर्म(क)त्याग एव वैष्णवानां तु धर्मः ।

सर्वेषामपि परो धर्मस्तु स एव ।

एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः ।

भक्तियोगो भगवति तन्नामग्रहणादिभिरिति

यमोक्तेः(ख) ॥(१)॥

(१) एतावानेवेत्यादि श्लोकस्यार्थः ॥ पुंसां जीवानां परो धर्म उत्कृष्टस्स्वाभाविकस्त्वेतावानेव स्मृतः । वेदादिभिरिति शेषेणार्थः । एवकारस्तु धर्मान्तरव्यावृत्त्यर्थं । यतो धर्मान्तरमधर्मस्त्वागन्तुकः । अधिकारान्तरे जन्मान्तरे च तद्वियोगात् । स क इत्याह । तन्नामग्रहणादिभिस्तस्य भगवतो नामरूपलीलागुणानां श्रवणकीर्त्तनस्मरणादिभिर्भक्तैस्तस्मिन्हरौ यो भक्तियोगः । नान्यो भक्तियोगोऽप्यन्यसाधनैः साध्यः । अनित्यत्वात् । परतन्त्रत्वाच्च । यतः कार्याणां घटादीनामनित्यत्वदर्शनात् ॥

(क) व्या० पु० स्वकर्म इति पा० ।

(ख) भा० पु० स्क० षष्ठे इत्यभि० वर्ग० ।

तस्मात्कीर्तनादिरूपो भागवतधर्म एव परो धर्मः । तं विनान्यस्य त्यागो विहितः । न च साधनफलकालयोर्दुःखप्रदानां भजनविरुद्धानां कर्मणां तु हेयत्वं श्रुतिसम्मतम् । न तु योगज्ञानविरागादीनाम् ।

न कर्मणा न प्रजया धनेन त्यागेनैकेना(क)मृतत्वमानशुरिति ।

तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेषु(ख) पुराणम् ।
अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाती-
ति श्रुतेरिति वाच्यम् । भक्तियोगे तेषां प्रयोजनाभावात् ।

यमादिभिर्योगपथैः कामलोभहतो मुहुः ।
मुकुन्दसेवया यद्वत्तथात्माद्धा न शाम्यतीति नारदोक्तेः (१)॥

(१) यमादिभिरित्यादि श्लोकस्यार्थः ॥ मुक्तिं ददातीति मुकुन्दः । तस्य सेवया यद्वदात्मा मनः अद्धा साक्षाच्छाम्यति सेवासुखोदयाद्भगवन्निष्ठो भवति शमो मन्निष्ठता बुद्धेरिति भगवदुक्तेः तथा मुहुः कामलोभहत आत्मा योगपथैर्न शाम्यति । तद्वृत्तिनिरोधात् । कीदृशैः । यमादिभिः यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभिरष्टाङ्गैरित्यर्थः ॥

(क) 'एकेन' इत्यस्य स्थले श्रीशङ्करानन्दसम्मतः 'एके' इति कैवल्योपनिषच्छ्रुतिपाठः ।

(ख) कठोपनिषदि गह्वरेष्ठम् इति पाठः ।

अतस्तत्र तस्याप्रयोजनम् । तथा ज्ञानस्यापि ।

ज्ञात्वाऽज्ञात्वाथ ये वै मां यावान्यश्चास्मि यादृशः ।
भजन्त्यनन्यभावेन ते मे भक्ततमा मताः ।
तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः ।
न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिहेति (१) ॥

ननु साधनान्तराभावे तत्तत्फलानामप्यभावः स्यात्कथमुच्यते भक्तस्य ज्ञानवैराग्यं च न श्रेयस्करमिति चेत्तत्राह ।

---

(१) ज्ञात्वेत्यादि श्लोकद्वयस्यार्थः ॥ यावान् अपरिच्छिन्नोऽनन्तः सच्चिदानन्दविग्रहो विश्वतनुः समोऽहमेवं मां ज्ञात्वा अथवा(क) अज्ञात्वा अनन्यभावेन नान्यस्मिन्भावो यस्य तेन मां भजन्ति ते मे भक्ततमा मताः । यतो भक्तिप्रियोऽहम् । तस्मान्मद्भक्तियुक्तस्य प्रायो ज्ञानं वैराग्यं चेह श्रेयो न भवेत् । प्रत्युताश्रेय एव । अनुरागबाधकत्वात् । ज्ञानमिति कैवल्यं भक्तिबाधकम् । वैराग्यमिति पूर्वोक्तं शुष्कं मद्रागानीकरूपम् । न तु भक्त्यङ्गे ज्ञानवैराग्ये । तदनुरागकारकत्वात् । कीदृशस्य भक्तियुक्तस्य । योगिनः मद्रूपध्याननिष्ठस्य । यतो मदात्मनः मयि आत्मा मनो यस्य सः तस्य । भक्तियोग एव सर्वसाधनफलोत्तमः ॥

(क) भा० पु० स्क० मम् इत्यधि० वर्ण० ।

हरावभक्तेर्जीवानां संसृतिः स्यान्न चान्यथा ।
भक्तियोगाद्विनाशः स्यात्तस्या वै सुमतं त्विदम् ॥ २ ॥

यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ।
योगेन दानधर्मेण श्रेयोभिरितरैरपि ।
सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा ।
स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ।
न किञ्चित् साधवो धीरा भक्ता ह्येकान्तिनो मम ।
वाञ्छन्त्यपि मया दत्तं कैवल्यमपुनर्भवम् ।
नैरपेक्ष्यं परं प्राहुर्निःश्रेयसमनल्पकम् ।
तस्मान्निराशिषो भक्तिर्निरपेक्षस्य मे भवेदिति ।

तस्मात्तेषां कर्मादीनां त्यागेन भगवति भक्तिरेव कर्त्तव्या ॥ १ ॥

तत्प्रयोजनमाह । हराविति । यतो हरौ या अभक्तिस्तस्याः सकाशाज्जीवानां संसृतिः संसारः स्यात् । भक्तियोगात्तस्याः संसृतेर्विनाशः । ननु संसृतिस्त्वज्ञानाद् भवति । न तु कर्माकरणात् । पुनः ज्ञानात्तन्निवृत्तिस्तत्राह । न चान्यथा चकारो निश्चयार्थे । कर्माकरणाद् अज्ञानाद्वा न स्यात् सा स्वभक्तेरेव । ऋते ज्ञानान्न मुक्तिः । अज्ञानात्संसारो भवतीति क्वचिच्छ्रूयते । तत्तु हलं हि मे जीवनमितिवत् । दृष्टाकर्यविचारदृष्ट्या तु न केवलन्तादेव तस्य जीवनम्

किं तु हलकरणेनाल्पबीजाद्यज्जातं बह्वन्नम् तदेव तस्य जीवनम् । एवं साधनभक्त्या ज्ञानम् । तेन प्रौढाया भक्तेः संसारनिवृत्तिः ।

> वासुदेवे भगवति भक्तियोगः प्रयोजितः ।
> जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकमिति सूतोक्तेः ।
>
> ब्रह्मभूतो(क)ऽपरां भक्तिं लभते इति श्रीभगवदुक्तेः ।

एवं हरावभक्तेरज्ञानम् । तेन प्रौढाया अभक्तेः संसृतिः ।

> संसृतिरेषामभक्तेः स्यान्नाज्ञानात्कारणासिद्धे-
> रिति शाण्डिल्यसूत्रोक्तेः (१) ॥

(१) संसृतिरेषामित्यादि शाण्डिल्यसूत्रस्यार्थः ॥ एषां जीवानां भगवदभक्तेः संसृतिः संसारो भवति । नाज्ञानात् । कुतः । कारणासिद्धेः अज्ञानस्य संसारकारणत्वासिद्धेः । यथा जनकाज्ञानान्न पुत्रस्य पशुत्वं स्यात् । स्वपुरुषत्वाज्ञानान्न स्त्रीत्वं कदापि च । तथेश्वराज्ञानात्स्वस्वरूपाज्ञानाद्वा न संसारः । न च जलाज्ञाने तदग्निर्भूत्वा दाहकत्वं ददाति । अग्निरपि तदज्ञाने शैत्यं च । तथेश्वरोऽपि न संसारित्वम् । सर्वसमत्वात् । पूर्णाधारत्वादपि ॥

(क) ब्रा० पु० मे इत्यधि० वर्त० ।

ननु रज्ज्वज्ञानात्सर्पभयं भवेत् । तथा ब्रह्माज्ञानात्संसारभयमिति चेन्न । बालोन्मत्तमुक्तानां तदभावात् । अतो देहानुरागादेव तद्भयम् । न तु रज्ज्वज्ञानात् । तदज्ञाने सर्पज्ञानं तु देहानुरागस्मरणकारणम् । न तु तस्य । तस्माद् भगवद्भक्तिरेव संसारभयकारणम् । यथा यथोपासते तदेव भवतीति श्रुतेः ।

यं यं वापि स्मरन्भावं त्यजन्त्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ।
तस्मात्सर्वेषु कालेषु मामनुस्मर युद्ध्य चेति

भगवद्वचनादपि । तदनुभवमाह नारदः ।

तामेव मनसा गृह्णन्बभूव प्रमदोत्तमा ।
अनन्तरं विदर्भस्य राजसिंहस्य वेश्मनीति (१) ॥

यतो यस्मिन्यस्मिन्पदार्थे सदैवानुरागोऽस्ति तस्यैव देहान्ते स्मरणं भवति ।

तस्मात्सर्वेषु कालेषु मामनुस्मर युद्ध्य चे-
त्युक्तं भगवता । अतः स्त्रीपुत्रादिषु भक्तेः स्त्रीषु

(१) तामेवेत्यादि श्लोकस्यार्थः ॥ स पुरञ्जनस्तु पुरञ्जनीम्मनसा गृह्णन्सञ्चिन्तयन्सन् देहान्तानन्तरं प्रमदोत्तमा बभूव ॥

त्वं स्यात् । भगवद्भक्तस्तद्रूपत्वं च । भक्तिर्नाम परानुरागः ॥

सा परानुरक्तिरीश्वरे इति भक्तिशास्त्रोक्तेः ॥

तदन्यलक्षणानि त्वस्यैवान्तर्भूतानि(क) । अनुरागो(ख) रक्तिः प्रपत्तिरित्यादिपर्यायभेदाः पूर्वोक्ताः । (ग) भवाभवयोरनुराग एव कारणम् । ब्रह्मज्ञानिनामपि भरतादीनां मृगानुरागान्मृगदेहत्वदर्शनात् । तज्ज्ञानविधुराणां व्रजगवादीनां तदनुरागिणां तद्भावप्राप्तेरपि ।

तद्भावाद्बल्लवीनामिति शाण्डिल्यसूत्रोक्तेः (१) ॥

जडं क्रियाहीनमज्ञानं जगत्कारणत्वेनान्यैरुपकल्पितम् । यथा घटस्य घटः कारणम् । जगत्कारणं तु भगवानेव ज्ञानस्वरूपो ज्ञानगुणः क्रियायुक्तः । सर्वशक्त्याश्रयत्वात् । स एवाभक्ताय स्वभक्ताय च संसृतिं विमुक्तिं च ददाति ।

(१) तद्भावादित्यादि शाण्डिल्यसूत्रस्यार्थः ॥ तत्त्वस्य ज्ञानस्याभावादपि बल्लवीनां व्रजसुन्दरीणां कृष्णानुरागेण सिद्धिर्नित्यं कृष्णप्राप्तिः ॥

(क) अ० पु० स्त० ब्या० पु० च चान्तर्भूतानि इति पा० ।

(ख) आ० पु० स्त० ब्या० पु० च अनुरागोऽनुरक्तिः इति पा० ।

(ग) ब्या० पु० तस्माद् इत्यधि० कम्० ।

परानु(क)ध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययाविति
वेदान्तसूत्रोक्तेः (१) ॥

कूर्मे च ।

संसारवृद्धिकर्त्ता च तिरस्कर्त्ता स एव हि ।
तदिच्छया ततो ह्यस्य बन्धमोक्षौ प्रकीर्त्तिताविति ॥

अतस्तदनुरागाणां तत्तत्फलं परमेश्वरो ददातीत्यनेन पूर्वोक्तरीत्या नेश्वरे वैषम्यनैर्घृण्ये ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि माययेति
श्रीभगवदुक्तेः (२) ॥

(१) परान्वित्यादि वेदान्तसूत्रस्यार्थः ॥ परस्य परमेश्वरस्यानुध्यानाज्जीवस्यानुरागानुरूपसङ्कल्पात्तिरोहितं तत्स्वरूपानुभवं तेन तस्मिन्भगवत्यनुरागानुदयान्नित्यमुक्तस्य बन्धविपर्ययौ अज्ञानज्ञानाभ्यां बन्धमोक्षौ ॥

(२) ईश्वर इत्यादि श्लोकस्यार्थः ॥ हे अर्जुन । सर्वभूतानां जीवानां हृद्देशेऽन्तःकरणे ईश्वरः तिष्ठति । किं कुर्वन्(ख) । सर्वभूतानि स्वमायया कर्मफलदात्र्या भ्रामयन् सन् । कथंभूतानि सर्वभूतानि । यन्त्रारूढानि स्व-

(क) ब्रह्मसूत्रे तु पराभि इति पा० ।

(ख) आ० पु० नं० ८ श्रा० पु० च सन् इत्यधि० वर्त्त० ।

तद्रूपं न फलं तस्याः परं किंतु तया हरौ ।
दुर्निवारः परो राग इदमेव फलं विदुः ॥३॥

पूर्वकर्मप्रयत्नं च संसारं चाप्यपेक्ष्य तु ।
ईश्वरः कारयेत्सर्वं तच्चेश्वरकृतं भवेत् ।
अनादित्वाददोषश्च पूर्णशक्तिमतो हरिरिति
भविष्योक्तेः ।

तस्माद्धरावभक्तेः संसृतिः । भगवद्भक्त्या तस्या निवृत्तिरिति साधूक्तम् । अलं विस्तरेण ॥२॥

ननु यर्हि भक्तेः सकाशात्संसारनिवृत्तिस्तर्हि निवृत्य-त्वं भक्तेरिति चेत्तत्राह त्रिभिः । तद्रूपमिति । कुरुत इति । अत इति(क) । तद्रूपं संसृतिनिवृत्तिरूपं तस्या भक्तेर्न परं फलम् । किन्त्ववान्तरमेव । तर्हि किं परं फलम् । तत्राह । तया संसृतिनिवृत्त्या हरौ परो रागोऽनुरागः । कीदृशः । दुर्निवारः । स्वाभाविकः विघ्नैरताडितः । इतीदमेव फलम् । भक्तेर्भक्तिरेव फलं विदुर्मुनय इत्यर्थः । तदपरिपाकपरिपाकभेदात् ॥३॥

---

कर्मयन्त्रारूढानि । अत्र भूतशब्दो जीववाची । भूतानामन्तःकरणाभावात् ॥

---

(क) आ० व्या० पु० च कुरुते इति । अत इति । इति ना० ।

कुरुते सफलान्येव साधनान्यखिलानि च ।
स्वेच्छयोत्पद्यमानस्तु हृदये यस्य तस्य सः ॥४॥
अतोऽकामैः सकामैर्वा सेव्यः सर्वत्र सर्वदा ।
प्रीत्या श्रीभगवान्कृष्णो देववृक्षपदाम्बुजः ॥५॥

तत्कुतः । यतः स रागस्तस्य पुरुषस्याखिलानि ज्ञानवैराग्यादीनि साधनानि सफलानि कुरुते । कीदृशो रागः कस्य । यस्य हृदये स्वेच्छयैवोत्पद्यमानः ।

पूर्तेन तपसा यज्ञैर्दानैर्योगसमाधिना ।
राद्धं निःश्रेयसं पुंसां मत्प्रीतिस्तत्त्वविन्मतमिति
श्रीभगवदुक्तेः ॥

तदभावे सफलान्यपि साधनानि निष्फलान्येवेत्यर्थः ॥ ४ ॥

अतः कारणादकामैः सकामैर्वा सर्वत्र सर्वदेशे सर्वदा सर्वकाले भगवान् श्रीकृष्णः सेव्यः । कीदृशः । देववृक्षपदाम्बुजः । सर्वफलदातृत्वात् । तस्माद् भगवद्भक्तानामेव सर्वफलप्राप्तिः । नान्येषाम् ।

एको वशी सर्वगः कृष्ण ईड्य
एकोऽपि सन्बहुधा यो विभाति ।

अद्वेष्टादिगुणैर्युक्तो यो मद्भक्तः स मे प्रियः।
इत्युक्तं कृष्णचन्द्रेण श्रीगीतायाम्पुनः पुनः॥६॥

तं पीठस्थं येऽनुभजन्ति धीरा-
स्तेषां सिद्धिः शाश्वती नेतरेषा(क)मिति श्रुतेः॥
स्वर्गापवर्गयोः पुंसां रसायां भुवि संपदाम्।
सर्वासामपि सिद्धीनां मूलं तच्चरणार्च्चन-
मिति भागवतोक्तेः॥
फलमस्माद्बादरायणो दृष्टत्वादिति
शाण्डिल्यसूत्रोक्तेः (१) ॥७॥

यद्यपि सकामा अपि भगवद्भक्ता मुक्तिभुक्तियोग्या भवन्ति तथापि ते तन्निमयत्वाय न कल्पन्ते। तस्मान्निष्का-

(१) फलमस्मादित्यादि शाण्डिल्यसूत्रस्यार्थः॥ जैमिनिना कर्मफलदातृत्वेन कर्मैव प्रतिपादितम्। तन्निषेधपूर्वकं व्याससिद्धान्तेन स्वमतमाह। अस्मान्मे बुद्धिगोचराद् ब्रह्मणः सकाशात्कर्मफलं जीवैः प्राप्यते। राजादिरोषतोषाभ्यामुचितफलप्राप्तेर्लोक(ख)दृष्टत्वादित्यर्थः॥

(क) नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।
तं पीठगं येऽनुभजन्ति धीरास्तेषां सिद्धिः शाश्वती नेतरेषाम्॥
इत्या० पु० स्त० व्या० पु० चाधि० वर्ण०।
(ख) श्रा० पु० स्त० व्या० पु० च लोके इति पा०।

**तस्मान्निष्कामभक्तेन तथाभूतेन भक्तपः ।**

**सेव्यः श्रीराधिकानाथस्तत्कथाश्रवणादिभिः॥७॥**

म्यमेव श्रेष्ठम् । तदेवाह द्वाभ्याम् । अद्वेष्टादिगुणैरिति । आदिपदेन ।

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥
संतुष्टः सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः ।
यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ।
हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ।
यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति(क) ।
शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ।
अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ।
समः शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समः सङ्गविवर्जित
इत्यादिभिर्गुणैर्यो युक्तः स मद्भक्तो मे प्रिय इति

श्रीगीतायां पुनः पुनर्भगवता कृष्णचन्द्रेणोक्तम् ॥६॥

अतस्तत्प्रियत्वकामेन भक्तेन निष्कामत्वेन भगवान्से-व्य इत्याह । तस्मादिति ॥७॥

(क) व्या० पु० भवं इलोकः अनपेक्ष इत्यादि श्लोकानन्तरं पठितः ।

तया सहार्चितः कृष्णः सेवितो मुक्तिदो भवेत्।
इत्युक्तं मुनिभिस्तस्मादाराध्यो राधया सह॥८॥

राधया सह सेव्यत्वे प्रयोजनमाह द्वाभ्याम् । तयेति । तया श्रीराधया सहार्चितः सेवितो वा ध्यात एव कृष्णो मुक्तिदो भवेदित्युपलक्षणम् । भुक्तिमुक्तिभक्तिदो भवेदिति मुनिभिरुक्तम् । तस्माद् राधया सहैवाराध्यः । नन्वेकस्यैव कृष्णस्य भजने को दोषः । यतस्तया सह भजनमुक्तमिति शङ्कायां तमेव शिववाक्येनाह ।

गौरतेजो विना यस्तु श्यामतेजः समर्चयेत् ।
जपेद्वा ध्यायते वापि स भवेत् पातकी शिवे ।
स ब्रह्महा सुरापी च स्वर्णस्तेयी च पञ्चमः ।
एतैर्दोषैर्विलिप्येत तेजोभेदान्महेश्वरीति (१) ॥

तस्य दोषस्य फलमाह स्वयं भगवान् ।

आवयोर्भेदबुद्धिं च यः करोति नराधमः ।
तस्य वासः कालसूत्रे यावच्चन्द्रदिवाकरा-
वित्यादिभ्यः । राधाकृष्णयोर्भेदबुद्धौ दोषः स्यात् ।
अभेदेऽपि ।

(१) गौरेत्यादि श्लोकद्वयस्यार्थः ॥ पञ्चमस्तु एव गुरुतल्पगः । स एव गोघ्नश्च । अन्यत्तु स्पष्टम् ॥

आदौ राधां समुच्चार्य पश्चात्कृष्णं वदेद् बुधः ।
व्यतिक्रमे ब्रह्महत्यां लभते नात्र संशय

इति नारायणोक्तेः ।

व्यतिक्रमस्यापि हेयत्वम् । वेदेऽपि ।

राधया सहितो देवो माधवेन च राधिका ।
अनयोर्भेदं पश्यति स संसृतेर्मुक्तो न भवति ।

ब्रह्मसंहितायामपि ।

यः कृष्णः सापि राधा च या राधा कृष्ण एव च ।
अनयोरन्तरादर्शी संसारान्न विमुच्यते इति ।

अतो राधाकृष्णयोः कदापि भेददृष्टिर्न कर्त्तव्या मुमुक्षुभिः । तयोर्भेदाभावात् ।

राधा कृष्णात्मिका नित्यं कृष्णो राधात्मको ध्रुवमिति ब्रह्माण्डपुराणोक्तेः ।

तस्माद्राधाकृष्णयोर्भेदाभावं ज्ञात्वैकस्याः श्रीराधायाश्चैकस्य श्रीकृष्णस्य भजने न दोषः । किन्तु परमो गुणः । नन्वेवन्तर्हि रुक्मिण्या वा लक्ष्म्या सह श्रीकृष्णं भजस्व राधया सह भजने दुराग्रहं त्यक्त्वा । यतः सा तु परकीया । व्रजे श्रीकृष्णस्य विवाहव्यवहाराश्रवणात् । तत्रापि प्रबोधनीमाहात्म्ये व्यासेनोक्तम् । वेश्या देवाङ्गनैव भगवद्वराद्राधिका भूत्वा तत्प्रियात्वं माप्नेति चेत् । सत्यम् । सा परकीया राधैवान्या । प्रेमराधाछायाराधापराराधाभेदात् ।

प्रेमानन्दा प्रेमसिद्धा प्रेमराधा प्रेमाङ्गी प्रियङ्करी एता वीणावाद्ये इत्याथर्वणवेदोक्तेः । छाया नारायणगृहे इति नारायणवचनात् । तस्य शक्तिश्चानेकधा । ह्लादिनीसन्धिनी ज्ञानेच्छाक्रियाद्या बहुविधा । तत्र ह वै तासु ह्लादिनी गरीयसीयमन्तरङ्गभूता राधा कृष्णेनाराध्यते । राधा कृष्णमाराधयति । राधिका गान्धर्वीति सद्भिर्व्यपदिश्यते । अस्या एव कायव्यूहरूपा गोप्यो महिष्यश्च श्रियश्चेति । एतामवज्ञाय कृष्णमाराधयितुमिच्छति स मूढतमः । स मूढतमश्चेति श्रुतेः । राधोपनिषद्यपि ।
यदंशांशा कमला शैलपुत्री तां राधिकां शक्तिधात्रीं नमाम इति।
श्रीश्च ते लक्ष्मीश्च ते(क) पत्न्यावहोरात्रे पार्श्वे इति श्रुतेः(ख)।

अतः श्रीराधैव परा शक्तिर्नित्या सच्चिदानन्दविग्रहा । सैव लक्ष्मीरुक्मिण्यादिरूपा स्वकीया च । परकीयो त्वन्या । यतो ब्रह्मा बाल्यावस्थायां निर्जने वने राधाकृष्णयोर्विवाहं विधिपूर्वकं कृत्वाह राधाम्प्रति । भो देवि ते विवाहकाले स्वच्छायाराधिकां पितृगृहे त्वया स्थापनीया । तस्या रायणेन गोपेन सह विवाहो भविष्यतीति । तत्प्रार्थनया तथैव च्छाया(ग)राधां कृत्वा अमकटल्लीलासुखे स्थिता । यथा सीता छायाजानकीं कृत्वा स्वसुखेन पावके स्थिता सापि च्छाया-

(क) पुरुषसूक्ते तु ते इति पा० ।
(ख) आ० पु० स्व० व्या० पु० च श्रुतेः इति पा० ।
(ग) आ० पु० स्व० व्या० पु० च छायाम् इति पा० ।

राधा स्वपत्यङ्गसङ्गं हित्वा श्रीकृष्णपदाम्बुजं हृदि कृत्वा नित्यलीलासुखमवाप । वेश्याजीवस्य तत्सायुज्याद्व्यासेनोपवर्णिता तद्रूपत्वेनेति विवेचनीयम् । सैव परकीया । श्रुतिविचारे तु सापि स्वकीयैव । यतो वत्सपालहरणे तत्तद्गोपकुमाररूपेण(क) सह सर्वासां गोपकन्यानां विवाहप्रसङ्गात् । काश्च विष्णुपत्न्यो गोप्यो नामेति श्रुतेः ।

धर्म्मैर्विवाहैरूढ़ा या सा पत्नी परिकीर्त्तितेति स्मृत्युक्तेः ।

नित्या परा तु स्वकीयैव कृष्णपट्टमहिष्येव । कृष्णजन्मखण्डे तद्विवाहश्रवणात् । स एव गुप्तविवाहोऽनुवर्णितो वाक्कुशलतया शुकेन वेणुगीते । स यथा ।

पूर्णाः पुलिन्द्य उरुगायपदाब्जराग-
श्रीकुङ्कुमेन दयितास्तनमण्डितेन ।
तद्दर्शनस्मररुजस्तृणरूषितेन
लिम्पन्त्य आननकुचेषु जहुस्तदाधिमिति (१)॥

(१) पूर्णा इत्यादि श्लोकस्यार्थः ॥ उरुगायपदाब्जरागश्रीकुङ्कुमेन पुलिन्द्यः शबराङ्गनाः पूर्णाः कृतार्थाः। कीदृशेन । दयितास्तनमण्डितेन दयितायाः श्रीराधायाः स्तनमण्डितेन । पुनः किंविशिष्टेन । तृणरूषितेन । उरुगायस्य श्रीकृष्णस्य पदाब्जयो रागेणारुणेन श्रीः का-

(क) भा० पु० दश० स्क० पु० श्रीकृष्णेन इत्यधि० वर्ष० ।

न चात्र तस्य दयिता रमेति वाच्यम् ।

गोप्योऽन्तरेण भुजयोरपि यत्स्पृहा श्रीरिति
भगवद्वचनात् (१) ॥

कस्यानुभावोऽस्य(क) न देव विद्महे
तवाङ्घ्रिरेणुस्पर्शाधिकारः ।
यद्वाञ्छया श्रीर्ललना(ख)चरत्तपो
विहाय कामान्सुचिरं धृतव्रते-
ति नागपत्न्युक्तेः ॥

अतो व्रजलीलायान्न रमा दयिता तस्य । किंतु राधैव ।

न्ति(ग)र्यस्य तेन कुङ्कुमेन पुनस्तस्य वनस्थलीषु चङ्क्रमणेन(घ) तृणेषु रूषितेन लग्नेन। कीदृश्यः पुलिन्द्यः । तद्दर्शनस्मररुजः तथाभूतस्य तस्य कुङ्कुमस्य दर्शनेन यः स्मरः कामः स एव रुक्तेन कृतो रुक्तापो वा यासां ताः। पुनस्तदाधिं जहुस्त्यक्तवत्यः । किं कुर्वत्यः । तदेव कुङ्कुममाननकुचेषु लिम्पन्त्यो लेपनं कुर्वत्यः ॥

(१) गोप्य इत्यादि श्लोकचरणस्यार्थः ॥ श्रीभगवान्सङ्कर्षणव्याजेन स्वमाहात्म्यमनुवर्णयति । मे भुजयोरन्तरेण वक्षःस्पर्शनालिङ्गनेन गोप्यो धन्याः । गोप्य

(क) ब्या० पु० वांऽस्य इति पा० ।
(ख) ब्या० पु० श्रीर्ललना इति पा० ।
(ग) भा० पु० स० ब्या० पु० च श्रीकान्तिरिति पा० ।
(घ) ब्या० पु० चङ्क्रमणेन इति पा० ।

वाराणस्यां विशालाक्षी विमला पुरुषोत्तमे ।
रुक्मिणी द्वारकायां तु राधा वृन्दावने वने

इत्यादिकन्तु पूर्वार्धोक्तबहिरङ्गशक्तिद्वयस्य वाराणस्यादिद्वयेऽधिकारः । उत्तरार्द्धोक्तान्तरङ्गशक्तिद्वयस्य द्वारकादिद्वयेऽधिकार इत्येतत्परं ज्ञेयम् ।

वृन्दावनाधिपत्यं तु दत्तं तस्यै प्रतोषता(क) ।
कृष्णेनान्यत्र देवी तु राधा वृन्दावने वने

इति पाद्मोक्तेः ॥

नान्यापि व्रजदेवी दयिता(ख) ।

तन्नः प्रसीद परमेश्वर मा स्म छिन्द्या-
दाशां धृतां त्वयि चिरादरविन्दनेत्रेति

तासामेव वाक्यात् (१) ॥

इति बहुवचनान्तं पदं ललिताद्यभिप्रायकम् । यतः श्रीराधायाः सखीश्रेष्ठत्वेन ताः प्रसिद्धाः । यद्यस्मिन्नालिङ्गने श्रीस्पृहा । श्रीरद्यापि स्पृहयति केवलम् । तदभावे तीव्रं तपोऽपि चरति ॥

(१) तन्न इत्यादि श्लोकार्द्धस्यार्थः ॥ हे अरविन्द-

(क) आ० पु० स्त० प्रतोषिता इति पा० ।

(ख) आ० पु० स्त० व्या० पु० च नहयिता इति पा० ।

अतस्तासां व्रजदेवीनां तु रासक्रीडायां प्रथमसमागमः। वेणुगीते नूत्मेक्षैव । न तु तथैवेत्युक्तेः । श्रीकृष्णमहिषीणां वाक्ये मिथ्यात्वप्रसङ्गः स्यात् । तद्यथा ।

न वयं साध्वि साम्राज्यं स्वाराज्यम्भोज्यमप्युत ।
वैराज्यं पारमेष्ठ्यं च आनन्त्यं वा हरेः पदम् ।
कामयामह एतस्य श्रीमत्पादरजः श्रियः ।
कुचकुङ्कुमगन्धाढ्यं मूर्द्ध्ना वोढुं गदाभृतः ॥
व्रजस्त्रियो यद्वाञ्छन्ति पुलिन्द्यस्तृणवीरुधः ।
गावश्चारयतो गोपाः पादस्पर्शं महात्मन इति (१) ॥

नेत्र तापनिवर्त्तक परमसुन्दर त्वयि तवाङ्गसङ्गरूपां चिरादाशां धृतां भवा(क)न्मा स्म च्छिन्द्यात् ॥

(१) न वयमित्यादि श्लोकत्रयस्यार्थः ॥ हे साध्वि द्रौपदि वयं साम्राज्यं सार्वभौमपदम् । स्वाराज्यमिन्द्रपदम् । भोज्यं तदुभयपदम् । वैराज्यमणिमादिसिद्धीश्वरत्वं वा । पारमेष्ठ्यम्ब्रह्मपदम् । आनन्त्यमनन्तस्य भाव आनन्त्यम्मोक्षपदम् । हरेः पदं वैकुण्ठपदन्तत्सालोक्यादीनपि । उत्तरोत्तरश्रेष्ठमपि न कामयामहे । किन्त्वेतस्य नन्दनन्दनस्य श्रीमत्पादरजो मूर्द्ध्ना वोढुं कामयामहे इति । तत्किंविशिष्टम्। श्रियः कुचकुङ्कुम-

(क) भा० पु० स्क० भवान् इति पा० ।

अतो नोत्प्रेक्षा । व्रजे स्थिता अपि गोप्यः प्रेमवैचित्र्या-च्छ्रीकृष्णस्य वनलीलां साक्षाद् दृष्ट्वा वर्णितवत्यः । त-स्मात्तस्य भगवतो राधैव दयिता । तस्याः स्तनमण्डितेन कुङ्कुमेनेत्यर्थः । विवाहादारभ्य तयो राधाकृष्णयो(क)-र्नित्यसंयोगात् । तयोर्भेदाभावाच्च ।

बाल्येऽपि भगवान्कृष्णः कैशोरं रूपमाश्रितः ।
रेमे विहारैर्विविधैः प्रियया राधया सहेति पाद्मोक्तेः ।
देवी कृष्णमयी प्रोक्ता राधिका कृष्णदेवता ।
सर्वलक्ष्मीमयी सर्वकान्त(ख)संमोहिनी(ग) परेति
गौतमीतन्त्रोक्तेः ॥

गन्धाढ्यम् । श्रीशब्देनात्र राधैव । रुक्मिण्यां कुचकुङ्कुम(घ)-गन्धाढ्यस्य चरणस्य सुलभत्वादतो राधायाः कुचकुङ्कुम-गन्धाढ्यमतिदुर्लभमित्यर्थः । वृन्दावनेऽन्यस्या अधि-काराभावात् । ननु तस्यातिदुर्लभत्वात्किं तद्वाञ्छयात आहुः । यद्यथा गावश्चारयतो महात्मनः श्रीकृष्णस्य पादस्पर्शं गोप्योऽधुना वाञ्छन्ति । गोपाश्च पुलिन्द्य-स्तृणवीरुधोऽपि तथा वयमपि । तत्पराणां सुलभ-मिति भावः ॥

(क) ख्या० पु० राधौ इत्यधि० वर्त्त० ।
(ख) ख्या० पु० कान्ति इति पा० ।
(ग) ख्या० पु० समोहनी इति पा० ।
(घ) ख्या० पु० कुङ्कुम इति ना० ।

अतः श्रीराधया सह श्रीकृष्णभजनं श्रेष्ठम् । तथा सह श्रीकृष्णभजनफलमाह परमागमचक्रवर्त्तिनि नारद-पञ्चरात्रे ।

राधया सहितं कृष्णं यः पूजयति नित्यशः ।
भवेद् भक्तिर्भगवति मुक्तिस्तस्य करे स्थितेति ।

गौतमीतन्त्रेऽपि ।

देवस्याभेदरूपेण तप्तहेमसमप्रभाम् ।
रत्नवस्त्रपरिधानां रत्नालङ्कारलङ्कृताम् ।
श्रीराधिकां तु वामाङ्के पूजयेद् भक्तितत्परः ।
लक्ष्मीम्प्रणव(क)मुच्चार्य राधिकायै नमो लिखेत् ।
राधिकामनुराख्यातश्चतुर्दशफलावहः ।
चतुर्मुख ऋषिश्चास्य गायत्री छन्द ईरितः ।
देवी कृष्णमयी प्रोक्ता राधिका परदेवता ।
स्वरूपाद् द्विभुजा चित्रवसनाभरणान्विता ।
पुरुषः कृष्णः सर्वात्मा सा शक्तिः सर्वदेवता ।
वराभयकरस्था या सेविता दैवतैरिति ।

अतो विद्वद्भिर्निःशेषाविद्यानिवृत्त्या श्रीकृष्णानुरागप्राप्तये युगल(ख)रूपमेवोपास्यम् । न भेददृष्ट्यै-

(क) भा० पु० स्त० लक्ष्मीमप्रणवम् इति पा० ।
(ख) भा० पु० स्त० स्वी० पु० च युगल इति पा० ।

तथा वै रमया श्रीशो जानक्या रघुनन्दनः ।
अन्ययान्योऽवतारो हि सेव्यस्तत्तदुपासकैः॥९॥

सर्वेषां ज्ञानिनां मध्ये यो भजेन्मां स उत्तमः ।
मदुक्तं मां च विज्ञाय स वै मुच्येत बन्धनात्॥१०॥

कम् (क)। इत्यलं विस्तरेण ॥ ८ ॥

यथा राधया सह श्रीकृष्णः सेव्यस्तथा रमया सह श्रीशः नारायणः । जानक्या सह रघुनन्दनो रामचन्द्रः । अन्यः अन्यः अवतारोऽप्यन्ययान्यया तत्तया(ख) प्रियया प्रियया सह सेव्यः । न तु तया तया विरहित इत्यर्थः ॥९॥

तत्सेवनस्य परत्वमाह षड्भिः । सर्वेषामिति । यतः

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान्भजते यो मां स मे युक्ततमो मत इति ।
इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ।
मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते

इत्युक्तं हरिणा ।

---

(क) निःशेषाविद्यानिवृत्त्या श्रीकृष्णानुरागप्राप्तये युगलरूपमेवोपास्यम् । न भेदकृत्यकम् , इति लिखितस्योपरि लेखान्यन्तरेण केनचित् 'निःशेषाविद्यानिवृत्त्या श्रीकृष्णानुरागप्राप्तये युगलरूपमेवोपास्यमभेदकृत्या' इति आ० पु० स्त० लि० वर्त्त० ।

(ख) आ० पु० स्त० मत्तत्प्रियया इति व्या० पु० तत्प्रियया इति पा० ।

इत्युक्तं हरिणा तस्माद् द्वैताद्वैताश्रयो मुनिः ।
विशिष्टाद्वैतनिष्ठो वा मुक्तो भक्तवरो हरेः ॥११॥
अन्योऽद्वैतस्तु द्वैतो वा द्वैताद्वैतोऽपरोऽपि वा ।
विशिष्टाद्वैत आढ्यो वा हर्यभक्तः पतत्यधः ॥१२॥
यतो हि भगवत्प्राप्तौ भक्तिरेव हि कारणम् ।
न ज्ञानं केवलं तत्तु ह्यपरं भक्तिसाधनम् ॥१३॥

मद्रूपमद्वयं ब्रह्म मध्याद्यन्तविवर्जितम् ।
स्वच्छन्द(क)सच्चिदानन्दं भक्त्या जानाति चाव्ययमिति ।
एकाग्रमनसा यो मां ध्यायते हरिमव्ययम्(ख) ।
हृत्पङ्कजे स्वमात्मानं स मुक्तो नात्र संशय इति
श्रुतौ श्रीभगवदुक्तेरपि ।

तस्माद् द्वैताश्रयो मुनिः अद्वैताश्रयो वा द्वैताद्वैताश्रयो वा विशिष्टाद्वैतनिष्ठो वा हरेर्भक्तवरो मुक्तः ॥ १० ॥११॥

अन्यः अद्वैतनिष्ठो द्वैतनिष्ठो वा द्वैताद्वैतो वा विशिष्टाद्वैत आढ्यो वा अपरोऽपि कोऽपि वा हर्यभक्तस्तु अधः पतति ॥१२॥

यतो भगवत्प्राप्तौ भक्तिरेव हि कारणम् । न ज्ञानं

(क) भा० पु० स्व० स्वच्छन्दम् इति पा० ।
(ख) ध्या० पु० हरिरद्वैतम् इति पा० ।

केवलम् । यतस्तत्तु ज्ञानं तु भक्तिसाधनम् । तदप्यपरम् । न परमित्यर्थः ।

ब्रह्मकाण्डन्तु भक्तौ तदभावाय(क) सामान्यादिति
सूत्रोक्तेः (ख) ।

तस्माद् भगवत्प्राप्तिकारणं सैव । ब्रह्मसंस्थोऽमृतत्वमेतीति श्रुतेः ॥

तत्संस्थस्यामृतत्वोपदेशादिति
शाण्डिल्यसूत्रोक्तेः (१) ॥

ननु ब्रह्मसंस्थशब्देन ज्ञानमिति चेन्न ।

ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेरिति
शाण्डिल्यसूत्रोक्तेः (२) ॥

(१) तत्संस्थस्येत्यादि शाण्डिल्यसूत्रस्यार्थः ॥ ईश्वरभक्तस्यामृतत्वोपदेशात् परमेश्वरप्राप्तौ नान्यत्कारणम् ॥

(२) ज्ञानमितीत्यादि शाण्डिल्यसूत्रस्यार्थः ॥ ननु श्रुतौ ब्रह्मसंस्थ(ग)शब्देन ज्ञानमेव । न भक्तिरिति चेन्न ।

(क) ब्या० पु० तदज्ञानाय इति पा० । शाण्डिल्यसूत्रे तु तस्याम् ज्ञानाय इति पा० ।

(ख) अस्य सूत्रस्यार्थस्तु पूर्वोक्तः ।

(ग) ब्या० पु० संस्था इति पा० ।

यतो भगवांस्तु भक्तियोग एव तिष्ठति । नान्यत्र सदैव । आविर्भावतिरोभावा स्वपदे तिष्ठति तामसी सात्त्विकी राजसी मानुषी विज्ञानघन आनन्दघनसच्चिदानन्दैकरसे भक्तियोगे तिष्ठतीति श्रुतेः (१) ॥

भक्तिरेवैनं नयतीत्यादि श्रुतिः पुरैवोक्ता । ननु द्वैतनिष्ठः अद्वैतनिष्ठः विशिष्टाद्वैतनिष्ठः द्वैताद्वैतनिष्ठ इत्युक्तेनैव स च स च स च भक्तिमानिति बुधैर्ज्ञायते ।

द्रष्टुरपि ज्ञानस्य सत्त्वेन तत्संशयत्वम् । कुतः । व्यवहारप्रसङ्गात् लोके तद्भावा(क)दित्यर्थः ॥

(१) आविर्भावेत्यादि श्रुतेरर्थः ॥ आविर्भावो विद्यते यस्याः साविर्भावा । तिरोभावो विद्यते यस्यास्सा तिरोभावा । आविर्भावा चासौ तिरोभावा चैतन्यनाम्नी मूर्ति(ख)स्तामसी राजसी सात्त्विकी तु ब्रह्मविष्णुशिवाख्याः स्वपदे सत्यलोकरमावैकुण्ठकैलासेषु तिष्ठति। विज्ञानघन(ग)आनन्दघननाम्नी मानुषी आनन्दघना विज्ञानघनेतिनाम्नी मानुषी नियतप्रकाशरूपा तु भक्तियोगे तिष्ठति । कथंभूते । सच्चिदानन्दैकरसे भक्तिनिवासस्थानरूपया भगवांल्लभ्य इत्यर्थः ॥

(क) ख्या० पु० तद्भावा इति पा० ।

(ख) ख्या० पु० चैतन्या मूर्त्ति- इति पा० ।

(ग) ख्या० पु० ज्ञान० घन इति पा० ।

कथमुच्यते हर्यभक्तोऽधः पततीति चेत्तत्रोच्यते । वननिष्ठ-इत्युक्ते किं वनानुरागी वनभक्तोऽपि(क) ज्ञायते । न कदापि । अन्यथा वानप्रस्थानां वनानुरागेण मृगजन्मप्रसङ्गः । गृहस्थानां जनकादीनामपि संसारप्रसङ्गः । तत्तज्ज्ञाननिष्ठानां सर्वेषां भक्तिप्रसङ्गः । तेन तस्या अप्यतिसुलभत्वात् । भगवान्कर्हिचिन्मुक्तिं ददाति स्म न भक्तियोगमिति वाक्ये विरोधापत्तिः । तस्माज्ज्ञाननिष्ठानां कथा त्वास्ताम् । ज्ञानस्वरूपाणामपि भक्तिलाभस्तु दुर्लभः ।

मुक्तानामपि सिद्धानां नारायणपरायणः ।
सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने इति ॥

देवानां शुद्धसत्त्वानां मुनीनाममलात्मनाम् ।
भक्तिर्मुकुन्दचरणे न प्रायेणोपजायते
इति नृपोत्तमोक्तेः(ख) ॥

अतो ब्रह्मभूतानामपि भक्तिकृपयैव भक्तिलाभो भवति । नान्यथा । यतः पञ्चमपुरुषार्थरूपा सैव ।

अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसीति
श्रीकपिलोक्तेः ॥

इत्यलं विस्तरेण । यतो भगवद्भक्तिप्रभां त्वेक-

(क) भा० पु० स्क० व्या० पु० च अपि इति ना० ।

(ख) अर्थस्तु पूर्वोक्त. ।

तथाप्यद्वैतनिष्ठानां न भवत्येव श्रीपतौ ।
भक्तिस्त्वचागुणनिष्ठायास्तस्माद्धेयं तु तन्मतम् १४
अतो वैष्णवसिद्धान्ताश्रया आर्या मुमुक्षवः ।
कुर्वन्ति श्रीहरौ भक्तिं मुक्ताश्च भेदनिष्ठया॥ १५॥

स्मादप्युदाहरणाद्विश्वासो जायते । विमुखानां तु बहुभिरपि न कदापि ॥ १३ ॥

एवं भगवत्प्राप्तिकारणे भक्तिसिद्धान्ते(क) सत्यपि अद्वैतसिद्धान्तनिष्ठानां श्रीपतौ निर्गुणनिष्ठायाः सकाशात्कदापि भक्तिर्न भवत्येव । भगवद्विग्रहानादरदोषात् । तस्माद्धेतोस्तन्मतमद्वैनमतं हेयम् ॥१४॥

अतो वैष्णवसिद्धान्ताश्रया मुमुक्षवो मुक्ताश्च भेदनिष्ठया श्रीहरौ भक्तिं कुर्वन्ति । यत आर्याः ।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः ।
मुमुक्षवो घोररूपान्हित्वा भूतपतीनथ ।
नारायणकलाः शान्ता भजन्ति ह्यनसूयव
. इत्युक्तेः (१) ॥ १५ ॥

(१) आत्मारामा इत्यादि श्लोकद्वयस्यार्थः ॥ आ-.

(क) भा०.पू० स्क० स्का० पृ० च भक्तियोगे इति पा० ।

भेदो मुक्तदशायां नात्यभेदः पर(क)जीवयोः ।
यन्नमन्ति सुरा मुक्ताश्चान्ये सर्व इति श्रुतेः॥१६॥

तदेवाह । भेद इति । जीवन्मुक्त(ख)दशायामपि परजीवयोः परमेश्वरजीवयोर्नात्यभेदः । यतो भेदस्तु पूर्वोक्तप्रकारेण चतुर्विधः । कुतः ।

त्मनि भगवति ब्रह्मण्यारामो येषां ते आत्मारामा नित्यमुक्ताः । निर्ग्रन्था अपि निर्गतः अविद्याग्रन्थिर्येभ्यस्ते निर्ग्रन्थाः । मुक्ताश्च मुनयो मननशीला मुमुक्षवोऽपि हरौ निष्कामां भक्तिं कुर्वन्ति । यत इत्थम्भूतगुणो हरिः तस्य भजनीया एव गुणाः । भजनाभावे मुक्तानामपि संसारप्राप्तिश्रवणात् । तस्मान्मुमुक्षवस्तु भूतपतीन्यमेन्द्रेशानवरुणकुवेरादीन्हित्वा नारायणस्य शान्ताः कला आवेशावतारादीन्भजन्ति । कथंभूतान्(ग) । घोररूपान् । सेवयाल्प(घ)फलदानेनाल्पापराधे प्राणनाशकान् । कथम्भूता मुमुक्षवः । अनसूयवः सर्वेषु देवेषु भगवद्भावनया हृदापि तदसूयारहिताः । ते सर्वे नित्यमुक्तादयो भजन्तीत्यनेन भेदसत्त्वमुक्तम्भवति ॥

(क) भा० पु० स्त० व्या० पु० न त्यभेदोऽपर इति पा० ।

(ख) भा० पु० स्त० व्या० पु० च जीवन्मुक्त इति पा० ।

(ग) व्या० पु० भूतपतीन् इत्यधि० वर्त० ।

(घ) व्या० पु० सेवाया अल्प इति पा० ।

यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति श्रुतेः(क) ।

ब्रह्मवादिनां मुक्तानां भेदाभावे तु नमनादिकं भजनञ्च सम्भवति । यतस्तयोरत्यभेदाभावत्वमेव । तत्तु पूर्वोक्तं विस्तरेण । यतो न केनापि देहान्ते ब्रह्माहमस्मीति भावेन देहस्त्यक्तः ।

तद्ध्यानोद्रिक्तया भक्त्या विशुद्धधिषणाः परे ।
तस्मिन्नारायणपदे एकान्तमतयो गतिमिति
युधिष्ठिरादीनां गतिः ।

वासुदेवे भगवति ह्येकान्तमतिराप तामिति द्रौपद्याः ।

कृष्ण एव(एव) भगवति मनोवाग्दृष्टिवृत्तिभिः ।
आत्मन्यात्मानमावेश्य सोऽन्तःश्वास उपारम-
दिति भीष्मस्य ।

तेऽपि तन्मुखनिर्यासं यशो लोकमलापहम् ।
हरेर्निशम्य तत्पादं ध्यायन्तस्तद्गतिं ययु-
रिति प्रचेतसाम्(ग) ।

एवं सा कपिलोक्तेन मार्गेणाचिरतः परम् ।
आत्मानं ब्रह्मनिर्वाणं भगवन्तमवाप हेति देवहूत्याः(घ) ।

---

(क) इयं श्रुतिर्नृसिंहतापनस्था ।
(ख) भा० पु० एवम् इति पा० ।
(ग) भा० पु० स्क० ४ अ० ३१ प्रचेतसः इति पा० ।
(घ) भा० पु० गतिरित्यधि० वर्णि० ।

वासुदेवे भगवति सर्वज्ञे प्रत्यगात्मनि ।
परेण भक्तिभावेन लब्धात्मा मुक्तबन्धनः ।
आत्मानं सर्वभूतेषु भगवन्तमवस्थितम् ।
अपश्यत्सर्वभूतानि भगवत्यपि चात्मनि ।
इच्छाद्वेषविहीनेन सर्वत्र समचेतसा ।
भगवद्भक्तियोगेन प्राप्ता भागवती गति-
रिति कर्दमस्यापि ।

एवंविधानेक(क)गुणः स राजा
परात्मनि ब्रह्मणि वासुदेवे ।
क्रियाकलापैः समुवाह भक्तिं
ययातिरङ्घ्यान्निरयांश्चकारेत्यम्बरीषस्य ।

स तत्र निर्मुक्तसमस्तसङ्ग
आत्मानुभूत्या विधुतत्रिलिङ्गः ।
परेऽमले ब्रह्मणि वासुदेवे
लेभे गतिं भागवतीं प्रतीत इति ययातेः ।

सर्वत्र सङ्गमुत्सृज्य स्वप्नौपम्येन भार्गवी ।
कृष्णे मनः समावेश्य विधुनोल्लिङ्गमात्मन
इति देवयान्या अपि ॥

परीक्षिदपि राजर्षिरात्मन्या(ख)त्मानमात्मना ।
समाधाय परं दध्यावस्पन्दासुर्यथा तरुरिति परीक्षितोऽपि ।

(क) भा० पु० स्क० विधोऽनेक इति पा० ।
(ख) भा० पु० रात्मन्या इति पा० ।

**अभिन्नस्तद्वपुष्ट्वे(क)नांणुत्वेन ब्रह्मणः पृथग् ।**
**भिन्नोऽभिन्नो ह्यतो जीवो मुक्तो बद्धस्तदाश्रितः १७**

कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव । सोऽन्तवेलायामेतत्त्रयं प्रतिपद्येतेति( ख ) श्रुतेरित्येवं सर्वेषां मुमुक्षूणां मुक्तानां गतिश्रवणाज्जीवेश्वरयोर्नात्यभेदः ॥१६॥

ननु नात्यभेद इत्युक्तेन त्वभेदबोधोऽपि जातः । तत्राह। अभिन्न इति। य आत्मनि(ग) तिष्ठतीत्यनया श्रुत्या जीवस्य भगवद्देहत्वेन तस्माद् देहिनो ब्रह्मणो जीवोऽभिन्नः । स्थूलदृष्ट्या देहदेहिनोरभेदान्वयदर्शनात् । एषोऽणुरात्मेत्यनया श्रुत्या तदणुत्वेन विभोर्ब्रह्मणः परमेश्वरात्सूक्ष्मदृष्ट्या भिन्नः । तस्मात्तद्भिन्नाभिन्नो जीवात्मा । ननु भगवद्देहात्तु भिन्न एव । तद्देहदेहिनोरभेदात् ।

देहिदेहभिदा चात्र नेश्वरे विद्यते क्वचिदिति स्मृतेः ।

यदात्मको भगवांस्तदात्मिका व्यक्तिरिति । आमणत्वादानन्द एवेति । सच्चिदानन्दविग्रह इत्यादिश्रुतिभ्यश्च । अन्यथा महत्यनर्थापत्तिः(घ)। तस्मिन्नपि देहजीवान्तर्यामिणाम्भेदेनानीश्वरत्वमसङ्गात् । कथं भिन्नाभिन्न इति चेत्सत्यम् ।

(क) आ० पु० त० व्या० पु० च तद्वपुत्वे इति पा० ।

(ख) आ० पु० त० प्रतिपद्यते इति इति पा० ।

(ग) आ० पु० त० व्या० पु० च यो आत्मनि इति पा० ।

(घ) व्या० पु० महानर्थापत्तिरिति पा० ।

मुक्तो वै भगवद्भक्तो बद्धस्तद्विमुखोऽधमः ।
अतो वै कवयो नित्यं भक्तिं कुर्वन्ति माधवे॥१८॥

तथापि सर्वत्र तद्देहस्यापि व्यापकगुणत्वाद्(क) भिन्नाभिन्न एव । यतस्तदाश्रितः । कथंभूतः । कश्चिद् बद्धः । कश्चिन्मुक्तः । मध्यत्वान्मुमुक्षुश्च ॥१७॥

ननु को बद्धः को मुक्त इति शङ्कायामाह त्रिभिः । मुक्त इति । वै निश्चयार्थे । भगवद्भक्त एव मुक्तः । भजनापक्केऽपि मोक्षाधिकारत्वेन(ख) मुक्त एव । यथा ब्राह्मणबालकेऽपि ब्राह्मणत्वशब्दस्तदधिकारित्वात्(ग) ।

न कर्मबन्धनं जन्म वैष्णवानां च विद्यते ।
विष्णोरनुचरत्वं हि मोक्षमाहुर्मनीषिणः

इति पाद्मोक्तेः ।

स्कान्देऽपि ।

निश्चला त्वयि या भक्तिः सैव मुक्तिर्जनार्दन ।
मुक्ता एव हि भक्तास्ते न सन्देहो हरेः क्वचिदिति ॥१८॥

(क) आ० पु० त्व० व्यापकगुणत्वात् इत्यस्योपरि जन्मकर्ममरणादिभिः इति टिप्पणीरूपेण लि० वर्त्त० ।

(ख) व्या० पु० रित्वेन इति पा० ।

(ग) व्या० पु० रत्वात् इति पा० ।

यतो देशाद्यवस्थानां नियमानादरेण च ।
मुक्तिर्वै वर्णिता वेदैर्वैष्णवानां महात्मनाम् ॥ १६ ॥

नन्वर्चिरादिमार्गं विना कथं भगवद्भक्तानां मुक्तिः ।

शुक्लकृष्णे गती ह्येते जगतः शाश्वती मते ।
एकया यात्यनावृत्तिमन्ययावर्त्तते पुनरिति
भगवदुक्तेः ।

उत्तरायणे देहत्यागिनां मुक्तिः । दक्षिणायने मृतानां संसारः ।

द्रव्यसूक्ष्मविपाकश्च धूमो रात्रिरपक्षयः ।
अयनं दक्षिणं सोमो दर्श ओषधिवीरुधः ।
अन्नं रेत इति क्ष्मेश पितृयाणं पुनर्भव
इति श्रीभागवतोक्तेः (१) ॥

(१) द्रव्यसूक्ष्मेत्यादि सार्धश्लोकस्यार्थः ॥ एतत्सर्वं दक्षिणायनं पितृयाणस्य दक्षिणायनस्य प्रथमान्तानि पुनर्भवान्तानि त्रिलिङ्गविशेषणानि ज्ञातव्यानि । तदेव यानं पञ्चमाषपुरुषवर्णनेन प्रतिपादितं वेदैरपि(क) । अयम्भावः । जलमयद्रव्यस्य होमे कृते तज्जलं यज्ञशेषरूपेण यजमानं प्राप्यते । स एव द्रव्यसूक्ष्मविपाकः । तदेव यजमानं प्राप्य तस्य देहे मृते रात्र्यपक्षयाख्यधूम-

(क) भा० पु० स्क० देवैरिति पा० ।

इति चेत्तत्राह । यत इति । अयम् भावः । भगवद्भक्ताभक्तयोर्गत्यवर्णनेन कर्मठयोगिनां दक्षिणायनोत्तरायणमार्गेण गतिर्वर्णिता । भागवतानां तु देशकालादिनियमाभावेन वैकुण्ठगतिः । स्त्रीपुंसोर्वा य इहैव स्थातुमपेक्षते स सर्वैश्वर्यन्ददाति। यत्र कुत्रापि म्रियेत। देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे । येनासावमृती भूत्वाऽमृतत्वं च गच्छतीति श्रुतेः ।

अभक्तानां तन्नियमाभावेन नरकगतिरेव । स्त्रीपुंसोर्वेत्युक्तेन श्रुत्या वर्णाश्रमनियमाभावत्वमुक्तम् । यतो भक्तौ सर्वेषामधिकारः ।

---

माश्रित्य तद्द्वारा तज्जलं द्युलोकाख्याग्निं गच्छति । तच्छ्रद्धाख्याहुतित्वमापन्नं यजमानेन्द्रियाधिष्ठातृदेवास्तस्मिन्नग्नौ जुह्वति । तद्धुतं जलं सोमाख्ये सोमलोके देहात्मना परिणमते । स याज्ञिको जीवः सोमलोकं प्राप्यते। पुनः सुकृतान्ते स च जलमयो देहः पर्जन्याग्नौ वृष्टयभिमानिदेवविशेषेण हुतः सन्वृष्टिर्भवति । तदेव जलं सोमाख्यं देहभावं वृष्टिभावं चापन्नं पृथिव्यग्नौ हुतं यवान्नभावमाप्नोति । पुनस्तदेव पुरुषाग्नौ हुतं रेतोभावमापन्नं योषिताग्नौ हुतं पुरुषसंज्ञां लभते। स एव पञ्चमाहुत्या पुरुषः ॥

आनिन्द्ययोन्यधिक्रियते पारम्पर्यात्सामान्यादिति
शाण्डिल्यविद्योक्तेः (१) ॥

अतस्तदधिकारिणः सर्वे मोक्षाधिकारिणः ।

देवोऽसुरो मनुष्यो वा यक्षो गन्धर्व एव वा ।
भजन्मुकुन्दचरणं स्वस्तिमान्स्याद्यथा वय-
मिति महादोक्तेः (१) ॥

---

(१) आनिन्द्येत्यादि शाण्डिल्यविद्यासूत्रस्यार्थः ॥ निन्द्ययोनिश्चाण्डालयोनिस्तत्पर्यन्तम्भक्तावधिक्रियते । तेषामुपदेशपारम्पर्येण ज्ञानमपि श्रुतिमूलं भवति । सामान्यहिंसादिज्ञानवदित्यर्थः ॥

(१) देवोऽसुर इत्यादि श्लोकस्यार्थः॥ सात्त्विको देवः । राजसोऽसुरः । त्रिगुणात्मको मनुष्यः । वेति केवलं तामसोऽपि । तेषामपि नियमाभावात् । यक्षो गन्धर्व एव वा मुकुन्दचरणं भजन्पुरुषः स्वस्तिमान्स्यात् निर्भयः स्यात् । ननु तत्कथं निश्चीयते । निदर्शनात् । तथापि भूतभविष्यद्दृष्टान्ताभ्यां नो बालानां न सन्देहनिवृत्तिरिति शङ्कायामनुभवात्मकं निदर्शनमाह । यथा वयमिति । अयं भावः ।

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
न चैनं क्लेदयन्त्यापो न शोषयति मारुत

तस्माद् भक्ता एव कृतार्थाः । कलियुगे तु विशेषतः ।

घोरे कलियुगे प्राप्ते सर्वधर्मविवर्जिते ।
वासुदेवपरा मर्त्यास्ते कृतार्था न संशय

इति शुकोक्तेः ।

त एव सर्वपूज्या अपि ।

अहो यूयं स्म पूर्णार्था भवत्यो लोकपूजिताः ।
वासुदेवे भगवति यासामित्यर्पितं मन इत्युद्धवोक्तेः ।

तासां पादरजोऽपि वाञ्छनीयं वन्दनीयं च ।

आसामहो चरणरेणुजुषामहं स्यां
वृन्दावने किमपि गुल्मलतौषधीनाम् ।
या दुस्त्यजं स्वजनमार्यपथं च हित्वा
भेजुर्मुकुन्दपदवीं श्रुतिभिर्विमृग्यामिति (१) ॥

---

इत्यादिना आत्मा स्वच्छेद्याद्गुणकः । अन्तवन्त इमे देहा इत्यादिना देहस्तु च्छेद्यो दाह्यः क्लेद्यः शोष्यः । तथापि मुकुन्दचरणभजनादस्माकं देहोऽप्यात्मगुणको जातः । तच्छेदनाद्यभावात् ॥

(१) आसामहो इत्यादि श्लोकस्यार्थः ॥ अहो हर्षे । शुभमनोरथत्वात् । आसां व्रजसुन्दरीणां चरणरेणुजुषां सेवमानानां गुल्मलतौषधीनां मध्ये किमप्यहं स्याम् । न तु स्थूलानां तद्गुणां मध्ये । ननु भवांस्तु क्षत्रियोत्तमः पुरुषस्तास्तु स्त्रियोऽपि वैश्यभार्या इति प-

अतः तासां पद्रेणवोऽपि दुर्लभाः ।

षष्टिर्वर्षसहस्राणि मया तप्तन्तपः पुरा ।

नन्दगोपव्रजस्त्रीणां पादरेणूपलब्धये ।

तथापि न मया प्राप्तास्तासां वै पादरेणव

इति बृहद्वामने ब्रह्मोक्तेः ।

तस्मात्तत्प्राप्त्यभावे तु ते वन्दनीयाः ।

वन्दे नन्दव्रजस्त्रीणां पादरेणुमभीक्ष्णशः ।

यासां हरिकथोद्गीतं पुनाति भुवनत्रयमिति ।

रसविषमेऽपि कामिनामिव कथंत्वत्पादरज इच्छसीति चेत्तत्राह । या मुकुन्दपदवीम् भेजुः । अयम्भावः । मम तु स्त्रीपुरुषोत्तममध्यमेषु न दृष्टिः । किं तु भगवद्भक्तिमत्स्वेव । श्रुत्याश्रयेण मुनयो भगवत्पदवीमार्गयन्ति । (ताभिः श्रुतिभिः या अद्यापि विशेषेण मृग्या तां पदवीमार्गयन्ति ।) (क)ताभिः श्रुतिभिर्या अद्यापि विशेषेण मृग्या ताम् मुकुन्दपदवीं भेजुः । किं कृत्वा । दुस्त्यजं स्वजनं हित्वा । ननु सर्वेऽपि हरिभक्ता भजनबाधकान्स्वप्रियान्हित्वैव भगवन्तं भजन्ति । तासां किमधिकं माहात्म्यम् । अस्त्येव । यस्या(ख)श्रयस्य बलेन महान्तोऽपि तदभिलाषं कुर्वन्ति तमार्यपथं वेदपथं च हित्वा ॥

(क) कोष्ठकान्तर्गतोऽशः भा० पु० ना० ।

(ख) भा० पु० स० अंश्या इति पा० ।

गीतमिति गोपिकागीतादि भ्रमरगीतान्तं गीतचतुष्टयमित्यर्थः । तस्माद्धरिभक्त एव मुक्तः । भगवत्प्रियत्वात् ।

यथा त्वं सह पुत्रैस्तु यथा रुद्रो गणैः सह ।
यथा श्रियाभियुक्तोऽहं तथा भक्तो मम प्रिय

इति श्रुतौ भगवदुक्तेः ॥

मम भक्तः प्रिय इत्यनेनैव न श्रीः प्रियेत्युक्तं भवति ।

न तथा मे प्रियतम आत्मयोनिर्न शङ्करः ।
न च संकर्षणो न श्रीर्नैवात्मा च यथा भवा-

नित्यपि भगवद्वचनात् ।

तत्कुतः । तदधीनत्वात् ।

श्रियमनुचरतीं तदर्थिनश्च
द्विपदपतीन्विबुधांश्च यः स्वपूर्णः ।
न भजति निजभृत्यवर्गतन्त्रः
कथममुमुद्विसृजेत्पुमान् रसज्ञ इति

नारदोक्तेः ।

तदभक्तो भगवद्विमुख एव बद्धः ।

य एषां पुरुषं साक्षादात्मप्रभवमीश्वरम् ।
न भजन्त्यवजानन्ति स्थानाद् भ्रष्टाः पतन्त्यधः ।

हित्वात्यायासरचिता गृहापत्यसुहृच्छ्रियः ।
तमो विशन्त्यनिच्छन्तो वासुदेवपराङ्मुखा
इति चमसोक्तेः (१) ॥

दैवेन ते हतधियो भवतः प्रसङ्गा-
त्सर्वाशुभोपशमनाद्विमुखेन्द्रिया ये ।

(१) य एषामित्यादि श्लोकद्वयस्यार्थः ॥ एषां वर्णाश्रमस्थानां मध्ये ये भगवन्तमज्ञात्वा न भजन्ति ये च ज्ञात्वाप्यवजानन्ति अनादरं कुर्वन्ति ब्रह्माहमस्मीति मोहात्ते स्थानाद् भ्रष्टाः सन्तोऽधः पतन्ति । कथंभूतम् । पुरुषं सर्वान्तर्यामिणम् । हितोपदेष्टारं गुरुम् । पुनः किंविशिष्टम् । साक्षादात्मप्रभवं जनकम् ।

मुखबाहूरुपादेभ्यः पुरुषस्याश्रमैः सह ।
चत्वारो जज्ञिरे वर्णा गुणैर्विप्रादयः पृथ-

गिति वचनात् । पुनः किंविशिष्टम् । ईश्वरं पालकम् । कर्माध्यक्षत्वेन तत्फलदातृत्वात् । अतस्तेषां कृतघ्नानां गुरुजनकपालकद्रोहादधः पतनमुचितमेव । ते वासुदेवपराङ्मुखा अनिच्छन्तः अपि तमो विशन्ति । किं कृत्वा । येऽत्यायासेन रचिता गृहापत्यसुहृच्छ्रियस्तान् (!) हित्वा । ते मन्दाः । कर्महताः ॥

कुर्वन्ति कामसुखलेशलवाय दीना
लोभाभिभूतमनसोऽकुशलानि शश्व-
दिति चतुराननोक्तेः (१) ॥

आस्तां विषयजलमीनानां कर्मनिष्ठानां वार्त्ता । ह-
रिविमुखा ऋषयोऽपि वेदविदोऽपीह संसरन्ति ।

अह्न्यापृतार्त्तकरणा निशि निःशयाना
नानामनोरथधिया क्षणभग्ननिद्राः ।

(१) दैवेनेत्यादि श्लोकस्यार्थः ॥ ते तु दैवेन प्रा-
चीनकर्मणा कर्मेन्द्रियादिदानेन हतधियः । ते के । त-
त्राह । ये भगवतः परमेश्वरस्य प्रसङ्गाच्छ्रवणकीर्त्तनस्म-
रणादिरूपाद्विमुखेन्द्रियाः । कथंभूतात् । सर्वाशुभोप-
शमनात् सर्वदुःखनिवर्त्तकात् । कथंभूताः । लोभाभि-
भूतमनसः लोभेन पापजनकेन 'सत्यसारज्ञानवैराग्य-
सुखवनदावानलेनाभिभूतं निर्जितं मनो येषां ते । अतः
शश्वन्निरन्तरम् अकुशलानि भयप्रदान्यक्षेमकर्माणि स्वर्गसु-
खठपाजेन तस्मात्पतनक्लेशदानि कुर्वन्ति । कस्मै प्रयो-
जनाय । कामसुखलेशलवाय । यतो दीनाः । यथातिशू-
द्रा मधुलवाय दुर्गमवृक्षे स्थितमधुमक्षिकागृहच्छेदनाय
प्रयासं कुर्वन्ति ॥

दैवाहतार्थरचना ऋषयोऽपि देव
युष्मत्प्रसङ्गविमुखा इह संसरन्तीति
भागवतोक्तेः (१)॥

मुक्ता अपि कृष्णाविमुखास्त्वधः पतन्ति ।

येऽन्येऽरविन्दाक्ष विमुक्तमानिन-
स्त्वय्यस्तभावादविशुद्धबुद्धयः ।
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रय इति (क)॥

(१) अह्नीत्यादि श्लोकस्यार्थः ॥ भो देव विविध-क्रीडापर युष्मत्प्रसङ्गविमुखा ऋषयोऽपीह संसारे सं-सरन्ति सम्यक् सरन्ति । कीदृशाः । अह्न्यापृतार्त्तकर-णाः अह्नि आपृतानि व्यापृतानि आर्त्तानि व्यापारक्लि-ष्टानि करणानीन्द्रियाणि येषाम्। रात्रावपि न सुखले-शोऽपि । यतो निशि निःशयानाः रात्रौ निर्गतं शयनं येषां ते । तदपि कुतः । यतो नानामनोरथधिया क्षण-भग्ननिद्राः क्षणे क्षणे भग्ना निद्रा येषां ते । स्वप्नवा-हुल्यात् । किं विषयमनोरथांस्तु प्राप्नुवन्ति । न हि न हि । दैवाहतार्थरचनाः दैवेन प्राचीनेन तव प्रसङ्ग-विमुखत्वलक्षणेन कर्मणा आहताः सर्वतः प्रतिहता अ-र्थरचना अर्थोद्यमा येषान्ते ।

(क) येऽन्य इत्यादिश्लोकस्यार्थस्तु पूर्वोक्तः ।

न च मुक्तानां शुभाशुभकर्माभावे कथं जन्मान्तरं स्यात् । यथा बीजाभावे कथं (क) वृक्षोत्पत्तिरिति वाच्यम् । अचिन्त्यमायाबलत्वात् ।

जीवन्मुक्ताः प्रपद्यन्ते क्वचित्संसारवासनाम् ।
योगिनो न विलिप्यन्ते कर्मभिर्भगवत्पराः ।

जीवन्मुक्ता अपि पुनर्बन्धनं यान्ति कर्मभिः ।
यद्(ख)चिन्त्यमहाशक्तौ भगवत्यपराधिन इति (१) ॥

वासनाभाष्यस्थं भगवत्परिशिष्टवचनम् । तस्मात् ।

(१) जीवन्मुक्ता इत्यादि श्लोकद्वयस्यार्थः ॥ जीवन्मुक्ता अपि क्वचित्संसारवासनां प्रपद्यन्ते ।

युञ्जानानामभक्तानां प्राणायामादिभिर्मनः ।
अक्षीणवासनं राजन्दृश्यते क्वचिदुत्थित-
मिति भगवदुक्तेः ॥

कर्माणि संसारबीजानि अपि । भगवत्परास्तु कर्मभिरपि न विलिप्यन्ते । यतस्तान्येव भगवत्समर्पितानि मुक्तिकारणानि भवन्ति ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥

(क) यथा इति पा० ।
(ख) आ० पु० न्त० इया० पु० च कथमिति ना० ।

अयम्भावः । भगवतोऽचिन्त्यमहाशक्त्या अघटन(क) घटनापट्वा माययाऽमृतवृष्टिरूपया दग्धकर्मबीजोत्पत्तिभिः पुनर्बन्धनं यान्ति ब्रह्मराक्षसा भवन्ति ।

नानुव्रजति यो मोहाद् व्रजन्तं जगदीश्वरम् ।
ज्ञानाग्निदग्धकर्मापि स भवेद् ब्रह्मराक्षस

इति रथयात्रोत्सवोक्तेः (१) ॥

---

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि

इति भगवदुक्तेः ॥

अबन्धोऽर्पणस्य मुखमिति शाण्डिल्यसूत्रोक्तेः ॥

अस्य सूत्रस्यार्थः । भगवत्यर्पितानां शुभाशुभमिश्रितकर्मणां स्वस्वफलाजननलक्षणं(ख) बन्धना(ग)भाव एव द्वारमित्यर्थः ।

ननु ते के जीवन्मुक्ता ये पुनः संसारवासनां प्रपद्यन्ते । येऽचिन्त्यमहाशक्तावपराधिनस्ते कर्मभिः पुनर्बन्धनं यान्ति ॥

(१) नानुव्रजतीत्यादि श्लोकस्यार्थः ॥ रथारूढ़ जगदीश्वरमनु मुनिदेवमनुष्या गुप्तप्रकटरूपाः सर्वे प्र-

---

(क) आ० पु० म० व्या० पु० च भवट इति पा० ।
(ख) व्या० पु० लक्षणा इति पा० ।
(ग) आ० पु० म० व्या० पु० च बन्धा इति पा० ।

यन्माययापि विबुधा मुह्यन्ति ज्ञानकाशयेति
मार्कण्डेयोक्तेः (१) ॥

ननु तस्य भगवतोऽद्भुतोऽयं प्रभावः । तत्सान्निध्ये सर्वेषाममन्दामन्दानां तस्मिन् प्रीतिर्भवति । कथमन्तर्यामितया विमुखानामपि सन्निहितेऽपि भगवद्भजने रुचिर्न जायते । तेषां पापोदयेन देहात्मबुद्धेः ।

यत्सानुबन्धेऽसति देहगेहे
ममाहमित्यूढदुराग्रहाणाम् ।
पुंसां सुदूरं वसतोऽपि पुर्या-
म्भजेम तत्ते भगवत्पदाब्जमिति
देवानामुक्तेः ( २ ) ॥

जन्ति । तत्र यो ज्ञानाभिमानी रथादिकं सर्वमनित्यमिति मोहान्नानुव्रजति स ब्रह्मराक्षसो भवेत् । ज्ञानाग्निदग्धकर्मापि मुक्तोऽपि ॥

(१) यन्माययेत्यादि श्लोकार्धस्यार्थः ॥ यस्य भगवतो मायया विबुधा अपि मुह्यन्ति । कीदृश्या । ज्ञानकाशया ज्ञानप्रकाशया । ब्रह्माहमस्मीत्यभिमानेन मुह्यन्ति ।

(२) यत्सान्वित्यादि श्लोकस्यार्थः ॥ पुंसां जीवानां पुर्यामन्तःकरणे वसतोऽपि तव यत्पदाब्जं सुदूरम् अतिदूरं दुष्प्राप्यमित्यर्थः । हे भगवन् तद्वयं भजेम ।

तेन देहगेहावेशेन कृष्णविमुखानां भयम्भवति ।

भयन्द्वितीयाभिनिवेशतः स्या-
दीशादपेतस्य विपर्ययोऽस्मृतिः ।
तन्माययातो बुध आभजेत्तं
भक्त्यैकयेशं गुरुदेवतात्मेति कव्युक्तेः (१) ॥

अतो भगवद्भजनं विना न कदापि कालभयं निवर्त्तते ।

कथंभूतानाम् । असति देहगेहे मदीयोऽयं ग्रहः देहोऽहमिति तयोरूढदुराग्रहो येषाम् । कथंभूते । सानुबन्धसो(क)पकरणे । अतस्तेषां सन्निहितोऽपि भगवानतिदूरः । यथा भाग्यहीनानामन्धबधिराणां गृहे स्थितोऽपि चिन्तामणिः ॥

(१) भयमित्यादि श्लोकस्यार्थः ॥ ईशादपेतस्येश्वरविमुखस्य भयम्भवति । कुतः । तस्येश्वरस्य मायया स्वस्वरूपास्मृतिः स्वस्वरूपस्य जीवस्याणोरीश्वराधीनस्य तदंशस्यानन्दमयस्य अक्षरस्य ज्ञानगुणस्य ज्ञानस्वरूपस्य अस्मृतिर्विपर्ययः देहादावात्मबुद्धिः देहोऽहमस्मीति बुद्धिः । ततो द्वितीयाभिनिवेशः(ख) । सदृशेतनविग्रहस्य भगवतोऽस्फुरणात् । ततो

(क) भा० पु० स्त० स्था० पु० च स्थो इति पा० ।

(ख) भा० पु० स्त० स्था० पु० च द्वयपरूपो नानाभिनिवेशः इत्यधि० वर्ण० ।

नान्यत्र मद् भगवतः प्रधानपुरुषेश्वरात् ।

आत्मनः सर्वभूतानां भयं तीव्रं निवर्त्तते

इति श्रीकपिलोक्तेः (१) ॥

अतो मदाश्रिता एव भयातीता भवन्ति । विमुखा एव मृत्युग्रस्ताः । किं च । भगवद्भक्तास्तु मृत्योः शिरः पदाक्रामन्ति । किं पुनर्वक्तव्यं निर्भया इति ।

तव परि ये चरन्त्यखिलसत्त्वनिकेततया

त उत पदाक्रमन्त्यविगणय्य शिरो निर्ऋतेः ।

---

द्वितीयाभिनिवेशाद्भयं भवतीत्यर्थः । अतो बुधस्तु तमेवेश्वरमाभजेत् आ समन्ताद् भूतानुकूल्येन । कथंभूतः । गुरुदेवतात्मा गुरुरेव देवः पूज्यो यस्य सः । गुरुरेवात्मा यस्य सः ॥

(१) नान्यत्रेत्यादि श्लोकस्यार्थः ॥ मद्भगवतोऽन्यत्र मत्तो विना सर्वभूतानां देवासुरमुनिमनुष्यादीनामात्मनो भयञ्च निवर्त्तते । कीदृशम् । तीव्रं कालभयमित्यर्थः । कथंभूतान्मत्तः । प्रधानपुरुषेश्वरात् मायाजीवयोरीश्वरात् । कर्त्तुमकर्त्तुमन्यथा कर्त्तुं समर्थात् । पुनः कथंभूतात् । भगवतः अचिन्त्यैश्वर्यगुणसमुद्रात् ॥

परिचयसे पशूनिव गिरा विबुधानपि तां-

स्त्वयि कृतसौहृदाः खलु पुनन्ति न ये विमुखा

इति श्रुत्युक्तेः (१) ॥

(१) तव परि य इत्यादि श्रुतिस्तुतिश्लोकस्यार्थः ॥ तवेति कर्मणि षष्ठी। त्वामित्यर्थः। ये भक्ता अखिलसत्त्वनिकेततया सर्वभूतावासतया सर्वभूतसेवया परिचरन्ति त उत त एव निऋतेर्मृत्योः शिरः पदाक्रमन्ति मृत्योः मूर्द्धि पदं दधति। तरन्तीत्यर्थः। किं कृत्वा। तमविगणय्य मृत्युं तिरस्कृत्य। अतस्त्वयि कृतसौहृदा भक्ताः खलु निश्चितमात्मानमन्यांश्च पुनन्ति। न विमुखाः। ते तु नात्मानमपि। कुतोऽन्यान्(क)। तांस्तु विबुधानपि गिरा परिचयसे परितो बध्नासि। पशूनिव। तस्य वाक्तन्तिर्नामानि दामानि। तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितमिति श्रुतेः॥ अस्याः श्रुत्या अर्थः ॥ तन्ती रज्जुः। वागेव तन्तिः। तत्संयुतानि नामानि दामानीव तन्तिः। अस्येश्वरस्य वाचा तन्त्या नामभिर्दामस्थानीयैः सर्वमिदं सितं बद्धमित्यर्थः। अभक्तपरेयं श्रुतिः॥

(क) यथोक्तम्।

परलोकविरुद्धानि कुर्वाणं दूरतस्त्यजेत्।
आत्मानं योऽतिसन्धत्ते स परस्य कथं हित इति॥

एवं भगवद्भक्ता एव मुक्ताः। विमुखा एव बद्धाः। अतः कवयो हिताहितविदः सर्वज्ञास्तु नित्यं माधवे भक्तिं कुर्वन्ति।

अतो वै कवयो नित्यं भक्तिं परमया मुदा।
वासुदेवे भगवति कुर्वन्त्यात्मप्रसाधनीम्।
भेजिरे मुनयोऽथाग्रे भगवन्तमधोक्षजम्।
सत्त्वं विशुद्धं क्षेमाय कल्पन्ते येऽनु तानिहेति

सूतोक्तेः (१) ॥

(१) अतो वै इत्यादि श्लोकद्वयस्यार्थः ॥ नित्यं यथा स्यात्तथा मुक्तास्अपि परमया मुदा वर्तमानकाले कवयो भगवति वासुदेवे भक्तिं कुर्वन्ति। कीदृशीम्। आत्मप्रसाधनीम् आत्मनः(क) शोधनाम्(ख)। रागात्मिकामित्यर्थः। अथाग्रे भूतकालेऽपि मुनयो मननशीला भगवन्तं भेजिरे सेवितवन्तः। (ग)सत्त्वं सत्त्वशरीरम्।

ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृत

इति भगवदुक्त्या ब्रह्मशरीरमित्यर्थः। यतो विशुद्धम्। अतोऽधोक्षजम्। भविष्यकालेऽपि संसारभ्रमण

(क) आ० पु० न० व्या० पु० च मन. इति पा०।
(ख) आ० पु० न० व्या० पु० च शोधिनीमिति पा०।
(ग, व्या० पु० कीदृशम् इत्यधि० वर्त्त० ।

नृषु तव मायया भ्रमममीष्ववगत्य भृशं
त्वयि सुधियोऽभवे दधति भावमनुप्रभवम् ।
कथमनुवर्त्तनां भवभयं तव यद्भृकुटिः
सृजति मुहुस्त्रिणेमिरभवच्छरणेषु भयमिति
श्रुत्युक्तेः (१) ॥

ज्ञात्वा ये तानन् भागवतानन् तेषां धर्मे स्थितास्तेऽपि क्षेमाय परममोक्षाय कल्पन्ते योग्या भवन्ति । निर्भयत्वात् ॥

(१) नृष्वित्यादि श्रुतिस्तुतिश्लोकस्यार्थः ॥ अमीषु नृषु तव मायया भ्रमम्भ्रमणं संसारचक्रमवगत्य ज्ञात्वा सुधियस्तु परमया मुदा त्वयि भावम्भावाङ्कं भक्तियोगं भृशमत्यर्थं विदधति कुर्वन्ति । कथंभूते त्वयि। अभवे भवनिवर्त्तके संसारस्पर्शातमोऽर्के । कथंभूतं भावम् । अनुप्रभवम् अन्वन्वनुभयादिलक्षणं जन्म यस्य तम् । अनुप्रभवम्भ्रमविशेषणमिति न वक्तव्यम् । असक्लिकृष्टात् । एवं ज्ञात्वा सुधियस्त्वयि भावं विदधति । ततः किम् । अत आह । अनुवर्त्ततां त्वयि भावं विदधतां शरणं गतानां पुंसां कथं भवभयं संसारभयं भवेत् । न कथंचिदपीत्यर्थः । कुतः । यद् यस्मात्तव भृकुटिः भ्रूभङ्गरूपः त्रिणेमिः कालः अभवच्छरणेषु भयं जन्ममरणलक्षणं

( अत्र यो भावोऽभिहितः ) स च भावस्तु पञ्चविधः । शान्तदास्यसख्यवात्सल्योज्ज्वलभेदात् । त एव भक्ते रसानां मध्ये पञ्चरसा मुख्याः । विभावानुभावसात्त्विकसञ्चारिभिः स्थायिभावाख्यो भक्तिरसो भवति । रसविषयस्तु रसस्वरूपो भगवान्कृष्णो वेदविषयत्वात् । गो निगमो वसुदेवो वेदार्थकृष्णरामयोः स्तुवन्तीति श्रुतेः ॥ कृष्णस्त्रिभिः शक्त्या समन्वित इति श्रुत्या ह्लादिन्यादिभिस्त्रिभिरित्यर्थः । तासु ह्लादिनी गरीयसीयमन्तरङ्गभूता राधा । सन्धिनी तु धामभूषणशय्यासनादिमित्रभृत्यादिरूपेण परिणता मर्त्यलोकावतीर्णा मातृपितृ( ! )रूपेण चेति । ज्ञानशक्तिस्तु क्षेत्रज्ञरूपेति श्रुत्या पञ्चविधो भावः प्रतिपादितः । यद्विषयको भावस्तद्विषयावलम्बनो विभावः । स द्विविधः । विषयालम्बनात्मक आश्रयालम्बनात्मकश्च । ये स्मारका वस्त्रालङ्कारायुधवेणवादयस्ते उद्दीपनविभावाः । ये भावज्ञापकाः सेवनहास्यगीतनृत्यादयस्तेऽनुभावाः । ये चित्तक्षोभकास्ते सात्त्विकाः । ते चाष्टौ । स्तम्भस्वेदरोमा-

---

मुहुर्मुहुर्वारं वारं सृजति । न भवाङ्करणं रक्षणं(क) रक्षिता येषान्ते अभवच्छरणास्तेषु । न तु स्वच्छरणागतेषु । प्रियत्वात् । त्रिनेमिभिरिति तिस्रो नेमयः अवच्छेदाः शीतोष्णवर्षकाला यस्य स त्रिनेमिः ॥

---

(क) भा० पु० स्त० रक्षणम् इति पा० ।

अकम्पस्वरभङ्गवैवर्ण्यमलयाश्रुधादयः । निर्वेदहर्षगर्वमदवितर्कमोहादयो व्यभिचारिणः ।

तत्र शान्तरसे जगत्कारणं परं ब्रह्म परात्मा नराकृतिः श्रीकृष्णो रामचन्द्रो नारायणो विषयालम्बनः । सनकादय ऋषयः शिवादयो देवा आश्रयालम्बनाः । उपनिषद्विचारादय उद्दीपनविभावाः । नासाग्रदृष्ट्यादयोऽनुभावाः । मलयवर्जिता अश्रुपुलकादयः सात्त्विकाः । निर्वेदस्मृत्यादयः संचारिणः (सञ्चारिण इति व्यभिचारिणामेव नामान्तरम्)। शान्तिः स्थायीति ॥१॥

दास्यरसे सर्वेश्वरः सर्वोपास्यः सर्वशक्तिः समस्तकल्याणगुणगणार्णवो दासवत्सलः सेवकसेवानपेक्षोऽपि दासप्रियः परमेश्वरः सच्चिदानन्दविग्रहो विषयालम्बनः । गोपकुमारोद्धवश्रुतिदेवाम्बरीषविष्वक्सेनहनुमदादय आश्रयालम्बनाः । 'वृन्दायमुनागङ्गासरयूभक्तपादचिह्नगुणगोपीचन्दनोच्छिष्टगन्धमाल्यवस्त्रालङ्कारायुधादय उद्दीपनविभावाः । श्रीभगवत्परिचर्यादयोऽनुभावाः । स्तम्भादयः सात्त्विकाः । हर्षादयः संचारिणः । स्नेहादिः स्थायी । कृष्णवियोगे तु दश दशाः । तापः कृशतोद्वेगः शून्यताऽधृतिर्जडता व्याधिरुन्मादो मूर्च्छा मृतिरिति ॥२॥

सख्यरसे प्रवीणोत्तमस्त्रिलोकसुन्दरो मेधावी सुवेशो मित्रवत्सलो विश्वासास्पदो भगवान्विषयालम्बनः । श्री-

दामार्जुनसुदामसुग्रीवादय आश्रयालम्बनाः । एकशय्यासनभोजनविविधविचित्रपरिहासादयोऽनुभावाः । स्तम्भादयोऽष्टौ सात्त्विकाः । हर्षादयः संचारिणः । सख्यमिति स्थायी । वियोगे तु पूर्ववद् दश दशाः ॥३॥

वात्सल्ये तु कोमलाङ्गः परमचञ्चलः सर्वसुलक्षणसंयुक्तः परमसुन्दरो भगवान्विषयालम्बनः । नन्दोपनन्दयशोदारोहिणीवसुदेवदेवकीदशरथकौसल्या( क )कश्यपादय आश्रयालम्बनाः । स्मितजल्पितचापल्यादय उद्दीपनविभावाः । अङ्गाभिमार्जनाशीर्वादनिदेशलालनपालनादयोऽनुभावाः । स्तम्भादयः सात्त्विकाः । स्तनस्राव(ख)स्तु विशेषः। हर्षशङ्कादयो व्यभिचारिणः । वात्सल्यं स्थायी भावः । वियोगे तु सर्वेषां पूर्ववद्दश दशाः ॥४॥

उज्ज्वलरसे तु सर्वमाधुर्यसमुद्रः परमकमनीयोत्तमः सर्वसौन्दर्यसंग्रहः सर्वमनोनयनाह्लादकारको नित्यकिशोरः श्रीकृष्णो विषयालम्बनः । तत्प्रिया आश्रयालम्बनाः । वेणुरवाद्या उद्दीपनविभावाः । कटाक्षादयोऽनुभावाः । स्तम्भादयः सात्त्विकाः । आलस्यनिर्वेदादयः संचारिणः । प्रियता रतिः स्थायीति । वियोगे तु दश दशाः पूर्ववत् ॥५॥

( क ) व्या० पु० न्त ) व्या०° पु० च कौशल्या इति पा० ।

(ख) व्या० पु० स्रव इति पा० ।

**जीवरूपे हरौ कार्यो ह्युपदेशो मयापि च ।**
**तद्वाक्यामृतमानाय तत्प्रेर्येण तदाज्ञया ॥२०॥**

परीत्य भूतानि परीत्य लोका-
न्परीत्य सर्वा विदिशो(क) दिशश्च ।
उपस्थाय प्रथमजामृतस्या-
त्मनात्मानमभिसंविवेशेति श्रुतेः (ख) ॥

तस्माद्भयमिच्छद्भिः पुरुषैर्भगवानेव ध्येयः पूज्यश्च ।

तस्मात्सर्वात्मना राजन्हरिः सर्वत्र सर्वदा ।
श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान्नृणा-
मिति शुकोक्तेः ॥१०॥

ननु चराचरात्मा भगवांश्चैतन्यजडविग्रहः श्रीकृष्णः सेव्य इत्युक्तं कारिकायाम्पूर्वैव । इदानीं भक्ताभक्तमुक्तिनरकवर्णनोपदेशेन स्वसिद्धान्त(ग)विरोधः स्यात्स कथन्न ज्ञायते त्वयेति चेत् । तत्राह । जीवरूपे इति । मया दासेनापि जीवरूपे हरावुपदेशः कार्यः । तस्मिन्नीश्वरदृष्ट्या । न तु जीवबुद्ध्या । ननु स्वामिन्युपदेशे कृते स्वदासत्वहानिः स्यात् । तत्राह । कथम्भूतेन मया । तत्प्रेर्येण तदधीनेन तस्य भगवतः क्रीडामृगेणेत्यर्थः । कस्मै प्रयोजनाय । तद्वाक्यामृ-

(क) ब्रा० पु० प्रादिशो इति पा० ।
(ख) परीत्येत्यादि श्लोकस्यार्थस्तु पूर्वोक्तः ।
(ग) ब्रा० पु० म० व्रा० पु० च न्तं इति पा० ।

तमानाय(क)। तथा तत्तस्य जीवस्य प्रभोरप्याज्ञया मय्युपदेशं कुर्वित्याज्ञा तया । न तु स्वस्मिन्गुरुबुद्ध्या। वाक्यामृतं तु

पुत्रांश्च शिष्यांश्च नृपो गुरुर्वा
मल्लोककामो मदनुग्रहार्थः ।
इत्थं विमन्युरनुशिक्षेदतज्ज्ञा-
न्न योजयेत्कर्मसु कर्ममूढानिति (१)॥

एवं भगवन्मतं ज्ञात्वा सर्वे तत्कामास्तमे(ख)वोपदेशं कुर्वन्ति।

तमेव वत्साश्रय भृत्यवत्सलं
मुमुक्षुभिर्मृग्यपदाब्जपद्धतिम् ।

(१) पुत्रानित्यादि श्लोकस्यार्थः ॥ मल्लोककामो वैकुण्ठगोलोकादिकामो जीवः पिता गुरुश्च नृपो वा इत्थं पूर्वोक्तभक्तियोगं पुत्रान् शिष्यान्प्रजाश्चानुशिक्षेत् अनुशिष्यात्। कथंभूतान् । अतज्ज्ञान् भक्तिज्ञानविधुरान् । तान्कर्ममूढान्कर्मासक्ता(ग)न्कर्मसु न योजयेत् । फलतृष्णाच्छादिते कर्मकूपे पतनाभिमुखान्पशुभूतांश्च पातयेत्। कथंभूत उपदेष्टा । मदनुग्रहार्थः । मदनुग्रह एवार्थो यस्य सः । पुनः । विमन्युः शिक्षितस्याकरणेऽपि तेषु मम भावनया स्वस्मिन्दासबुद्ध्या कोपशून्यः ॥

(क) भा० पु० स्त० पानाय इति पा० ।
(ख) भा० पु० स्त० भा० पु० च तवे इति पा० ।
(ग) भा० पु० स्त० भा० पु० च कर्माशक्तान् इति पा० ।

अनन्यभावे निजधर्मभाविते
　　मनस्यवस्थाप्य भजस्व पूरुषम् ।
नान्यं ततः पद्मपलाशलोचनाद्
　　दुःखच्छिदं ते मृगयामि कंचन ।
यो मृग्यते हस्तगृहीतपद्मया
　　श्रियेतरैरङ्ग विमृग्यमाणयेति श्रवणात् (१) ॥

(१) तमेवेत्यादि श्लोकद्वयस्यार्थः ॥ सुनीतिर्ध्रुवं स्वसुतमुपदिशति । हे वत्स त्वमपि तमेव भगवन्तमाश्रय शरणं व्रज । ततो भजस्व । किं कृत्वा । तं पुरुषं मनस्यन्तः अवस्थाप्य । कथंभूतम् । भृत्यवत्सलं भृत्यपालकम् । तद्घातदर्शनेन । अतो मुमुक्षुभिर्मृग्यपदाब्जपद्धतिं मोक्ष(क)मिच्छद्भिर्मृग्या पदाब्जयोः पद्धतिर्मार्गो यस्य तम् । कथंभूते मनसि । अनन्यभावे । पुनः । निजधर्मभाविते । नान्यस्मिन्भगवतोऽन्यस्मिन् भावो भक्तिर्यस्य तस्मिन् । निजधर्मेण भगवदाराधनेन शोधिते । मनःशुद्धिं विना तत्स्थिरनिवासाभावात् । अङ्ग हे पुत्र । ततोऽन्यं तस्मात् परमेश्वरादन्यं ते दुःखच्छिदं दुःखनाशकं कमपि देववरं न मृगयाम्यहम् । यतः सर्वदुःखनाशकया श्रियापि सो भगवान्मृग्यते । कथंभूतया । इतरैर्ब्रह्मादिभिर्विमृग्य-

(क) भा० पु० स्त० स्वा० पु० च मोक्ष इति पा० ।

तथा सनत्कुमारोऽपि पृथुमुपदिशति ।

कृच्छ्रो महानिह भवार्णवमप्लवेशां
षड्वर्गनक्रमसुखेन तितीर्षयन्ति ।
तत्त्वं हरेर्भगवतो भजनीयमङ्घ्रिं
कृत्वोडुपं व्यसनमुत्तर दुस्तरार्णमिति (१) ॥

ननु समुद्रपारे संप्राप्ते सति प्लवस्यानादरः स्यात्तथा हरेः पदस्य किम् । न हि न हि ।

समाश्रिता ये पदपल्लवप्लवं
महत्पदं पुण्ययशो मुरारेः ।

---

मायया । पुनः कथंभूतया । हस्तगृहीतपद्मया हस्तेन गृहीतं दीपवत्पद्मं कमलं यया सा तयेत्यर्थः ।

(१) कृच्छ्र इत्यादिश्लोकस्यार्थः । अप्लवेशां न प्लवस्तरणहेतुरीट् ईशो येषां तेषामिह भवार्णवतरणे कृच्छ्रः क्लेशः । यतस्ते असुखेन योगादिना भवार्णवं तितीर्षयन्ति । कथंभूतं भवार्णवम् । षड्वर्गनक्रम् इन्द्रियषड्वर्गा ग्राहाः षड्रयो वा नक्रा यस्मिंस्तम् । ते तु नित्यं सुखिताः अप्लवम्पुरुषम्मृगयन्ति । प्राप्तम्प्राप्तम् भक्षयन्ति । तस्मात्त्वन्तु हरेर्भगवतोऽङ्घ्रिमुडुपं कृत्वा दुस्तरार्णं व्यसनं दुःखसमुद्रमुत्तर । कीदृशम् अङ्घ्रिम् । भजनीयम्भजनार्हमित्यर्थः ॥

भवाम्बुधिर्वत्सपदम्परम्पदं
पदम्पदं यद्विपदान्न तेषामिति शुकोक्तेः (१)॥

अतः प्लवाश्रयमात्रेण स एव पारभूतः परमश्रेयो भवतीत्यर्थः। एवं सर्वे भागवता भगवद्वाक्यामृतमानाय तमेवोपदेशं कुर्वन्ति। विपक्षे दोषः।

जुगुप्सितं धर्मकृतेऽनुशासतः
स्वभावरक्तस्य महान्व्यतिक्रमः।
यद्वाक्यतो धर्म इतीतरः स्थितो
न मन्यते तस्य निवारणं जन इति
नारदोक्तेः ( २ )॥

(१) समाश्रिता इत्यादि श्लोकस्यार्थः॥ ये पुरुषाः पुण्यं यशो यस्य स पुण्ययशाः स चासौ मुरारिश्च तस्य बलिद्वारि स्थितस्य मुरवधादि यशो यस्य। तस्य पदपल्लवप्लवं समाश्रिताः। यथा जलमाश्रिता मीनाः। कथंभूतम्। महत्पदम्महतां शिवादीनां पदं निवासस्पदम्। तेषाम्भवाम्बुधिर्वत्सपदम् अत्यल्पम्भवति। भवाम्बुधौ श्रीकृष्णस्फूर्त्या तद्दर्शनाभावात्। परम्पदम्भगवल्लोकं पदं निवासस्थानम्भवति। यद्विपदामापदाम्पदं संसारं (!) तत्पुनर्न भवति॥

(२) जुगुप्सितमित्यादि श्लोकस्यार्थः॥ जुगुप्सि-

तस्मिन्नद्यमग्निहोत्रादिकं काम्यं कर्म जीवस्य धर्मकृतेऽनु-शासतो धर्मार्थमनुशासतस्तव महान्व्यतिक्रमः महद्-न्यायः भगवत्यपराधो जातस्तस्य वाक्यामृतामाद्-रादित्यर्थः । कुतः । यद्यस्य तव वाक्यतोऽयमेव मुख्यो धर्म इति स्थित इतरः प्राकृतो जनस्तस्य काम्यकर्मादे-रन्येन तत्त्वज्ञेन स्वयमेव त्वया व्यासेन क्रियमाणानि-वारणत्र मन्यते । व्यासस्याप्यनिश्चयात्मिका बुद्धिरिति कथयति(क) ।

यद्वा न कर्मणा न प्रजया धनेन त्यागेनैकेनामृत-त्वमानशुरित्यादिना श्रुत्यापि ।

त एव नियमाः साक्षात्त एव च यमोत्तमाः ।
तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षज

इति कश्यपेन ।

तत्कर्म हरितोषं यत्सा विद्या तन्मतिर्यया ।
हरिर्देहभृतामात्मा स्वयंप्रकृतिरीश्वर

इति नारदेनापि ।

तोषकारणम् ।

नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः ।
प्रीणनाय मुकुन्दस्य न वृत्तं न बहुज्ञता ।

(क) भा० पु० म्ना० कथयन्ति इति व्या० पु० कथयिष्यति इति पा० ।

अविस्मितं तं परिपूर्णकामं
स्वेनैव लाभेन समं प्रशान्तम् ।
विनोपसर्पत्यपरं हि बालिशः
श्वलाङ्गुलेनातितितर्त्ति सिन्धुमित्युक्तेः (१) ॥

न दानञ्च तपो नेज्या न शौचञ्च व्रतानि च ।
प्रीयतेऽमलया भक्त्या हरिरन्यद्विडम्बनमिति
प्रह्लादेन ।

श्रुतमपि तम् (उपदेशं) न मत्वा तन्निष्ठ एव भवति ।

(१) अविस्मितमित्यादि श्लोकस्यार्थः ॥ तं परमेश्वरं विना बालिशः कर्मनिष्ठोऽपरं देवमुपसर्पति गच्छति । तेनावलम्बेन श्वलाङ्गुलेन श्वपुच्छेन सिन्धुमतितितर्त्ति । कीदृशम् । स्वेनैव लाभेन स्वसुखेन परिपूर्णकामं स्वभक्तसेवाभपेक्षम् । पुनः । अविस्मितं पूर्णत्वेऽपि गर्वशून्यम् । पुनः । समं स्वाश्रितानां वर्णाश्रमविवेकवर्जितम् । पुनः किंविशिष्टम् । प्रशान्तं स्वापराधिन्यप्यनुग्रहकारकम् । एवम्भूतं विनान्यं स्वयमेव कर्षधारादिरूपमनाहृत्य श्वपुच्छं धृत्वा तेन सह भवसिन्धौ मज्जति ॥

एवं मुहुः संसारावृत्तिदुःखेऽपि मन्दानां( क )कृष्णे मति-र्नोपजायते ॥

मतिर्न कृष्णे परतः स्वतो वा
मिथोऽभिपद्येत गृहव्रतानाम् ।
अदान्तगोभिर्विशतां तमिस्रं
पुनः ' पुनश्चर्वितचर्वणानामिति
महादोक्तः ( १ ) ॥

( १ ) मतिर्नेत्यादि श्लोकस्यार्थः ॥ अस्मिँल्लोके त्रिविधा जीवाः । एके तूत्तमाः । अपरे मध्यमाः कनिष्ठाश्च । तत्र पुरुषोत्तमानां तु शास्त्रसत्सङ्गाभावेऽपि पूर्वसंस्कारात्कौमारे स्वतः कृष्णे भक्तिर्जायते । नारदो-द्धवादीनामिव। पुरुषमध्यमानान्तु परतः गुरोरुपदेशाद्भरतादीनामिव । कनिष्ठानां तु मिथः स्त्रीपुरुषव्यवहारेण विषयसेवनाद् वैराग्योत्पत्तयः । ऐलययात्या-दीनामिव । गृहव्रतानां गृहप्राप्तिसाधनपराणां हरि-तालिकाप्रदोषकर्मादिषु निष्ठानामनिवृत्तिमार्गप्रियाणां कृष्णे सच्चिदानन्दविग्रहे मतिर्भक्तिः स्वतो नाभि-पद्येत । महापापेन शास्त्रज्ञानाभावेन वैराग्याभा-वात् । न परतः गुरोरुपदेशात् । असम्भावनाविपरी-तभावनाभ्याम् । नापि मिथः । स्त्रीपुम्देहादिमोहात् ।

(क) भा० पु० स्क० ७ अ० ५ श्लो० ३० कर्ममूढानाम् इत्यधि० वर्ण० ।

तेभ्यो हर्यभक्तेभ्यो ब्राह्मणेभ्यस्तु तद्दासश्चाण्डालः श्रेष्ठः ॥

विप्राद् द्विषड्गुणयुतादरविन्दनाभ-
पादारविन्दविमुखाच्छ्वपचं वरिष्ठम् ।
मन्ये तदर्पितमनोवचनेहितार्थ-
प्राणं पुनाति सकुलं न तु भूरिमान
इति प्रह्लादोक्तेः (१) ॥

कथम्भूतानाम् । अदान्तगोभिस्तमिस्रं विशताम् । अदान्तैरस्वाधीनैरिन्द्रियैर्निमित्तभूतैर्यमदूतैर्नरकं विशताम् । पुनः कीदृशानाम् । पुनः पुनश्चर्वितचर्वणानां चर्वितस्यैव चर्वणं भुक्तभोगस्यैव भोगं (!) येषाम् । महोच्छिष्टभोजिनामित्यर्थः ॥

(१) विप्रादित्यादि श्लोकस्यार्थः ॥ अरविन्दनाभस्य जगदाधारस्य पादारविन्दविमुखाद्विप्रादपि हरिभक्तं श्वपचं चाण्डालं वरिष्ठं मन्येऽहम् । किं वक्तव्यं पुनः क्षत्रियादिभ्यः । यर्हि ब्राह्मणो हरिभक्तश्चेत्तर्हि तु सुवर्णे यथा सुगन्धः । परमवरिष्ठ इति भावः । कथम्भूताद्विप्रात् । द्विषड्गुणयुतात् । गुणास्तु द्रव्यकुलकर्मरूपतपस्तेजोबलश्रुतसहओजःपौरुषप्रज्ञायोगादयः । यद्वा । धर्मसत्यशमदमामत्सूयातपस्तितिक्षाऽहीनसर्वैर्यश्रुतदानादयो महद्गुणा दुर्लभास्तैर्युक्तादपि ।

तस्य तु गृहकूप एव भवसिन्धुर्भवति ।

लब्ध्वा जनो दुर्लभमत्र मानुषं
कथं चिदव्यङ्गमयत्नतोऽनघ ।
पादारविन्दं न भजत्यसन्मति-
र्गृहान्धकूपे पतितो यथा पशुरिति
मुचुकुन्दोक्तेः (१) ॥

कथंभूतं एवं नम । तदर्पितमनोवचनेहितार्थं मनो वचनाभ्यां ये ईहिता(क)स्ते तत् तस्मिन्भगवत्यर्पिता येन तम् । वरिष्ठत्वं(ख) हेतुमाह । स हरिभक्तः श्वपचः स्वकुलं कुलेन सहितं प्राणमात्मानं पुनाति । न तु भूरिमानो विप्रः । स तु शरीरमपि न पुनाति । कुतः कुलम् । केवलं तैर्गुणैर्भूरिमानः संपादितो येन स भूरिमानः ॥

(१) लब्ध्वेत्यादि श्लोकस्यार्थः ॥ हे अनघ अपहृतपाप्मन् परमात्मन् अत्रास्मिँल्लोके दुर्लभमपि मानुषं देहमयत्नतस्तवानुग्रहाल्लब्ध्वाप्यसन्मतिस्ते पादाम्बुजं न भजति । यतः गृहान्धकूपे पतितः । यथा तृणलोभेन पशुः । कथंभूतम् मानुषम् । अव्यङ्गं सर्वाङ्गसुन्दरं दृढतरं भजनोपयोग्यमपि । स एव शोच्यः ॥

(क) व्या० पु० भर्था इत्यधि० वर्त० ।

(ख) पा० पु० ना० व्या० पु० च वरिष्ठं इति पा० ।

देवदत्तामिमं लब्ध्वा नृलोकमजितेन्द्रियः ।
यो नाद्रियेत त्वत्पादौ स शोच्यो ह्यात्मवञ्चक

इति शिवोक्तेः ।

एवमन्योपदेशाज्जीवा भगवद्विमुखाः स्युस्तस्मात्तेषां हिताय भक्त्युपदेश एव कर्त्तव्यो नान्यः । ननु तदुपदेशात्किं विमुखानामपि श्रेयः स्यात् । भवत्येव । यतस्तेऽपि भक्तिशास्त्रश्रवणमात्रेण कृतापराधानुतापयुक्ता भवन्ति । अनुतापाग्निना दग्धाघसमूहा भक्त्यधिकारिणः सन्तो भगवद्भक्त्या कृतार्था भवन्ति । यतः केनापि संबन्धेन कृष्णावेशितधियो न भवाय कल्पन्ते ।

तस्मात्केनाप्युपायेन(क) मनः कृष्णे निवेशयेदिति

नारदवचनात् ।

निभृतमरुन्मनोऽक्षदृढयोगयुजो हृदि यन्
मुनय उपासते तदरयोऽपि ययुः स्मरणा-
द्दिति (१) ॥

(१) निभृतेत्यादि श्रुतिस्तुतिपद्यार्धस्य संक्षिप्तोऽर्थः ॥ यत्कृष्णाख्यन्तत्त्वं हृदि मुनय उपासते तदरयोऽपि तदेव ध्यानाद्ययुः ॥

(क) व्या० पु० बं न कंन प्रकारेण इति पा० ।

तस्माद्वैरानुबन्धेन निर्वैरेण"भयेन वा ।
स्नेहात्कामेन वा युञ्ज्यात्कथंचिन्नेक्षते पृथगिति (१)॥

यथा वैरानुबन्धेन मर्त्यस्तन्मयतामियात् ।
न तथा भक्तियोगेन इति मे निश्चिता मति-
रिति नारदोक्तेः (२) ॥

अयं भावः । तावद् भक्तियोगस्त्वातिदुर्लभः । तस्मिन् प्रादुर्भावेऽपि तद्बाधका अपराधान्तरायाख्या मल खला दुर्निवाराः । तन्निवृत्त्यभ्यासे शिथिलोऽयं लोकः । कृष्णरूपसुखानुभवाभावात् । विषयसुखानुभवाच्च । श्रीभगवद्रूपानुभवस्तु विषयसुखत्यागादेव भवति । स त्यागस्तु मुनीनामपि दुर्लभः । यतो भक्तिकृपापात्राणां तु मर-

(१) तस्माद्वैरेत्यादि श्लोकस्यार्थः ॥ तस्माद् वैरानुबन्धेन निर्वैरेण भयेन वा । कामेन स्नेहेन वा कथंचिच्चेत्पुरुषो मनः कृष्णे युञ्ज्यादिति शेषेणार्थः । स कृष्णाद्विश्वं स्वात्मानं च पृथक् नेक्षते ॥

(२) यथा वैरेत्यादि श्लोकस्यार्थः ॥ (यद्यपि कृष्णे मनो युञ्जानः कृष्णाद्विश्वं स्वात्मानं च पृथग्नेक्षते) तथापि यथा वैरानुबन्धेन मरणभयान्मर्त्यो मरणभयात् तन्मयताऽभगवन्मयतामियात्तथा तु भक्तियोगेन नेति मे निश्चिता मतिः ॥

णभयात्तीतानां(क) भक्तियोगेन तदाकारवृत्तिर्भवति। मत्यानां तु मरणभयेनाशु। यथा तमसावृते गृहे केनापि विधिना सर्पं दृष्ट्वा तदनन्तरं मरणभयेन सर्वेषु गृहपदार्थेषु रज्ज्वादिषु आशु सर्पाकारवृत्तिः न तथा स्नेहात्पुत्राद्याकारेत्यनेन हेतुना निन्द्यस्य वैरानुबन्धस्य स्तुतिः। न तु श्रेष्ठाभिप्रायेण।

कीटः पेशस्कृता रुद्धः कुड्यायां समनुस्मरन्।
संरम्भभययोगेन विन्दते तत्स्वरूपतामिति
तस्यैवोक्तेः ॥ (१) ॥

स नित्यदोद्विग्नधिया तमीश्वरं
पिबन्वदन्वा विचरन्स्वपञ्छ्वसन्।
ददर्श चक्रायुधमग्रतो यत-
स्तदेव रूपं दुरवापमापेत्युक्तेः ॥

तस्माद्वैरानुबन्धेन तादृशत्वं तु दुर्लभम्(ख)।

(१) कीट इत्यादि श्लोकस्यार्थः ॥ पेशस्कृता कुड्यायां रुद्धः कीटस्तं दंशकारं संरम्भभययोगेनानुस्मरंस्तत्स्वरूपतां विन्दते तथा वैराद्यधिकारिणोऽपि भगवत आकाशवाण्यादिना भीतास्तमनुस्मृत्य तत्स्वरूपतामापुः ॥

(क) भा॰ पु॰ स्क॰ ७ अ॰ १ श्लो॰ २६ इत्यस्य व्याख्यायां कृ॰ वर्ण॰।

(ख) भा॰ पु॰ स्क॰ ७ अ॰ १ श्लो॰ २८ दुर्लभः इति पा॰।

अतस्तेनैवोक्तम् ।

कथंचित्कृष्णे मनो युञ्ज्यादिति । अस्या(क)यमभावः । प्राकृतजीवानां येन वैरादिना तदाकारवृत्तिः स्यात्तादृशं वैरं भगवति न संभवति । तस्मात्तद्दोपकारणमेव स्यात् । अतः स्नेहादिसंबन्धः कार्यः । न वैरादिः । यर्हि तादृशं तर्हि तु तत्कृष्णमाभिकारणमेव ।

कामाद् द्वेषाद् भयात्स्नेहाद्यथा भक्त्येश्वरे मनः ।
आवेश्य तदघं हित्वा बहवस्तद्गतिं गता इत्युक्तेः ॥

तस्माद् भगवद्वाक्यामृतमानाय भक्त्युपदेश एव कार्यो नान्यः कदापि ।

य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति ।
भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशय
इति भगवदुक्तेः (१) ॥

इति भगवद्वाक्यादरस्य फलमप्युक्तम् ॥२०॥

(१) य इदमित्यादि श्लोकस्यार्थः ॥ इदं गीताख्यं परमं गुह्यं गीतायाः परं तत्त्वं भक्तिरेवेति मयि भक्तिं परां कृत्वा यो मद्भक्तेष्वभिधास्यति सोऽपि मयि भक्तिं कृत्वा मामेवैष्यति न संशयः ॥

(क) मा० पु० स्त० व्या० पु० न अस्य इति ना० ।

तन्मानकारके पुंसि भगवानप्यनुग्रहम् ।
कुरुते द्विविधः सोऽपि परश्चापर एव च ॥ २१ ॥
सदा शन्दः परो ह्याद्यः स प्रह्लादध्रुवादिषु ।
मानादिभ्रंशरूपोऽसौ बल्यादिष्वपरोऽपि च ॥ २२ ॥

तदेवाह । द्वाभ्याम् । तदिति । तत्तस्य भगवद्वाक्यामृतस्य मानकारको यो जीवस्तस्मिन्मानकारके भगवानप्यनुग्रहं कुरुते ।

तत्त्वं कुरु मदादिष्टमप्रमत्तः प्रजापते ।
मदादेशकरो लोकः सर्वमाप्नोति शोभन-
मिति भगवदुक्तेः ।

सोऽनुग्रहोऽपि द्विविधः । एकस्तु परः । अपरश्चेति ॥ २१ ॥

आद्यः परस्तु सदैव शन्दः कल्याणदः । स तु नारदप्रह्लादध्रुवादिषु जन्मारभ्य देहान्तावधिरेकरसः । द्वितीयो द्रव्यमानादिभ्रंशरूपो बलीन्द्रादिषु ।

यमन्यमनुगृह्णामि तद्विशो विधुनोम्यहम् ।
यन्मत्तः(क) पुरुषः स्तब्धो लोकं मां चावमन्यते
इति भगवदुक्तेः ॥

(क) भा० पु० स्त० दंशा० पु० च यन्मदः इति पा० ।

करोति कृतवान्कर्त्ता स्वरूपैर्मयि यद्धरिः ।
निःश्रेयसाय तत्सर्वमिति मे निश्चिता मतिः २१

त्वन्नूनमसुराणान्नः पारोक्ष्यः परमो गुरुः ।
यो नोऽनेकमदान्धानां विभ्रंशं चक्षुरादिश-
दिति बल्युक्तेः ।

मया तेऽकारि मघवन्मखभङ्गोऽनुगृह्णता ।
मदनुस्मृतये नित्यं मत्तस्येन्द्रश्रिया भृश-
मिति श्रीभगवदुक्तेः ।

त्वयेशानुगृहीतोऽस्मि ध्वस्तस्तम्भो वृथोद्यमः ।
ईश्वरं गुरुमात्मानन्त्वामहं शरणङ्गत
इतीन्द्रोक्तेः ॥ २२ ॥

एवम्भगवदादेशाधीने तदनुग्रहत्ववर्णनेन स्वसि-द्धान्ते विरोधाभावत्वं प्रदर्श्य द्विविधानुग्रहविचारेण स्वा-नुभवमाह । करोतीति । श्रीहरी राधिकावल्लभः स्वरूपै-श्चैतन्यजडविग्रहैरन्तर्यामिचराचरभूतैर्मयि यच्छुभाशुभं भूत-काले कृतवान् वर्त्तमाने करोति भविष्ये कर्त्ता करि-ष्यते तत्सर्वम्मे निःश्रेयसायेति मे निश्चिता मतिर्जातेति शेषेणार्थः । दुःखे सुखाऽनुभवात् । हानौ लाभानुदर्शनाच्च । निन्दायां स्तुतिश्रवणादपि । एवं सर्वेषु शुभाशुभेषु परमम-

लानुभवात् । एतदपि नाश्चर्यं मयि । यतः सर्वे भागवताः सुखासुखेषु भगवदनुग्रहं मन्यन्ते । तदनु ममापि तादृशी मतिर्जातेति भावः । प्रियजननाशेऽपि हरिभक्तस्तमेव (अनुग्रहं) मन्यते ।

तदा तदहमीशस्य भक्तानां शमभीप्सतः ।
अनुग्रहं मन्यमानः प्रातिष्ठं दिशमुत्तरामिति

नारदोक्तेः (१) ॥

तथा राज्यादिविनाशेऽपि तद्दासास्तमेव मन्यन्ते ।

मन्ये ममानुग्रह एष ते कृतो
राज्यानुबन्धापगमो यदृच्छया ।
यः प्रार्थ्यते साधुभिरेकचर्यया
वनं विविक्षद्भिरखण्डभूमिपैरिति

मुचुकुन्दोक्तेः (२) ॥

(१) तदेत्यादि श्लोकस्यार्थः ॥ यदा मे मातुर्मरणं मया श्रुतं तदैव तत्तस्येशस्यानुग्रहं मन्यमानोऽहमुत्तरां दिशं प्रातिष्ठं प्रस्थितवान् । कथंभूतस्य । भक्तानां शमभीप्सतः तादृग्भक्तानां ज्ञानानुग्रहाभ्याम् भक्तानां शं कल्याणमभीप्सतः ॥

(२) मन्ये इत्यादि श्लोकस्यार्थः ॥ हे देव एष राज्यानुबन्धापगमो राज्यादिसङ्गविच्छेदो जातः सोऽयन्ते त्वयानुग्रहः कृत इत्यहम्मन्ये । कुतः । यतस्त-

तदेवानुभवमाहुर्नृपाः ।

नैनं नाथानुसूयामो मागधम्मधुसूदन ।
अनुग्रहो यद् भवतो राज्ञां राज्यच्युतिर्विभो इति (१)॥

एवं द्रव्यलाभालाभेऽपि भागवतास्तदनुकम्पां मन्यन्ते ।

अधनोऽयं धनं प्राप्य माद्यन्नुच्चैर्न्न मां स्मरेत् ।
इति कारुणिको नूनं धनं मेऽभूरि नाददादिति (२) ॥

द्भिश्छेदोऽखण्डभूमिपैः प्रार्थ्यते । कीदृशैः । साधुभिः तपआदिभिः परहितसाधकैः । पुनः किंविशिष्टैः । एकचर्यया वनं विविक्तद्भिः तपसे वनं प्रवेष्टुमिच्छद्भिः ॥

( १ ) नैनमित्यादि श्लोकस्यार्थः ॥ हे नाथ एनं मागधं जरासन्धं नो राज्यापहारकमपि नानुसूयामो वयम् । यद्यस्माज्जरासन्धनिरोधात्त्वत्तोऽनुग्रहो जातः । हे मधुसूदन हे विभो तस्माद् राज्ञां राज्यच्युतिस्तु तवानुग्रह एव । न निग्रहः ॥

( २ ) अधन इत्यादि श्लोकस्यार्थः ॥ अयं सुदामा अधनो धनं प्राप्योच्चैर्माद्यन्सन् धनान्धः सन्मां न स्मरेदिति ज्ञात्वा महाकारुणिको भगवान्मे मह्यमभूर्यपि अल्पमपि धनं नाददात् मम कल्याणविस्तारात् ॥

नूनं बतैतन्मम दुर्भगस्य
शश्वद्दरिद्रस्य समृद्धिहेतुः ।
महाविभूतेरवलोकतोऽन्यो
नैवोपपद्येत यदूत्तमस्येति सुदामोक्तेः (क) ॥

एवम्प्रभावादिकमपि तद्भक्तास्तस्यैव मन्यन्ते ।

गते च दुर्वाससि सोऽम्बरीषो
द्विजोपभोगा(ख)तिपवित्रमाहरत् ।
ऋषेर्विमोक्षं व्यसनं च बुद्ध्वा
मेने स्ववीर्यं च परानुभावमिति
शुकोक्तेः (१) ॥

(१) गते चेत्यादि श्लोकस्यार्थः ॥ दुर्वाससि गते सति स पूर्वोक्तोऽम्बरीषः द्विजोपभोगेन(ग) दुर्वाससो भोजनेन यज्जातं पवित्रं तदन्नं वर्षान्ते आहरत् बुभुजे । कृष्णापितं वैष्णवगृहान्नं परमपवित्रमप्यतिथिसेवाविधिदृढीकरणार्थं द्विजोपभोगातिपवित्रमित्युक्तम् । भोजनं कृत्वैतत्सर्वमृषेर्दुर्वाससो व्यसनं सुदर्शनजातापदुःखं वर्षान्ते, तस्मान्मोक्षं च स्वविनाशाय कृत्यागमनेऽपि धैर्यादिलक्षणं वर्षपर्यन्तानशनादिरूपं च स्व-

(क) नूनम्बतेत्यादि श्लोकस्यार्थस्तु पुरैवोक्तः ।
(ख) व्या० पु० योगा इति पा० ।
(ग) अ० पु० स्त० व्या० पु० च भोग्येन इति पा० ।

तदेव द्रढयति पार्थानुभवेन ।

निशम्य वैष्णवं धाम पार्थः परमविस्मितः ।
यत्किंचित्पौरुषम्पुंसाम्मेने कृष्णानुकम्पितमिति (१) ॥
मद्दर्शनार्थन्ते बाला हृतास्तेन महात्मना ।
विप्रार्थमेष्यते कृष्णो नागच्छेदन्यथेति ह ।
ब्रह्मतेजोमयं दिव्यम्महद्यद्दृष्टवानसि ।
अहं स भरतश्रेष्ठ मत्तेजस्तत्सनातनम् ।
प्रकृतिः सा मम परा व्यक्ताऽव्यक्तसनातना ।
तां प्रविश्य भवन्तीह मुक्ता योगविदुत्तमाः ।
सा सांख्यानां गतिः पार्थ योगिनां च तपस्विनाम् ।
तत्परं परमं ब्रह्म सर्वं विभजते जगत् ।
मामेव तद्घनन्तेजो ज्ञातुमर्हसि भारतेति ।
श्रीभगवदुक्तेः ॥

वीर्यं परानुभावं परस्य परमेश्वरस्यानुभावं प्रभावं मेने। किं कृत्वा । तत्सर्वम्बुद्ध्वा ॥

(१) निशम्येत्यादि श्लोकस्यार्थः ॥ वैष्णवं धाम महत्तत्वाख्यं तत्स्थानं च निशम्य दृष्ट्वार्जुनः परमविस्मितः सन् पुंसां महत्तत्वाख्यादीनां यत्किंचित्पौरुषं तत्कृष्णानुकम्पितं मेने । न तु तेषां स्वातन्त्र्यमित्यर्थः ॥

एवं भागवताः सुखासुखेषु भगवदनुग्रहं मन्यन्ते । तत्तु न स्वाग्रहसाधुत्वाभ्याम् । किं तु तथैव शास्त्रसिद्धान्तोऽपि ॥

यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः ।
ततोऽधनं त्यजन्त्याशु स्वजना दुःखदुःखितम् ।
स यदा वितथोद्योगैर्निर्विण्णः स्याद्धनेहया ।
मत्परैः कृतमैत्रस्य करिष्ये मदनुग्रह-
मिति भगवदुक्तेः (१)॥

तस्माद्राजसतामसादीनां धनपुत्रादिहरणरूपेणानुग्रहेण तान्स्वपथि योजयति भगवान् । ऐश्वर्यादिलाभे

(१) यस्याहमित्यादि पद्यद्वयस्यार्थः ॥ यस्य मध्यमाधिकारिणो यदाहमनुगृह्णामि तदा तस्य धनं शनैर्हरिष्ये । तस्मिन्दोषदृष्टेः । ततः अधनं धनहीनं पुरुषं दुःखदुःखितं नित्यदुःखेन दुःखितं स्वजना आशु त्यजन्ति । स पुनर्बन्धूनामाग्रहेण धनेहया प्रवृत्तोऽपि यदा वितथोद्योगः मदनुग्रहेण नानोद्योगैः धनप्राप्तिप्रयत्नैरपि धनालाभे धनेहां त्यक्त्वा निर्विण्णः स्यात्तदा मत्परैः सह प्रसङ्गं करोति । तेन सङ्गेन तैर्मत्परैरपि स कृतमैत्रो भवति । तस्य मत्पर(क)कृतमैत्रस्य मध्यमानुग्रहं करिष्ये ॥

(क) ३४२० पु० मत्परै° इति पा० ।

त्वधिकोत्सवेन वैष्णवसेवनभगवदाराधनाभ्यां रुचिमुत्पादयति । तस्मै परमैश्वर्यमपि श्रीकृष्णो ददाति । न केवलं द्रव्यं हरेत् ।

पत्न्याः पतिव्रतायास्तु सखा प्रियाचिकीर्षया ।
प्राप्तो मामस्य दास्यामि संपदोऽमर्त्यदुर्लभा

इति भगवदुक्तेः ।

यस्याङ्घ्रिपद्मपरिचर्य विश्व-
विभावनायात्तगुणाभिपत्तेः ।
अजोऽध्यतिष्ठत्खलु पारमेष्ठ्यं
पदं जितात्मश्वसनाभिवन्द्यम् ।
तथा मनुर्वो भगवान्पितामहो
यमेकमत्या पुरुदक्षिणैर्मखैः ।
इष्ट्वाभिपेदे दुरवापमन्यतो
भौमं सुखं दिव्यमथापवर्ग्यमिति मुनीत्युक्तेः ॥

तस्माद् भगवाञ्छान्तदान्तानां सर्वसुखं ददाति । तेषां सूक्ष्मवासनानुज्ञानात् । निष्कामानामपि तद्द्वारा भक्तिविस्तारेच्छया राज्यपुत्रद्रव्यादिदानैर्लालनपालनं करोति कृतवान्करिष्यते । यथा प्रह्लादादीनाम् ।

नैकान्तिनो मे मयि जात्विहाशिष
आशासतेऽमुत्र च ये भवद्विधाः ।

तथापि मन्वन्तरमेतदत्र

दैत्येश्वराणामनुभुङ्क्ष्व भोगानिति

भगवदुक्तेः (१) ॥

परेभ्यो रक्षणं तु भगवान् हठाग्रहेणाविष्कुरुते ।

तस्मान्मच्छरणं गोष्ठं मन्नाथं मत्परिग्रहम् ।
गोपाये स्वात्मयोगेन सोऽयं मे व्रत आहित

इति भगवदुक्तेः (२) ॥

---

(१) नैकान्तिन इत्यादि श्लोकस्यार्थः ॥ मय्येकान्तिनो मे भक्ता मे मत्त इहामुत्र चाशिषो न वाञ्छन्ति । तस्मात्त्वया कामासंरोहरूपं वरं याचितं (!) तद्युक्तम् । यतस्त्वं परमनिष्कामो मे भक्तोऽसि । तथापि मदिच्छयैतन्मन्वन्तरमात्रं दैत्येश्वराणां भोगाननुभुङ्क्ष्वेति ॥

(२) तस्मान्मदित्यादि श्लोकस्यार्थः ॥ देवकालादिद्वाराभावेन स्वशरीरेण भक्तरक्षणं करिष्यामीति व्रतो नियमो मया आहितः धृतस्तस्मान्मत्परिग्रहं मत्कुटुम्बम् यतो मन्नाथं गोष्ठं व्रजं स्वात्मयोगेन गोपाये रक्षिष्यामि ॥

नियमस्तु ।

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं ममेति ॥

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यह-
मिति श्रीभगवदुक्तेः ॥

तस्माद् भगवद्भक्तानां कदा कुत्रापि कस्मादपि न पराभवो भवति ।

न कश्चिन्मत्परं लोके तेजसा यशसा श्रिया ।
विभूतिभिर्वाभिभवेद् देवोऽपि किमु पार्थिव
इति भगवदुक्तेः (१) ॥

एवं स्वपदप्राप्तियोग्यानां कनिष्ठमध्यमोत्तमाधिकारिणां स्वभक्तानां ताडनलालनाभ्यां स्वसुखं ददाति । अभक्तानां राजसतामसतपःपराणां तु धनमानदानाभ्यामधः पातयतीति ॥२३॥

---

(१) कश्चिदित्यादि श्लोकस्यार्थः ॥ कश्चिदकिञ्चनमपि मत्परं भक्तं लोके देवोऽपि दिव्यदेहोऽपि तेजसा यशसापि श्रिया च विभूतिभिः ऐश्वर्यसैन्यादिसामग्रीभिरप्यभिभवितुं न प्रभवतीत्यर्थः ॥

तस्माद् दुःखादिभोगेषु कृष्णानुग्रहसद्धिया ।
सर्वभूतानुकूल्येन राधिकावल्लभम्भजे ॥२४॥
यतः साधनश्रेष्ठानां फलानां च प्रियोत्तमम् ।
फलं श्रीभगवद्भक्तिर्नान्यदुक्तं महर्षिभिः ॥२५॥
अतो दारसुतापुत्राद्यासक्तिं सर्वदुःखदाम् ।
त्यक्त्वा श्रीवल्लभे भक्तिः कर्त्तव्या स्त्रीनरादिभिः २६

यतः शुभाशुभमपि मे हिताय भगवान्करोति तस्माद् दुःखादियोगे(क)ष्वपि कृष्णानुग्रहसद्धिया श्रीकृष्णेन मम हितविदा दुःखरूपेणानुग्रह एव मयि कृत इति सद्धिया भूतानुकूल्येन राधिकावल्लभमहं भजे ॥२४॥

यतः शमदमादिसाधनश्रेष्ठानां(ख) च प्रियोत्तमं फलं तु भगवद्भक्तिरेव महर्षिभिरुक्तम् । नान्यत् । पञ्चमपुरुषार्थत्वात् । भक्तिः सिद्धेर्गरीयसीति ।

तस्माज्ज्ञानेन सहितं ज्ञात्वा स्वात्मानमुद्धव ।
ज्ञानविज्ञानसंपन्नो भज मां भक्तिभावितः

इति श्रीभगवदुक्तेः ॥२५॥

एवं भक्त्यधिकारिण उत्तममध्यमकनिष्ठजीवान् स-

(क) व्या० पु० भोगे इति पा० ।
(ख) व्या० पु० ज्ञानमोक्षादीनां फलश्रेष्ठानाम् इत्यधि० वर्त्त० ।

नानारूपैर्यतो वेदा भजन्त्यव्ययमीश्वरम् ।
श्रीकृष्णं सर्वहेतुत्वात्सोऽतः सेव्यः सुरासुरैः॥२७॥

मुपदिश्य स्वकर्त्तव्यमपि प्रदर्श्य प्रकरणार्थमुपसंहरति द्वाभ्याम्। अत इति। अतो भक्तेः साधनफल(क)फलत्वात् स्त्रीनरादिभि. राधावल्लभे भक्तिः कर्त्तव्या। किं कृत्वा। दारसुतापुत्राद्या-सक्तिं त्यक्त्वा। यतः सर्वदुःखदाम्। दारादयो हेया एव। तत्त्यागाभावे सा तु त्याज्यैव ॥२६॥

यतः सर्वेषां गुरवो भगवद्वाङ्मयविग्रहा वेदा अपि स्वनानारूपैः श्रीकृष्णं परमेश्वरं भजन्ति। कुतः। तत्सर्वहेतुत्वात्। कृष्णो वै परमं दैवतम्। गोविन्दान्मृत्युर्बिभेति। तस्मादक्षरमेवाव्यक्तम्। तस्मादक्षरान्महन्महतोऽहङ्कारस्तस्मात्पञ्च तन्मात्राणीति श्रुत्या तस्य सर्वहेतुत्वं ब्रह्मचिद्घनानन्दैकरूपं पुरुषोत्तमरूपेण मथुरायां जन्याविर्भविष्यति। तत्र भवत्यः सर्वलोकोत्कृष्टसौन्दर्यक्रीडाभागो गोपिकास्वरूपैः परब्रह्मानन्दैकरूपं कृष्णं भजिष्यथ।

इति ब्रह्मवरं लब्ध्वा श्रुतयो ब्रह्मलोकगाः।
कृष्णमाराधयामासुर्गोकुले धर्मसंकुले।
श्रीकृष्णाख्यं परं ब्रह्म गोपिकाः श्रुतयोऽभवन्।
यो नन्दः परमानन्दो यशोदा मुक्तिगेहिनी।

(क) पा० पु० त्र० फल इत्यधि० वर्त्त०।

**एतत्सर्वं त्रिभिर्मानैर्ज्ञातव्यं सुमुमुक्षुभिः ।**
**प्रत्यक्षादिसुशब्दान्तैः प्रमाणैर्महात्मभिः॥२८॥**

देवकी ब्रह्मविद्या सा या देवैरुपगीयते ।
निगमो वासुदेवो यो वेदार्थः कृष्ण(क)रामयोः ।
स्तुवन्ति सततमिति । यष्टिरूपोऽभवद्विधिः । रुद्रो वंशः ।
अष्टावष्टसहस्रे द्वे शताधिकाः स्त्रियस्ततः ।
ऋचोपनिषदस्ता वै इति ।
कश्यपोलूखलस्तातो रज्जुर्मातादितिस्तथे-
त्यादिश्रुतिभ्यः ।

अतः स श्रीकृष्णः सुरासुरैरपि सेव्यः । ये तु मायोपाधि सगुणं ब्रह्मेत्युक्त्वा सर्ववेदसेव्यं परात्परं कृष्णमनादृत्य ब्रह्माहमस्मीति आग्रहवाक्येन निर्विशेषमनिर्वचनीयमुपासते ते वेदबाह्या अपि वेदविरोधिनो भवसिन्धुजलमीनास्तेषां मतं दूरतो विहाय वेदानुगामिभिः शमिच्छद्भिर्भक्त्या श्रीभगवानेव ध्येयः पूज्यः श्रोतव्यः स्मर्त्तव्यः सेव्य इत्यलं विस्तरेण ॥ २७ ॥

एतत्सर्वं मयोक्तं सिद्धान्तोत्तमशास्त्रं प्रत्यक्षानुमानशब्दैस्त्रिभिः प्रमाणैर्महात्मभिर्ज्ञातव्यम् । प्रमाणान्तराणान्तु तेष्वन्तर्भावात् । त्रीण्येव मुख्यानि । तत्रापि शाब्दं प्रधा-

(क) ब्रा० पु० पं कृष्ण इति पा० ।

सुसिद्धान्तोत्तमो यस्मान्मया लब्धो दयानिधेः।
तच्छ्रीभागवतं वन्दे सत्सेव्यन्निन्दितं खलैः २६॥

नम् । वेदयुक्ते ते द्वे अपि । त्रीण्येषां नेत्राणि शब्दलिङ्गाक्ष-भेदाद्रुद्रवदिति शाण्डिल्यसूत्रोक्तेः ॥

व्याप्येन व्यापकज्ञानं ह्यनुमानं तदुच्यते ।
प्रत्यक्षं शब्दमूलं यन्नेत्रस्पर्शादिगोचरम् ।

शब्दस्तु ब्रह्मणो वाक्याद्वेद एव न चेतरः ।
तन्मूला यदि चान्येऽपि प्रमाणेषु महन्मता
इति तल्लक्षणानि ॥२८॥

एवं सुसिद्धान्तोत्तमं विरच्येदानीं यस्मात्स लब्धस्तं गुरुं प्रणमति । सुसिद्धान्तोत्तम इति । यः पुरा नारदव्यासशुकब्रह्मादिभिः परमाधिकारिभिर्लब्धः सोऽयं सुसिद्धान्तोत्तमो यस्माद्दयासमुद्रान्मयाप्यनाधिकारिणापि लब्धः। तच्छ्रीभागवतं वन्दे । सर्वशास्त्रश्रेष्ठत्वरूपया श्रिया शोभमानं तच्छ्रीभागवतमित्यर्थः ॥

धर्मः प्रोज्झितकैतवोऽत्र परमो, निर्मत्सराणां सतां
वेद्यं वास्तवमत्र वस्तु शिवदं तापत्रयोन्मूलनम् ।
श्रीमद्भागवते महामुनिकृते किंवा परैरीश्वरः

यथो हृद्यवरुध्यतेऽत्र कृतिभिः शुश्रूषुभिस्तत्क्षणा-
दित्यनादिवाक्यात् (१) ॥

(१) धर्म इत्यादि पद्यस्यार्थः ॥ अत्र श्रीमति शास्त्रसुन्दरे भागवते परमो धर्मो निरूप्यते मयेति । अयमभावः । अन्यस्मिञ्छास्त्रे तु केवलं धर्मो निरूपितः ।

तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगा

इत्यन्तेनोक्तेः ।सोऽपि सकपटोऽपि असतां समत्सराणाम् । अत्र निर्मत्सराणां परोत्कर्षप्रियाणां सतां परोपकारिणाम् । तत्परत्वे हेतुः । प्रोज्झितकैतवः उज्झितं त्यक्तं फलाभिसन्धिलक्षणं कैतवं कपटं यस्मात् । प्रशब्देन मोक्षाभिसन्धिरपि निरस्तः । सालोक्यादिचतुष्टयं नेच्छन्ति सेवया पूर्णा इत्यादिना केवलं भगवदाराधनलक्षणो भागवती धर्मस्तस्मात्परम इत्यनेन कर्मकाण्डेभ्यो भागवतस्य श्रेष्ठत्वमुक्तं तेन धर्मेण । वास्तवं वस्तु परमार्थभूतं वस्तु अत्रैव वेद्यं वदितुं योग्यम् । नान्यत्रेत्यर्थः । यद्वा । वास्तवं वेद्यम् । वस्तुनोंऽशो जीवः स्वस्वरूपापरिणामित्वेन स्वभावपरिणामी वास्तवम् । वस्तुनो भगवतः शक्तिर्माया स्वरूपस्वभावपरिणामिनी वास्तवी । तदुभयात्मकं विश्वं वास्तवम् । कीदृशं वास्तवम्(क) । वस्तु वस्तुनोऽभिन्नशरीरमित्यर्थः ।

(क) अ० पु० ...वा० पु० च वास्तवम् इति पा० ।

वस्तुतो जानतामत्र कृष्णं स्यात्तु चरिष्णु च ।
भगवद्रूपमखिलं नान्यदस्तीह किंचनेति शुकोक्तेः ॥

अवतु तु भगवांश्चैतन्यविग्रहः सदैकरसः स्वरू-पस्वभावापरिणामीत्येवन्तत्त्रयं वेद्यम् । कीदृशम् । तापत्रयोन्मूलनम् आध्यात्मिकादीनाम् तापत्रयाणामाशकम् । यतः शिवदं भक्तिसुखदमित्यनेन ज्ञानकाण्डेभ्यस्तच्छ्रेष्ठत्वम् । कीदृशे भागवते । महामुनिकृते महामुनिर्नारायणस्तेन कृते इत्यनेन कर्तृतोऽपि तच्छ्रैष्ठ्यम् । तेन वेद्येनोपासनया अत्रैवेश्वरो हृद्यवरुध्यते । किंवा परैः शास्त्रैस्तत्साधनैश्च ईश्वरः सद्यस्तस्मिन्नवरुध्यते । न कदापि । कथंचिद्विलम्बेन । अत्र तु शुश्रूषुभिरपि तत्क्षणात् ।

धनुर्गृहीत्वौ(क)पनिषदं महास्त्रं
शरं ह्युपासानिशितं संधयीत ।
आयम्य तद् भागवतेन चेतसा
लक्ष्यं तदेवाक्षरं सौम्य विद्धीति(ख) श्रुत्या ।

भागवतशब्देन भागवतं पुराणमेवोक्तम् । उपासनासाहचर्यात् ।

(क) ब्या० पु० स्त्री इति पा० ।
(ख) सौम्य विद्धीति पा० ।

निगमकल्पतरोर्गलितं फलं शुकमुखादमृतद्रवसंयुतम् ।
पिबत भागवतं रसमालयम्मुहुरहो रसिका भुवि भावुका

इत्युक्तेः ॥ (१) ॥

यस्यां वै श्रूयमाणायां कृष्णे परमपूरुषे ।
भक्तिरुत्पद्यते पुंसां शोकमोहभयापहे-

त्युपासनाफलत्वात् । ननु तर्हि कथं तच्छ्रवणं श्रूयते । तत्राह । कृतिभिरिति । श्रीभागवतश्रवणेच्छा तु पुण्यैर्विना न संभवतीति भावः । अत्रेश्वरः सद्यो हृद्यवरुध्यत इत्यनेन उपासनाकाण्डेभ्यस्तस्य श्रेष्ठत्वम् । कर्मकाण्डादीनां क्रमोत्तमोऽप्यत्रैव यथोक्तप्रकारेण ज्ञेयः । अन्यत्र तु व्यतिक्रम एव । अत्र शब्दस्य त्रिरावृत्तिस्तु निश्चयात्मिकैव । यद्वा । प्रकरणभेदात् । कथंभूतो धर्मः । अत्रपरमः अत्रपरा वैष्णवा रमन्ते यस्मिन्नित्यत्रपरम इत्याद्यर्थकल्पना त्वत्रप्रियैव । धर्म इत्यनेन श्लोकेन अधिकारिविषयसम्बन्धप्रयोजनान्यप्युक्तानि भवन्ति । निर्मत्सराः सन्तो भागवता अधिकारिणः । श्रीभगवानेव विषयः । वाच्यवाचकभावः संबन्धः । भगवदुपासना प्रयोजनम् । इत्यतो भागवतं श्रोतव्यं सेवनीयं पठनीयं च ॥

(१) निगमकल्पतरोरित्यादि पद्यस्यार्थः ॥
न केवलमेतस्य सर्वशास्त्रश्रेष्ठत्वात्फलत्वं विधीयते

अपि तु सर्वशास्त्रफलरूपमपीदमेवातः परमादरेण सेव्यमित्याशयेनाह । हे रसिकाः रसो वै स इति श्रुत्या प्रतिपादिते रसे श्रीकृष्णे रुचिर्येषां ते रसिका भगवद्भक्ताः । तत्रापि भावुकाः शृङ्गाररसचतुरा मङ्गलायना यूयं भागवतं फलं पिबत । कस्येति शङ्कायामाह । निगमकल्पतरोः निगमो वेदः स एव कल्पतरुः । सर्वकामप्रदत्वात् । तस्येदं फलमप्येकमेव ।

यः स्वानुभावमखिलश्रुतिसारमेक-

मध्यात्मदीपमतितितीर्षतां तमोऽन्धम् ।

संसारिणां करुणयाह पुराणगुह्यं

तं व्याससूनुमुपयामि गुरुं मुनीना-

मिति सूतोक्तेः ॥

अतो वेदादपि श्रेष्ठम् । तदर्थभूतत्वात् ॥

वेदोपनिषदां सारा जाता भागवती कथा ।

अत्युत्तमा ततो भाति पृथग्भूता फलाकृतिः ।

आमूलाग्रं रसस्तिष्ठन्नास्ते न स्वदते यथा ।

संभूय स पृथग्भूय फले विश्वमनोहरः

इति भागवतमाहात्म्ये सनत्कुमारोक्तेः ॥

कल्पतरोः फलमित्युक्ते स्वमनःप्रयत्नैकानां स्वरसभोक्तॄणां कुत्रिमजनकमित्युक्तं भवति । तस्मात्सारं सारं पिबत । व्ययाभावात् । कीदृशम् । शुकमुखात्

भुवि गलितम्। अहो अति अलभ्यलाभोक्तिः। वैकुण्ठाद्
ब्रह्मनारदव्यासशुकादिपारम्पर्येणात्र प्राप्तेः। पुनः की-
दृशम्। रसं भक्तिरसरूपम्। भक्तिरस एव फलाकारो
जातः। तद्धेयांशशून्यमित्यर्थः॥ यथा सिता फलाका-
रा। भक्तेः रसत्वं तु शास्त्रप्रसिद्धम्।

द्वेषप्रतिपक्षभावाद्रसशब्दाच्च राग इति।

सा परानुरक्तिरीश्वर इति शाण्डिल्यसूत्रोक्तेः॥

अनयोः सूत्रयोरर्थः॥ द्वेषविरुद्धत्वाद्रसशब्देन
श्रुतौ प्रतिपाद्यत्वाद्राग एव रसः। या परानुरक्तिरी-
श्वरे सा परा भक्तिः। अनुरक्तिरनुरागः पर्यायभेदः।
तस्माद्भक्ती रसरूपेत्यर्थः॥

फलं रसमिति द्रव्यगुणयोः सामानाधिकरण्यं गुण-
गुणिनोरेकरूपत्वेन भेदाभावात्। यतः फलमित्युक्ते पाना-
सम्भवः रसमित्युक्ते गलितस्य पातुमशक्यत्वम् अतः फलं
रसमित्युक्तम्। ननु तर्हि त्रिदेहमोक्षाधिकारिभिर्हेयं
भक्तिरसत्वादिति चेत्तत्राह। अमृतद्रवसंयुतम् अमृतं
मोक्षः स एव द्रवस्तद्युक्तमित्यर्थः। अतो मोक्षेऽपि न
त्याज्यम्। यतः आलयं मोक्षमभिव्याप्य वर्तते। भाग-
वतधर्मरूपत्वात्। यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्म-
वादिनश्चेति श्रुतेः।

आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिरिति सूतोक्तेः॥

तत् किं भागवतम् । यत्सत्सेव्यं सद्भिर्नारदादिभिः श्रवणमननपठनमाहात्म्यवर्णनादिभिः सेव्यम् ।

अर्थोऽयं ब्रह्मसूत्राणां भारतार्थविनिर्णयः ।
गायत्रीभाष्यरूपोऽसौ वेदार्थः परिबृंहितः ।

द्वादशस्कन्धयुक्तोऽयं शतविच्छेदसंयुतः ।
ग्रन्थोऽष्टादशसाहस्रः श्रीमद्भागवताभिध

इति गारुडोक्तेः ॥

अम्बरीष शुकप्रोक्तं नित्यं भागवतं शृणु ।
पठस्व स्वमुखेनापि यदीच्छसि भवक्षयमिति

पाद्मेऽम्बरीषं प्रति गौतमः ॥

यत्राधिकृत्य गायत्रीं वर्ण्यते धर्मविस्तरः ।
वृत्रासुरवधोपेतं तद् भागवतमिष्यते ।
लिखित्वा तच्च यो दद्याद्धेमसिंहसमन्वितम् ।
प्रौष्ठपद्यां पौर्णमास्यां स याति वैष्णवं पदमिति

मत्स्यपुराणे (पुराण)दानप्रस्तावे ॥

पुराणान्तरेऽपि ।

ग्रन्थोऽष्टादशसाहस्रो द्वादशस्कन्धसंमितः ।
हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा ।
गायत्र्या च समारम्भस्तद्वै भागवतं विदुरिति ॥
रात्रौ तु जागरः कार्यः श्रोतव्या वैष्णवी कथा ।

गीता नामसहस्रं च पुराणं शुकभाषितमिति

पाद्मे वञ्जुलीमाहात्म्ये ॥

श्रीमद्भागवतं भक्त्या पठन्ति हरिसन्निधौ ।

जागरे तत्पदं यान्ति कुलवृन्दसमन्विता

इति प्रह्लादसंहितायां द्वारकामाहात्म्ये ॥

शतशोऽथ सहस्रैश्च किमन्यैः शास्त्रसंग्रहैः ।

न यस्य तिष्ठति गेहे शास्त्रं भागवतं कलाविति (१)

पाद्मे ब्रह्माणं प्रति नारायणः ॥

एवं पाठोपदेशाभ्यां सेवितम् । पुनस्तत्किम् । यत्तव-लैर्निन्दितं भागवतमिदं कल्पितमिति वाक्यैः । कल्पितश्लो-कपाठेन च विमुखा निन्दन्ति । ते मन्दा विमुखाः मष्टव्या भागवतैः । अष्टादशपुराणेषु श्रीमद्भागवतं श्रेष्ठत्वेन ग-णितं प्रयागमाहात्म्ये पुराणनृपत्वेन कथितम् । तथा पुरा-णानि षट् तामसानि षड्राजसानि षट् सात्त्विकानि निरूपि-तानि। तेषु सात्त्विकोत्तमत्वेन निरूपितं तद् भागवतं सप्तदश-पुराणानां विद्यमाने कुत्र गतम् । तस्योत्तराभावेन केवलं

(१) अर्थोऽयमित्याद्यारभ्य कलाविरयन्तश्लोक-समूहस्य कतिपयविपमपदव्याख्या ॥ शतविच्छेदसंयुत इति शतप्रकरणसंयुत इत्यर्थः । यथा त्रिभिरध्यायैर्वत्स-हरणप्रकरणमित्येवं प्रकरणानि ज्ञातव्यानि । हयग्रीव-ब्रह्मविद्येति नारायणकवचरूपा । अन्यत्स्पष्टम् ॥

यः पठेच्छास्त्रसिद्धान्तमिमं वा शृणुयान्नरः ।
सोऽचिरात्सर्वपूर्णार्थो भगवद्भक्तिमान्भवेत्॥३०॥
शास्त्राणां परमं शास्त्रं फलानाञ्च फलोत्तमम् ।
सेवनीयमिदं शास्त्रं तस्मात् सर्वत्र सर्वदा॥३१॥

निन्दन्ति । पापमवाप्नुयात् । अतस्तेषां भागवतविमुखानां सङ्गं त्यक्त्वा कृष्णप्राप्तये श्रीमद्भागवतं सेव्यम् ।

अस्मिन्सिद्धान्तवर्ये हि श्रीकृष्णः परमेश्वरः ।
सेव्यः सेव्यो हि सेव्यः स भक्त्येत्युक्तं पुनः पुनः ।
यदभ्यासाय तद्धि वै(क) पुनरुक्तिर्न वा कदा ॥

यतः कृष्णोऽनुरत्या परिसेव्य इत्युपक्रमः । वेदा अपि श्रीकृष्णं भजन्त्यतः सुरासुरैः स सेव्य इत्युपसंहारः। भक्त्या भगवान्सेव्य इत्येवं सप्तदशकृत्वोऽभ्यासः । अन्तर्यामिणि भगवति सन्निहितेऽपि तमनादृत्य बद्धा भवन्तीत्यपूर्वता । भक्त्या स भगवाँल्लभ्य इति फलम्। ब्रह्मेन्द्राग्न्यादयो देवा वेदैर्नारागणदृष्ट्या परत्वेनानुवर्णिता इत्यर्थवाद इत्येवं षड्विधलिङ्गैर्भगवान् प्रतिपादितः ॥२९॥

एवं सुसिद्धान्तोत्तमशास्त्रं प्रकर्ष्य तस्य श्रवणपठनादीनाम्फलमाह त्रिभिः यः पठेदित्यादिभिः ॥ स भगवद्भक्तिमान्भवेदित्युक्तेनैव परमफलमुक्तं भवति ।

(क) आ० पु० म०॥ तद्धिद्धि इति पा० ।

नित्यपाठेऽस्य शास्त्रस्य प्राप्तिः स्यादचिरात्खलु।
भक्तिज्ञानविरागाणां कर्त्तव्यो ह्यत आशु सः॥३२॥

सोऽयं सिद्धान्तवर्यो हि प्रियादासविनिर्मितः।
शुभानीश्वरभक्तानां वितनोत्वक्षयाणि च ॥३३॥

एतस्मादुत्तमाच्छास्त्राज्जातं ग्रन्थचतुष्टयम्।
तत्त्वनिश्चयवेदान्तसारभक्तिप्रभादिकम्(क)३४॥

मयि संजायते भक्तिः कोऽन्योऽर्थोऽस्यावशिष्यते।
सर्वम्मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा।
स्वर्गापवर्गम्मद्धाम कथञ्चिद्यदि वाञ्छति

इति भगवदुक्तेः।

अन्यत्स्पष्टम् ॥३०॥ ॥३१॥ ॥३२॥ ॥३३॥ ॥३४॥

(क) स्वरचितवेदान्तसारटीकायामयमेव प्रियादासाचार्यः "समाकारि समाप्तिं समासेन सताम्प्रियम्। इदं वेदान्तसारं वै स्वङ्गाष्टभेन्दुवत्सरे ॥१८६४॥ स्वकृतश्रुतितात्पर्यामृतटीकायां च 'हरिवत्सस्य देवस्य समीपे मङ्गलप्रदे। व्योमाष्टवसुभेन्दु, १८७० संख्याख्ये वत्सरे मासि कार्त्तिके। शुक्लाष्टमीकादश्यांयुक्ते सोमस सततां मुदे। श्रीआचार्यः श्रीप्रियादासो निर्ममे ग्रन्थमुत्तमम्' इति लिखन्ति। रेवाराजभट्टविश्वनाथसिंहदेवानां सभासदासीदिति च श्रूयते॥

इति श्रीसुसिद्धान्तोत्तमे प्रियादासाचार्यविनिर्मिते परमानन्दप्राप्तिकारणवर्णनो नाम पञ्चमो विश्रामः ॥ ५ ॥

श्रीकृष्णाय नमः ॥

इति श्रीसुसिद्धान्तोत्तमे अनुत्तमायां प्रियादासाचार्यविरचितायां टीकायां परमानन्दप्राप्तिकारणवर्णनो नाम पञ्चमो विश्रामः(क) ॥५॥

श्रीगोपीजनवल्लभाय नमः । श्रीहरये परमात्मने नमः ।
श्रीराधायै तद्वल्लभाय च नमः । श्रीकृष्णः शरणम्मम ॥

— —

(क) आदर्शपुस्तकान्तर मालवीयश्रीव्रजनाथचतुर्वेदिरहस्यसारम्। आदर्शपुस्तकं तु उदारकृपालुश्रीगोस्वामिप्रियतमलालजीपुस्तकात् तदनुमत्या सरयूप्रसादमिश्रेण लिखितम्। क्वचित् क्वचिद्यः कश्चन भेद उपलभ्यते स लेखकेनैव साधुदृष्ट्या कृत इति ज्ञेयम् । मुद्रापणानुमतिरपि तत्कान श्रीगोस्वामिना दत्ता । चतुर्वेदी श्रीमदनमोहनमालवीयः प्रथममिममनुत्तमं ग्रन्थं स्वपितुः श्रीव्रजनाथचतुर्वेदिनः सकाशात्सरयूप्रसादमिश्राय कृपया वात्सल्येन च पठितुमलम्भयत् ॥

# अशुद्धिसंशोधनम्

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| ज्येऽपि | ज्योऽपि | ५ | ९ |
| स्पर्श (ख) | अन्तः स्पर्श | १० | १३ |
| स्तपत्वा | स्तप्त्वा तप्त्वा | १४ | ३ |
| यावधि (क) | अयाबाधित | १६ | ८ |
| - | ० | १९ | २ |
| | ३८ पृष्ठस्य ३ पङ्क्तिः पठितव्या | ३७ | ११ (पङ्क्तिः) |
| (१) | (२) | ४० | १३ |
| (१) | (२) | ४० | १७ |
| (१) | (२) | ४३ | ९ |
| (१) | (२) | ४३ | १६ |
| अना | अनी | ४८ | ८ |
| ॥१॥ | (१) | ४८ | ११ |
| (१) | (३) | ५० | ८ |
| (१) | (३) | ५० | १८ |
| (२) | (१) | ५१ | २ |
| (५) | (२) | ५१ | ४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| ( २ ) | ( १ ) | ५१ | ८ |
| ( ३ ) | ( २ ) | ५१ | १४ |
| रैन्य | रन्यै | ५४ | २ |
| वांव | वां | ५५ | ६ |
| ( १ ) | ( २ ) | ५५ | १२ |
| ( १ ) | ( २ ) | ५५ | १७ |
| ( २ ) | ( १ ) | ५६ | १२ |
| हमः | हनः | ५६ | १५ |
| - | ० | ६१ | ६ |
| मगवद् | भगवद् | ६९ | १४ |
| तोऽवि | तोऽव्य | ७१ | ६ |
| ब्रूपा | द्रूपा | ७४ | १५ |
| याह | यानुह | ७५ | ८ |
| लोः | लो | ७५ | ९ |
| ( २ ) | ( १ ) | ७७ | ३ |
| ( २ ) | ( १ ) | ७७ | १५ |
| दवं | देवं | ७८ | ४ |
| न्दामा | न्दाभा | ७९ | १७ |
| (१) | (२) | ८२ | ५ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| (१) | (२) | ८२ | १८ |
| माक् | भार्क् | ८४ | ५ |
| (२) | (१) | ८५ | ५ |
| (२) | (१) | ८५ | १० |
| (१) | (२) | ८६ | ९ |
| ब- | संब- | ९१ | १० |
| क्तः | क्तोः | ९४ | २० |
| (घ) | (क) | ९६ | २० |
| (ङ) | (ख) | ९६ | २० |
| भावा | भवा | ९८ | १८ |
| ब्रह्म | यथा ब्रह्म | १०७ | १२ |
| अन्यं न | अन्यन्न | ११८ | १६ |
| त्तांम् सन्मु | त्तांम् । सन्मु | ११९ | १३ |
| वत | वृत | १३७ | ३ |
| र्निंतरां | निरन्तरं | १४२ | १४ |
| मद्र | मद्रू | १४३ | ६ |
| बिदुः | विदुः | १४३ | १४ |
| वदम् | वेदम् | १४९ | १ |
| पुमा | पुम | १५० | १० |
| म | मं | १५० | ११ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| ( २ ) | ( १ ) | १५२ | १८ |
| दान्तु | दागन्तु | १५४ | ४ |
| मुव | भुव | १६० | ११ |
| त, राय | तपुएय | १६८ | ४ |
| थ। | थ | १८४ | ६ |
| ङ्गानि | ङ्गानि। | १८४ | ७ |
| र्थाग्रहणानि (क) | र्थग्रहणानिच्छा | १८८ | ४ |
| तम | त्तम | १९८ | २ |
| द्रूपा | द्रूप | २०२ | १० |
| वणे | वर्णां | २०४ | १३ |
| ( क ) | भगवान् पुरुषः। किं शुद्धजीवः। नेत्याह। | २०६ | ५ |
| (१) | (२) | २०७ | ६ |
| मव | मवे | २०७ | १६ |
| (१) | (२) | २०७ | २० |
| प्रे | श्रे | २१४ | १५ |
| ग्मि: | ग्भिः | २१५ | २० |
| यङ्क | ङ्क | २१६ | २ |
| तं | त- | २१६ | २ |
| षिता ( क ) | षणा | २१७ | ५ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| (२) | (१) | २१७ | १४ |
| म | सू | २२१ | ५ |
| ह्नि | हि | २२२ | ४ |
| (१) | (२) | २२३ | ७ |
| (१) | (२) | २२३ | १७ |
| मग | भग | २२३ | १८ |
| ष्याः | ष्याः स्वावने | २२४ | १८ |
| श्रा | श्रा | २२५ | १३ |
| खोपेतः (क) | खोऽतः | २२५ | २० |
| अमृतम् (क) | अद्वयम् | २२६ | १९ |
| म | म | २२९ | ११ |
| तस्य | तस्यै | २३० | २० |
| वत्मक्रीडायां | ० | २३१ | ९ |
| । | ० | २३२ | १ |
| स्वात् | वत् | २३२ | १२ |
| त्रिव | त्रिव | २३४ | २१ |
| (१) | (२) | २३७ | १८ |
| पी | पा | २३९ | २ |
| नो | नो विग्रहो | २४० | १५ |
| त्र | त्रस्य | २४९ | ४ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| रोऽबा | रो बा | २५० | २० |
| वाप्य | व्याप्य | २५६ | ४ |
| स्वात | स्वात् | २५६ | १६ |
| (२) | (१) | २६ | १८ |
| ता | ताव | २६३ | १७ |
| माय | माया | २६६ | १ |
| ऱ्वा | च | २६७ | २ |
| प्य | प्या | २७४ | २ |
| एव | एवं | २७६ | १२ |
| य | या | २८५ | ८ |
| जम्म | जन्म | २९८ | १० |
| कर्माणि | करणानि | २९९ | १० |
| हस्य | हस्प | ३०० | १४ |
| यं | यं तत् | ३०१ | १७ |
| परस्य (क) | परस्पर | ३०२ | १३ |
| द | ट | ३०३ | १७ |
| स्यो | स्यो | ३०६ | ७ |
| घते | घते | ३०७ | ११ |
| शस्य | शस्य पारमनिर्गुणस्य | ३११ | १६ |
| ग्रकला: (क) | ० | ३१२ | १९ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| (४) | (१) | ३२२ | २ |
| पञ्चम | (१०) भूमेरित्यादि | ३२२ | ९ |
| जा | जाम | ३२८ | ३ |
| तु | स्तु | ३३४ | ११ |
| सैव | सैव परा | ३३५ | १४ |
| चैन्मे | चेन्मै | ३३६ | ११ |
| मुक्तं | मुक्तं (क) | ३३८ | ६ |
| (क) | (ख) | ३३८ | १७ |
| (ख) | (ग) | ३३८ | १८ |
| पो | धो | ३४३ | १७ |
| ने | नेन | ३४७ | ३ |
| रूपस्य भावं | रूपे भवं | ३४८ | १५ |
| वं | व | ३६१ | १५ |
| स्र | स्त्र | ३६९ | ३ |
| तं | तै | ३७३ | २ |
| स्य | स्यस्य | ३७८ | १२ |
| रय | रयस्य | ३८१ | १० |
| नाम्मु | नाम्मु | ३९० | २० |
| अल्प | अल्प (क) | ३९९ | २० |
| ष्या | ष्या | ४०३ | १६ |

| अशुद्धम् | शुद्धम् | पृष्टे | पङ्क्तौ |
|---|---|---|---|
| (क) | ० | ४०८ | २ |
| तम | तमोऽतम | ४१० | ३ |
| क्षा | क्ष | ४२२ | १ |
| (१) | (२) | ४६१ | ६ |
| (१) | (२) | ४६१ | ११ |
| र्व | र्बं | ४६८ | ६ |
| ष | ष | ४७१ | ८ |
| । | । तत् | ४८२ | १८ |
| नेत | नेन | ४८४ | ९ |
| (१) | (२) | ४९५ | १३ |
| (१) | (२) | ४९५ | १९ |
| (१) | (२) | ४९६ | ६ |
| ते | तं | ४९७ | १४ |
| क्त | क्ता | ४९८ | ८ |
| हार | हरि | ४९९ | ४ |
| न्य | न्य | ५०० | १३ |
| भागो | भोगा | ५०४ | १५ |
| वासु | वसु | ५०५ | ४ |
| माधि | मधि | ५०६ | १३ |
| ॥ (३) | (१) | ५०९ | ३ |
| मि | मि | ५०९ | १६ |
| रू | रूप | ५११ | १३ |

# पुष्पिकासंशोधनम् ।

(क) इत्यादिसंकेतेन संकेतितांश ऊह्यः ।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| (ख) | ० | ८ | |
| (ख) | ० | १० | |
| (क) | ० | १६ | |
| सू | सु | ५६ | १ |
| र्भ | र्म | ५८ | ७ |
| मारूप | सरूप | ७२ | १ |
| न्मु | न्म | १०२ | १ |
| ङ्गै | ङ्गि | १०९ | १ |
| (घ) | (ठ) | १०९ | ८ |
| ङ्ग | ङ्ग | ११० | २ |
| श्र | श्रे | ११९ | १ |
| यो | प्रयो | ११९ | २ |
| स्मृ | स्मि | १२० | १ |
| र्तम | र्तन | १३१ | २ |
| पा० | ना० | १७६ | १ |
| (ख) | ० | १८८ | १ |
| (क) | ० | २०६ | |
| (ग) | ० | २१० | |
| (क) | ० | २१७ | |

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्ती |
|---|---|---|---|
| (क) | ० | २२५ | |
| (क) | ० | २२६ | |
| म्पू | म्पू | २२९ | ३ |
| योत्य | योत्थ | २६३ | १ |
| कार्द्धुम्ना० | कपार्दौ ना० | २८३ | २ |
| (च)-(छ) | (ग)-(घ) | २९२ | २ |
| (क) | ० | ३०२ | |
| घा | धा | ३०६ | २ |
| (क) | ० | ३१२ | |
| | (क)मुक्त्यै इति पा० | ३३८ | ८ |
| (क) | (ख) | ३३८ | |
| (क) | (ग) | ३३८ | २ |
| (क) | ० | ३४८ | |
| सेवक्क | सेवक | ३६२ | १ |
| दे | दै | ३६५ | १ |
| (क) स्वरूप इति गीतायाम्पाठः। | | ३९९ | ० |
| (क) | ० | ४०८ | १ |
| स्यो | च्यो | ४४२ | १ |
| ऽन्याम् | न्याम् | ४५५ | १ |
| (क)-(ख) | (ख)-(क) | ४६८ | १-२ |

सर्वाधस्तात् सूक्ष्माक्षरपुष्पिकासंज्ञिकांशेपु गो-
स्वामिपुस्तके आदर्शपुस्तकान्तरवत् पाठाः ॥

| | पृष्ठेपु | (क) | |
|---|---|---|---|
| ४ | ६१ | १०४ | ३३८ |
| ८ | ६५ | ११५ | ३७८ |
| १२ | ६६ | १२३ | ३८८ |
| १३ | ८० | १३१ | ४०६ |
| १५ | ८४ | १३५ | ४३३ |
| २५ | ९५ | २१८ | ४३७ |
| ३९ | ९६ | २४६ | ४५२ |
| ४२ | ९७ | २६३ | ४५४ |
| ६० | ९८ | ३२२ | ४७८ |

आदर्शपुस्तकवत् पाठाः ॥

| | पृष्ठेपु | (क) | |
|---|---|---|---|
| १४ | ७८ | ११५ | २०१ |
| ४८ | ७९ | ११६ | ३१८ |
| ६२ | ८६ | १२५ | ४२० |
| ६३ | ९० | १२७ | ४२१ |
| ६४ | ९३ | १२८ | ४४७ |
| ६७ | ९४ | १३६ | ४४८ |
| ६८ | ९८ | १९१ | ४६३ |
| ६९ | १०६ | २११ | ४८७ |
| ७० | ११० | २२७ | ५०८ |
| ७२ | १११ | २५१ | |
| ७५ | ११४ | २५८ | |

## आदर्शपुस्तकान्तरवत् पाठाः ॥

पृष्ठेषु (ख)

| | | | |
|---|---|---|---|
| ४ | ७१ | ११८ | ४१८ |
| १२ | ७३ | १२५ | ४२१ |
| १३ | ७९ | १२८ | ४३३ |
| १८ | ८० | १३५ | ४४१ |
| २० | ८४ | १९२ | ४४७ |
| ४२ | ८६ | २११ | ४४८ |
| ५८ | ९० | २२७ | ४५४ |
| ६१ | ९५ | २५१ | ४६३ |
| ६६ | ९८ | २५८ | ४८७ |
| ६८ | ९९ | ३१८ | |
| ७० | १०६ | ४०८ | |

## आदर्शपुस्तकवत् पाठाः ॥

पृष्ठेषु (ख)

| | | | |
|---|---|---|---|
| २ | ६९ | ११५ | ३७८ |
| १४ | ७३ | १२३ | ३८८ |
| ३९ | ७८ | १२७ | ४०६ |
| ६० | ९३ | १३१ | ४३४ |
| ६२ | ९४ | १३६ | ४३७ |
| ६३ | ९६ | २१८ | ४५२ |
| ६४ | ९७ | २४६ | ४५५ |
| ६५ | १०४ | ३२२ | ४७८ |
| ६७ | ११० | ३३८ | |

आदर्शपुस्तकान्तरवत् पाठाः ॥

पृष्ठेषु (ग)

| | | | |
|---|---|---|---|
| ३४ | ७८ | ११४ | ४२१ |
| ३८ | ९३ | १२७ | ४४० |
| ३९ | ९४ | १२८ | ४५४ |
| ६० | ९९ | १३१ | ४५५ |
| ६६ | १०४ | १३५ | |

आदर्शपुस्तकवत् पाठाः ॥

पृष्ठेषु (ग)

| | | | |
|---|---|---|---|
| ६१ | ६८ | ९० | १२३ |
| ६२ | ६९ | १०६ | १२५ |
| ६३ | ७० | ११० | ४२० |
| ६४ | ७१ | १११ | ४३३ |
| ६५ | ८४ | ११५ | |
| ६७ | ८६ | ११८ | |

आदर्शपुस्तकान्तरवत् पाठाः ॥

पृष्ठेषु (घ)

| | | | |
|---|---|---|---|
| ११ | ६९ | ११० | १३१ |
| ६५ | ८४ | १११ | |

आदर्शपुस्तकवत् पाठाः ॥

पृष्ठेषु (घ)

| | | | |
|---|---|---|---|
| ६० | ६३ | ६६ | ६८ |
| ६१ | ६४ | ६७ | ७१ |

| | | | |
|---|---|---|---|
| ७८ | ९९ | १२५ | ४५४ |
| ८६ | १०४ | १२८ | ४५५ |
| ९० | ११५ | १३५ | |

आदर्शपुस्तकान्तरवत् पाठाः ॥

पृष्ठेषु (ङ)

| | | | |
|---|---|---|---|
| ६४ | ८४ | ११० | १२५ |
| ६५ | ९० | १११ | १३१ |
| ६७ | ९९ | ११५ | १३५ |

आदर्शपुस्तकवत् पाठाः ॥

पृष्ठेषु (ङ)

| | | |
|---|---|---|
| ६० | ६६ | ७८ |
| ६१ | ६८ | १०४ |
| ६३ | ६९ | १२५ |

आदर्शपुस्तकान्तवत् पाठाः ॥

पृष्ठेषु (च)

| | | | | |
|---|---|---|---|---|
| १४ | ६३ | ६६ | ७८ | ११५ |
| १८ | ६४ | ६९ | ११० | |

आदर्शपुस्तकवत् पाठाः ॥

पृष्ठेषु (च)

| | | |
|---|---|---|
| २८ | ६७ | १३५ |
| ६५ | ९० | |

आदर्शपुस्तकान्तरवत् पाठाः ॥

पृष्ठेषु (क)

११०

आदर्शपुस्तकवत् पाठाः ॥

पृष्ठेषु (ख)

६३ ६४ ६६ ७८ १३५

आदर्शपुस्तकान्तरवत् पाठाः ॥

पृष्ठेषु (ग)

११०

आदर्शपुस्तकवत् पाठाः ॥

पृष्ठेषु (ग)

६६

---

आदर्शपुस्तकान्तरवत् पाठाः ॥

पृष्ठेषु कार्त्स्न्येन

५२(ग)परित्यज्य आ० पु० ७७
५३ १०१
५४ १०२
५६ १०७
५७ १०८
५९ १०९

| | |
|---|---|
| ११३ | २३५ |
| ११७ | २३६ |
| ११९ | २४१ |
| १२१ | २४३ |
| १२९ | २४७ |
| १३२ | २४९ |
| १३४ (च) परि० आ० पु० | २५६ |
| १३७ (ग) परि० आ० पु० | २६८ |
| १३८ (ग) परि० आ० पु० | २६९ |
| १३९ (ख) परि० आ० पु० | २७६ |
| १४१ (ग) परि० आ० पु० | २७९ |
| १५३ (क) परि० आ० पु० | २८० |
| १५५ | २८३ |
| १५६ | २८४ (ख) परि० आ० पु० |
| १५८ | २८५ |
| १६३ | २९२ |
| १६७ | २९७ (ख) परि० आ० पु० |
| १६८ | ३०० |
| १७८ (क) परि० आ० पु० | ३०२ |
| १८३ | ३०३ |
| १९७ (क) परि० आ० पु० | ३१२ |
| २१० | ३१३ |
| २१३ | ३१५ |
| २२२ (ग) (घ) प्रति० आ० पु० | ३१६ |
| २२८ | ३२६ |

| | |
|---|---|
| ३२७ | ४१४ |
| ३२८ | ४१७ |
| ३२९ | ४३५ |
| ३३१ | ४४२ |
| | ४४४ |
| ३३५ (क) परि० आ० पु० | ४५३ |
| ३३७ | ४५७ (घ) परि० आ० पु० |
| ३४३ | ४५९ |
| ३४५ | ४६८ |
| ३५२ (क) परि० आ० पु० | ४६९ (ख) परि० आ० पु० |
| ३५५ | ४७१ |
| ३६४ | ४७४ (ग) परि० आ० पु० |
| ३६५ | ४८० |
| ३६७ | ४८१ |
| ३७६ | ४८४ |
| ३८३ | ४८६ |
| ३९२ | ४९१ |
| ३९३ | ४९२ |
| ३९७ | ४९३ |
| ३९८ | ५०७ |
| ४०० | ५१४ |

## आदर्शपुस्तकवत् पाठाः ।

| पृष्ठेषु | कात्स्न्येन |
| --- | --- |
| ७२ | १४५ |
| ७४ | १४८ |
| ८१ | १४९ |
| ८२ | १५१० |
| ८३ | १५२ |
| ८५ | १५४ |
| ८७ | १५९ |
| ८८ | १६० (क) परि० आ० पु० न्त० |
| ८९ | १६१ |
| ९१ | १६४ |
| ९२ | १६६ |
| १०० | १७१ |
| १०३ | १७२ |
| ११२ | १७३ |
| १२० | १७४ |
| १२२ | १७६ |
| १२६ | १७७ |
| १३० | १८१ |
| १३३ | १८२ |
| १४२ | १८६ |
| १४३ | १८७ |
| १४४ | १८९ (ख) परि० आ० पु० न्त० |

| | |
|---|---|
| १९० | २८१ |
| १९१ | २८२ |
| १९४(घ) प० आ० पु० न्त० | २८६ |
| १९५ | २८८ |
| १९६ | २९१ (क) प० आ० पु० न्त० |
| १९९ | २९५ (क) प० आ० पु० न्त० |
| २०० | २९६ |
| २०१ | २९८ |
| २०२ | ३०१ |
| २०३ | ३०५ ( ) प० आ० पु० न्त० |
| २०७ | ३०६ (घ) प० आ० पु० न्त० |
| २१२ | ३०७ |
| २१७ | ३०८ |
| २२० | ३११ (ग) प० आ० पु० न्त० |
| २२४ | ३१९ |
| २२९ | ३२५ |
| २४२ | ३३० |
| २४५ | ३३६ |
| २४८ | ३४१ |
| २५० | ३४४(क)(ख) प० आ० पु० न्त० |
| २५७ | ३५७ |
| २६१ | ३५९ |
| २६६ | ३६१ |
| २६७ | ३६२ |
| २७५ | ३६९ (क) परि० आ० पु० न्त० |

३७९
३८०
३८१
३८७
३८९
४०२
४१६
४२३
४२४
४२५
४२६
४२७
४२८
४२९
४३१
४३८
४४३
४४५

४४६
४४९
४५० (ख) परि० आ० पु० न्त०
४५१
४५६
४५८
४६७
४७६
४७९ (ग) प० आ० पु० न्त०
४८९
४९१
४९८
५०३
५०४
५०५

———

## गोस्वामि पुस्तके पाठाः ।

पृष्ठे २ (क) १ विश्रामस्य १ पत्रस्य १ पृष्ठे
९ (क) (ख)
१२ (ग) टिप्पणीरूपेण पत्राग्रे लिखितं वर्त्तते ।
१७ (ख) १६ पत्रस्य २ पृष्ठेऽस्ति किंतु कृष्णनामनि श्लोक्तिः। कृट चासौ णश्चेति कृष्णः। इति। तथा च कृष्णशब्दे शक्तिः। इति। एतौ अंशौ न स्तः॥
५८ (क) ०
७७ (ग) १ विश्रामस्य १ पत्रस्य १ पृष्ठे लिखितमस्ति।

कोष्ठकान्तर्लिखिता अंशाः प्रायशो लेखकेनैवोपक्षिप्ताः।क्वचित् तु गोस्वामिपुस्तकादौ पत्राग्रे टिप्पणीरूपेण लिखिता वर्त्तन्ते। यथा मुद्रापुस्तके १८ पृष्ठादौ। मुद्रासंकेताशुद्धयः सुधाभिः परिहार्याः ॥

## सूचना

मुद्राप्रकाशसमाप्त्यनन्तरं शोधनावृत्तिकाले पुनः प्रार्थितेन श्रीगोस्वामिप्रियतमलालजीमहाशयेन परमकृपया स्वपुस्तकं सरयूप्रसादमिश्राय द्रष्टुं दत्तम्। तेन पुस्तकेन सह संमेलने कृते यत्र क्वचित् ये केचित् प्रभेदाः प्रदृष्टास्तेऽधस्तात् प्रदर्श्यन्ते —

| आदर्शपु० पाठः। | गोस्वामिपु० पाठः। | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| वि | | १० | १० |
| तस्मिन्ननुरागाय। क्रियाप्तेोपपाद्यते | | ११ | १३ |
| जातिः | सः | १० | १० |

| आदर्शपु० | गोस्वामिपु० | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| ओदनम् | ० | १९ | ११ |
| मिमरत् | मितरं | २२ | ७ |
| केश(घ)नखलो | केश(घ)लो | २९ | २० |
| मर्षत् | मर्शन् | ५० | १६ |
| अर्षत् | अर्शन् | ५० | १६ |
| च | ० | ५३ | ११ |
| तं | ० | ५५ | ७ |
| एव | ० | ५७ | १७ |
| वें | ० | ६२ | १४ |
| कल्पते | ० | ८७ | ७ |
| यथा | स यथा | १०३ | ३ |
| स्वात्मान | स्वा स्वात्मान | १०३ | ५ |
| कालज्ञान | ० | १०३ | १४ |
| स्पृह | स्पृहा | १०९ | १३ |
| पुष्प | पुष्पमेव | १२९ | १४ |
| न पुनन्ति | ० | १३२ | १८ |
| एतदेव | ० | १३५ | ६ |
| तः | त | १५१ | १७ |
| गीतायाम् | ० | १५८ | १६ |
| याम् | यात् । | १५८ | १९ |
| नवत्वं | न वत्वं | १६५ | १७ |
| चापि | वापि | १७९ | १८ |
| व अ | वम | १७९ | २२ |
| केल | केलि | २०३ | १९ |

| आदर्शपु० | गोस्वामिपु० | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| विशेषज्ञान | विशेष | २०४ | १४ |
| न | न तु | २०४ | १४ |
| त्वम् | त्वं च | २०८ | ८ |
| तारो | तारो हि | २१८ | ६ |
| को | को हि | २१९ | १२ |
| मे | दे | २२२ | १६ |
| त्मा चेति | त्मेति च | २२८ | ३ |
| । | । एवं | २३० | १२ |
| द्दा | द | २३० | १३ |
| घ्य | घ्य ते | २३० | १६ |
| ते | ति | २३७ | ३ |
| नात् | नत्वात् | २३९ | ६ |
| ष्य | ष्या | २३९ | ८ |
| र्थे | र्थे एव | २५५ | ६ |
| वि | ० | २६० | ५ |
| मागुणातीतो | ० | २६० | ७ |
| तथा तच्छाप | तयोच्छापा | २७१ | ८-९ |
| परि | पद् | २७२ | ११ |
| यत् | यतो हेतोर्यतः | २९६ | १२ |
| त्य मे | त्य ए | ३०२ | ८ |
| विक | क | ३०७ | १८ |
| वंश्य | वं | ३१४ | १९ |
| नरा | नवाराहरा | ३२३ | १५ |
| त्वस्वक | त्वक | ३३४ | ६ |

| आदर्श पु० | गोस्वामिपु० | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| अयम् | ० | ३३८ | ११ |
| यस्य | यथा | ३५३ | ११ |
| स्मि | स्मा | ३६५ | २ |
| र्यज्ञाना | त्वज्ञानज्ञाना | ३६७ | २० |
| त्वज्ञान | तु | ३६८ | १४ |
| तत् | यत् | ३६९ | ६ |
| रू | स्वरू | ३७१ | ६ |
| ब्रह्मेत्युपासीते | ब्रह्म उपासीदि | ३७८ | ५ |
| ते | दि | ३७८ | १६-१७-१८ |
| अन्तः | ऽन्तः | ३७९ | ६ |
| द्धे | न्धे | ३८१ | ११ |
| इति प | प | ३८२ | ३ |
| तिरुप | लीरूपं | ३८६ | १५ |
| वेत्तीति | वेत्तीत्यर्थः | ३९३ | ४ |
| मितर | मितरदेवता | ३९४ | ५ |
| मे | दे | ३९६ | ९ |
| अत्ययोऽ | ० | ३९६ | १३ |
| एवः | एवं | ४१५ | १ |
| भ्रष्टाः | भ्रष्टा वर्णाश्रमाद् भ्रष्टाः | ४६५ | ९ |
| वृते | वृतेन | ४९१ | २ |
| तच | यत्तच | ५०६ | १५ |
| अ | अ तु | ५०७ | ८ |
| यान्ति | याति | ५१३ | ४ |
| न्विता | न्वित | ५१३ | ४ |